VOLUME—I

# SARVAMULA GRANTHĀH

## PRASTHĀNATRAYI

[ *With the versions of the oldest manuscript of Sri Hrishikesha Thirtha, one of the direct disciples of Sri Anandathirtha* ]



SRI ĀNANDATHIRTHA BHAGAVATPĀDA

[ SRI MADHWACHARYA ]



AKHILA BHĀRAṬA

MĀDHWA MAHĀ MANDALA

PUBLICATION

SARVAMULA GRANTHĀH

[ WORKS OF SRI MADHWACHARYA ]

VOLUME-I [ PRASTHANATRAYI ]







This is an Akhila Bharatha
Madhwa Maha Mandala Publication
under the Presidentship of
SRI RAGHUVALLABHA THIRTHA
OF SRI PALIMAR MUTT, UDIPI







*Editing* :
BANNANJE GOVINDACHARYA
Isavasyam, UDIPI-3



*Finance* :
K. NARAYANA RAU
Gadag



*Printing* :
M. H. KAUJALGI
BRINDAVAN PRINTERS AND PUBLISHERS (P) LTD.
12/13 Lalbagh Fort Road, Bangalore-4



*Copies available at* :
AKHILA BHARATA MADHWA MAHAMANDALA
POORNAPRAJNA VIDYAPEETHA
Poornaprajna Nagara, Bangalore-28



*Price* :
Rs. ~~Eighty~~ [ Complete Set ]

सम्पुटम्—१ (प्रस्थानत्रयी)

# सर्वमूलग्रन्थाः

श्रीमदाचार्यपादशिष्यप्रवरश्रीहृषीकेशतीर्था-
दिलिखितप्रतनतरकोशानुसारिपाठसंवलितम् ,
पाठान्तरविशेषटिप्पण्यादिभिरुपोद्बलितम् ,
प्रस्थानत्रयव्याख्यारूपं प्रथमं सम्पुटम्



श्रीमदानन्दतीर्थभगवत्पादाः



अखिलभारतमाध्वमहामण्डलप्रकाशनम्

प्रकाशनाध्यक्षाः

श्रीरघुवल्लभतीर्थश्रीपादाः
श्रीपलिमारुमठः
उडुपी

*

सम्पादकः

बन्नञ्जे गोविन्दाचार्यः
ईशावास्यम्
उडुपी—३

*

शोधनकाले सहकर्तारः

बी. अनन्तकृष्ण उपाध्यायः
ए. नारायणतन्त्री
(दि.) एस्. नारायणाचार्यः
एस्. अनन्तरामाचार्यः
पादूरु वेङ्कटरमण आहितानलः

*

आर्थिकनिर्वहणम्

के. नारायणराव्
गदग

*



प्राप्तिस्थानम्

अखिलभारतमाध्वमहामण्डलम्
पूर्णप्रज्ञविद्यापीठमन्दिरम्
पूर्णप्रज्ञनगरम्
बेङ्गलूर्—२८

*

मूल्यम्
(समग्रस्य सम्पुटत्रयस्य)
अशीतिरूप्यकाणि

## पूर्वं वक्तव्यम्

बहोः कालात् श्रीमदानन्दतीर्थभगवत्पादानां सर्वमूलग्रन्था मुद्रिताः पुस्तकापणेषु नोपलभ्यन्त इति प्रकाशम्। तेन च सर्वापि सर्वमूलकृतिरेकत्र सम्पुटीकृत्य मुद्रिता करणीयेति सर्वेषामपि माध्वविदुषामैककण्ठ्यमासीत्।

अथच भगवत्पादानां शिष्यप्रवरेण साक्षादेव देवगुरुमुखात् सर्वमूलकृतीः श्रुतवता श्रीहृषीकेशतीर्थश्रीपादेन सर्वेऽपि भगवत्पादकृता ग्रन्थाः स्वहस्तेन लिपिबद्धाः कृताः। सा च पूजार्हा कृतिः सम्प्रत्यस्मन्मठे संरक्षिता वर्तते। ततश्च साक्षादधिकृततया ग्रन्थकर्तृपाठपरम्परेदानीमपि सुरक्षितेति महानयमाचार्यपादानामनुग्रह एव। प्रायः, सप्तशतवर्षेभ्यः पुरातनी, आचार्यपादसमकालीना तालपत्रमयी कृतिरियमेकैवेति भाति। तत्र पुनराचार्यपादशिष्येष्वन्यतम एव तत्कृतीः सङ्कलय्यैवमस्मत्कृते विलिख्य न्यधापयदित्यपूर्वोऽयं योगः।

तेन च वयं विचारयन्तोऽभूम, एतावन्तं कालममुद्रित आचार्यपादकृतीनां प्रतनः पाठः समग्रोऽपीदम्प्रथमतया सद्ग्रन्थस्तत्त्वबुभुत्सुभ्यो देय इति। तदर्थं च प्रथमं मुद्रणाय प्रयतितं च। तदानीमेव श्रीयुतः के. नारायणराव् महाशयः सात्त्विकश्रद्धया सर्वमूलमुद्रणाय सर्वमार्थिकसाहाय्यं दातुं स्वयं पुर आगमत्। तदात्वे माध्वमहामण्डलाध्यक्षाः श्रीपेजावरमठाधीशाः श्रीविश्वेशतीर्थश्रीपादा एतां प्रवृत्तिमस्मासु सूचयामासुः। मुद्रणाय प्रयतन एकत्र प्रेरणा, तत्समकालमेव साहाय्यदानायापरत्र प्रेरणेति भगवत्तमानामाचार्यपादानामेवेयमनुग्रहप्रसररीतिः।

ततश्चास्मन्मठे सुरक्षितं प्रतनपाठं मुद्रयित्वा श्रीमाध्वमहामण्डलद्वारा प्रकाशनाय सम्प्रति पर्यायपीठमधिरूढेभ्यः श्रीपेजावरमठाधीशश्रीविश्वेशतीर्थश्रीपादेभ्यः प्रादाम। सम्प्रति च श्रीभण्डारकेरिमठाधीशश्रीविद्यामान्यतीर्थश्रीपादानां मण्डलाध्यक्ष्ये तस्यैतस्योद्दिष्टस्य प्रकाशनस्य प्रथमं सम्पुटं श्रीमध्वनवमीमहोत्सवपुण्यावसरे प्राकाश्यमानीयत इति कस्य नाम न सन्तोषपदम्। आशास्महे, अवशिष्टोऽपि ग्रन्थभागः सम्पुटद्वयात्मनाऽचिरादेवाध्येतॄणां हस्तमेतीति।

अत्र प्रकाशनावसरे, मूलकोशादिपरिशोधनेन, पाठान्तरविवेचनेन, तथोपयुक्तस्थलेषु समुचितटिप्पण्यादिसंयोजनेन च प्रकाशनं सवैदुष्यं सम्पाद्य आचार्यपादसेवायां महान्तं भागं निरूढवतः श्रीमतो बन्नञ्जेपद्दोपाह्वस्य गोविन्दाचार्यस्य श्रीमदाचार्यपादानामनुग्रहः सदा रक्षा भवत्विति सहार्दमाशास्महे।

अथचास्मिन् कोशान्तरसन्तुलनादिकर्मणि सहकृतवतां सर्वेषां विदुषां श्रेयः प्रशास्यते। तथा, एतन्मुद्रणाद्युपयुक्तनिखिलार्थसार्थदानेन श्रीमान् के. नारायणराव् महाशयः आत्मनो दानित्वं सफलीचकार। आत्मनोऽर्थं सार्थं चकार। शुभायति शुभोदर्कं च तस्य दानं श्रेयसा प्रेयसा च तं संयोजयतु। मुद्रणकर्मणि श्रद्धया कृतश्रमं श्रीकौजलगीमहोदयं सानन्दमभिनन्दामहे।

सर्वानपि भगवान् शुभेन संयोजयत्विति—

माघशुक्लनवमी

[ मध्वनवमी ]

शकाब्दाः १८९०

प्रकाशनाध्यक्षाः

श्रीरघुवल्लभतीर्थश्रीपादाः

श्रीपलिमारुमठः

उडुपी ( रूप्यपीठपुरम् )

## प्रस्थानत्रयी

# सूत्रप्रस्थानम्

## भाष्यम्

ॐ॥ नारायणं गुणैः सर्वैरुदीर्णं दोषवर्जितम् ।
ज्ञेयं गम्यं गुरूंश्चापि नत्वा सूत्रार्थ उच्यते ॥*॥

द्वापरे सर्वत्र ज्ञान आकुलीभूते तन्निर्णयाय ब्रह्मरुद्रेन्द्रादिभिरर्थितो भगवान् नारायणो व्यासत्वेनावततार । अथेष्टानिष्टप्राप्तिपरिहारेच्छूनां तद्योगमविजानतां तज्ज्ञापनार्थं वेदमुत्सन्नं व्यञ्जयंश्चतुर्धा व्यभजत् । चतुर्विंशतिधैकशतधा सहस्रधा द्वादशधा च । तदर्थनिर्णयाय

## अनुव्याख्यानम्

ॐ॥ नारायणं निखिलपूर्णगुणैकदेहं
निर्दोषमाप्यतममप्यखिलैः सुवाक्यैः ।
अस्योद्भवादिदमशेषविशेषतोऽपि
वन्द्यं सदा प्रियतमं मम सन्नमामि ॥

तमेव शास्त्रप्रभवं प्रणम्य
जगद्गुरूणां गुरुमञ्जसैव ।
विशेषतो मे परमाख्यविद्या–
व्याख्यां करोम्यन्वपि चाहमेव ॥*॥

## न्यायविवरणम्

ॐ॥ चेतनाचेतनजगन्नियन्त्रेऽशेषसंविदे ।
नमो नारायणायाजशर्वशक्रादिवन्दित ॥

कृत्वा भाष्यानुभाष्येऽहमपि वेदार्थसत्पतेः ।
कृष्णस्य सूत्रानुव्याख्यासन्न्यायविवृतिं स्फुटम् ॥
करोमि मन्दबुद्धीनां बुधानां चोपकारिकाम् ।
प्रीत्यै तस्यैव देवस्य तत्प्रसादपुरःसरः ॥*॥

भाष्यम्

ब्रह्मसूत्राणि चकार । तच्चोक्तं स्कान्दे—

["नारायणाद् विनिष्पन्नं ज्ञानं कृतयुगे स्थितम् । किञ्चित् तदन्यथा जातं त्रेतायां द्वापरेऽखिलम्। गौतमस्य ऋषेः शापाज्ज्ञाने त्वज्ञानतां गते । सङ्कीर्णबुद्धयो देवा ब्रह्मरुद्रपुरःसराः। शरण्यं शरणं जग्मुर्नारायणमनामयम् । तैर्विज्ञापितकार्यस्तु भगवान् पुरुषोत्तमः । अवतीर्णो महायोगी सत्यवत्यां पराशरात् । उत्सन्नान् भगवान् वेदानुज्जहार हरिः स्वयम् । चतुर्धा व्यभजत् तांश्च चतुर्विंशतिधा पुनः। शतधा चैकधा चैव तथैव च सहस्रधा । कृष्णो द्वादशधा चैव पुनस्तस्यार्थवित्तये। चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा। अल्पाक्षरमसन्दिग्धं सारवद् विश्वतोमुखम् । अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः । निर्विशेषितसूत्रत्वं ब्रह्मसूत्रस्य चाप्यतः । यथा व्यासत्वमेकस्य कृष्णस्यान्ये विशेषणात् । सविशेषणसूत्राणि ह्यपराणि विदो विदुः । मुख्यस्य निर्विशेषेण शब्दोऽन्येषां विशेषतः । इति वेदविदः प्राहुः शब्दतत्त्वार्थवेदिनः । सूत्रेषु येषु सर्वेऽपि निर्णयाः समुदीरिताः । शब्दजातस्य सर्वस्य यत्प्रमाणश्च निर्णयः । एवंविधानि सूत्राणि कृत्वा व्यासो महायशाः । ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु । ज्ञानं संस्थाप्य भगवान् क्रीडते परमेश्वरः" इत्यादि ॥*॥]

ॐ अथातो ब्रह्मजिज्ञासा ॥१॥*

अथशब्दो मङ्गलार्थोऽधिकारानन्तर्यार्थश्च । अतःशब्दो हेत्वर्थः । उक्तं च गारुडे—

अनुव्याख्यानम्

प्रादुर्भूतो हरिर्व्यासो विरिञ्चभवपूर्वकैः। अर्थितः परविद्याख्यं चक्रे शास्त्रमनुत्तमम् ॥३॥ गुरुर्गुरूणां प्रभवः शास्त्राणां बादरायणः । यतस्तदुदितं मानमजादिभ्यस्तदर्थतः ॥४॥ वक्तृश्रोतृप्रसक्तीनां यदाप्तिरनुकूलता । आप्तवाक्यतया तेन श्रुतिमूलतया तथा ॥५॥ युक्तिमूलतया चैव प्रामाण्यं त्रिविधं महत् । दृश्यते ब्रह्मसूत्राणामेकधाऽन्यत्र सर्वशः ॥६॥ अतो नैतादृशं किञ्चित् प्रमाणतममिष्यते । स्वयं कृताऽपि तद्व्याख्या क्रियते स्पष्टतार्थतः ॥७॥*॥ तत्र ताराथमूलत्वं सर्वशास्त्रस्य चेष्यते । सर्वत्रानुगतत्वेन पृथगोङ्क्रियतेऽखिलैः ॥८॥ ओतत्ववाची ह्योङ्कारो वक्त्यसौ तद्गुणोततताम् । स एव ब्रह्मशब्दार्थो नारायणपदोदितः ॥९॥ स एव भर्गशब्दार्थो व्याहृतीनां च भूमतः । भावनाच्चैव सुत्वाच्च सोऽयं पुरुष इत्यपि ॥१०॥ स एव सर्ववेदार्थो जिज्ञास्योऽयं विधीयते । ज्ञानी प्रियतमोऽतो मे तं विद्वानेव चामृतः ॥ ॥११॥ वृणुते यं तेन लभ्य इत्याद्युक्तिबलेन हि । जिज्ञासोत्थज्ञानजात् तत्प्रसादादेव मुच्यते॥ ॥१२॥ द्रव्यं कर्म च कालश्च स्वभावो जीव एव च । यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया ॥ ॥१३॥ नर्ते त्वत् क्रियते किञ्चिदित्यादेर्न हरिं विना । ज्ञानस्वभावतोऽपि स्यान्मुक्तिः कस्यापि

१ "पुरुषोत्तमः" २ "विरिञ्चशिवपूर्वकैः" इति प्र. पाठौ । * अध्येतारः सूत्रपठनकाले प्रतिसूत्रमाद्यन्तयोः पृथगोङ्कारमुच्चारयेयुः । सूत्राणां प्रत्येकं मन्त्ररूपत्वेन तत्रोङ्कारोच्चारणेन विशेषादृष्टस्मरणात्। प्राचीनकोशेष्वोङ्कारस्यालेखनान्नात्र मुद्रितम् ।

भाष्यम्

"अथातश्शब्दपूर्वाणि सूत्राणि निखिलान्यपि। प्रारभन्ते नियत्यैव तत् किमत्र नियामकम्। कश्चार्थस्तु तयोर्विद्वन् कथमुत्तमता तयोः। एतदाख्याहि मे ब्रह्मन् यथा ज्ञास्यामि तत्त्वतः। एवमुक्तो नारदेन ब्रह्मा प्रोवाच सत्तमः। आनन्तर्येऽधिकारस्य मङ्गलार्थे तथैव च। अथशब्दस्त्वतश्शब्दो हेत्वर्थे समुदीरितः। परस्य ब्रह्मणो विष्णोः प्रसादादिति वा भवेत्। स हि सर्वमनोवृत्तिप्रेरकः समुदाहृतः। सिसृक्षोः परमाद् विष्णोः प्रथमं द्वौ विनिस्सृतौ। ओङ्कारश्चाथशब्दश्च तस्मात् प्राथमिकौ क्रमात्। तद्धेतुत्वं वदंश्चापि तृतीयोऽत उदाहृतः। अकारः सर्ववागात्मा परब्रह्माभिधायकः। तथौ प्राणात्मकौ प्रोक्तौ व्याप्तिस्थितिविधायकौ। अतश्च पूर्वमुच्चार्याः सर्वे एते सतां मताः। अथातश्शब्दयोरेवं वीर्यमाज्ञाय तत्त्वतः। सूत्रेषु तु महाप्राज्ञास्तावेवाऽदौ प्रयुञ्जते" इति।

अनुव्याख्यानम्

हि क्वचित् ॥१४॥ अज्ञानां ज्ञानदो विष्णुर्ज्ञानिनां मोक्षदश्च सः। आनन्ददश्च मुक्तानां स एवैको जनार्दनः ॥१५॥ इत्युक्तेर्बन्धमिथ्यात्वं नैव मुक्तिरपेक्षते। मिथ्यात्वमपि बन्धस्य न प्रत्यक्षविरोधतः ॥१६॥ मिथ्यात्वं यदि दुःखादेस्तद्वाक्यस्याग्रतो भवेत्। मिथ्यायाः साधकत्वं च न सिद्धं प्रतिवादिनः ॥१७॥ तच्च मिथ्याप्रमाणेन सता वा साध्यते त्वया। सता चेद् द्वैतसिद्धिः स्यान्न सिद्धं चान्यसाधनम् ॥१८॥ साधकत्वं सतस्तेन साक्षिणा सिद्धिमिच्छता। स्वीकृतं ह्यविशेषस्य साध्या साधकता पुनः॥१९॥ तच्चाविशेषमानेन साध्यमित्यनवस्थितिः। अनङ्गीकुर्वतां विश्वसत्यतां तन्न वादिता ॥२०॥ तस्माद् व्यवहृतिः सर्वा सत्येत्येव व्यवस्थिता। व्यावहारिकमेतस्मात् सत्यमित्येव चाऽगतम् ॥२१॥ व्यवहारसतश्चापि साधकत्वं तु पूर्ववत्। सत्त्रैविध्यं च मानेन सिद्ध्येत् केनेति पृच्छ्यते ॥२२॥ तस्याप्युक्तप्रकारेण नैव सिद्धिः कथञ्चन। वैलक्षण्यं सदसतोरप्येतेन निषिध्यते ॥२३॥ वैलक्षण्यं सतश्चापि स्वयं सद्भेदवादिनः। असतश्चापि विश्वस्य तेनानिष्टं कथं भवेत् ॥२४॥ यद्युच्यतेऽपि सर्वस्मादिति सद्भेदसंस्थितिः। सन्मात्रत्वं ब्रह्मणोऽपि तस्मात् तदपि नो भवेत् ॥२५॥ ज्ञानबाध्यत्वमपि तु न सिद्धं प्रतिवादिनः। विज्ञातस्यान्यथा सम्यग् विज्ञानं ह्येव तन्मतम् ॥२६॥ असद्विलक्षणज्ञप्त्यै ज्ञातव्यमसदेव हि। तस्मादसत्प्रतीतिश्च कथं तेन निवार्यते ॥२७॥ अन्यथात्वमसत् तस्माद् भ्रान्तावेव प्रतीयते। सत्त्वस्यासत एवं हि स्वीकार्यैव प्रतीतता ॥२८॥ तस्यानिर्वचनीयत्वे स्यादेव ह्यनवस्थितिः। निर्विशेषे स्वयं भाते किमज्ञानावृतं भवेत् ॥२९॥ मिथ्याविशेषोऽप्यज्ञानसिद्धिमेव ह्यपेक्षते। नचाऽवरणमज्ञानमसत्ये तेन चेष्यते ॥ ३० ॥ अप्रकाशस्वरूपत्वाज्जडेऽज्ञानं न मन्यते। अज्ञानाभावतः शास्त्रं सर्वं व्यर्थीभविष्यति ॥३१॥

न्यायविवरणम्

जीवव्यतिरिक्तेश्वराभावात् तस्य च स्वयम्प्रकाशत्वान्न[2] जिज्ञास्यतेति प्राप्ते—"अथातो ब्रह्मजिज्ञासा"

---

१ "कश्चार्थश्च" २ "स्वप्रकाशत्वान्न" इति प्र. पाठौ।

भाष्यम्

अधिकारश्चोक्तो भागवततन्त्रे—

"मन्दमध्योत्तमत्वेन त्रिविधा ह्यधिकारिणः। तत्र मन्दा मनुष्येषु य उत्तमगणा मताः। मध्यमा ऋषिगन्धर्वा देवास्तत्रोत्तमा मताः। इति जातिकृतो भेदस्तथाऽन्यो गुणपूर्वकः। भक्तिमान् परमे विष्णौ यस्त्वध्ययनवान् नरः। अधमः शमादिसंयुक्तो मध्यमः स उदाहृतः[१]। आब्रह्मस्तम्बपर्यन्तमसारं चाप्यनित्यकम्। विज्ञाय जातवैराग्यो विष्णुपादैकसंश्रयः। स उत्तमोऽधिकारी स्यात् सन्यस्ताखिलकर्मवान्" इति। "अध्ययनमात्रवतः", "नाविशेषात्" इति चोपरि। "शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽत्मानं पश्येत्", "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्[२]" "यमेवैष वृणुते तेन लभ्यः", "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः" इत्यादिश्रुतिश्च[३]। व्योमसंहितायां च— "अन्त्यजा

अनुव्याख्यानम्

अज्ञानस्य च मिथ्यात्वमज्ञानादिति कल्पने। अनवस्थितिस्तथाच स्यादन्योन्याश्रयताऽथवा। ॥३२॥ स्वभावाज्ञानवादस्य निर्दोषत्वान्न तद् भवेत्। अविद्यादुर्घटत्वं चेत् स्यादात्माऽपि हि तादृशः ॥३३॥ अतोऽधिकारिविषयफलयोगादिवर्जितम्। अनन्तदोषदुष्टं च हेयं मायामतं शुभैः ॥३४॥ सत्यत्वात् तेन दुःखादेः प्रत्यक्षेण विरोधतः। न ब्रह्मतां वदेद् वेदो जीवस्य हि कथञ्चन ॥३५॥ यजमानप्रस्तरत्वं यथा नार्थः श्रुतेर्भवेत्। ब्रह्मत्वमपि जीवस्य प्रत्यक्षस्याविशेषतः ॥३६॥ सार्वज्ञ्यादिगुणं जीवाद् भिन्नं ज्ञापयति श्रुतिः। ईशं तामुपजीव्यैव वर्तते ह्यैक्यवादिनी ॥३७॥ उपजीव्यविरोधेन नास्यास्तन्मानता भवेत्। स्वातन्त्र्ये च विशिष्टत्वे स्थानमत्यैक्ययोरपि ॥३८॥ सादृश्ये चैक्यवाक् सम्यक् सावकाशा यथेष्टतः। अवकाशोज्झिता भेदश्रुतिर्नातिबला कथम् ॥३९॥ अज्ञानासम्भवादेव मिथ्याभेदो निराकृतः। अतो यथार्थबन्धस्य विना विष्णुप्रसादतः ॥४०॥ अनिवृत्तेस्तदर्थं हि जिज्ञासाऽत्र विधीयते। यथा दृष्ट्या प्रसन्नः सन् राजा बन्धापनोदकृत् ॥४१॥ एवं दृष्टः स भगवान् कुर्याद् बन्धविभेदनम्। कार्यता च न काचित् स्यादिष्टसाधनतां विना ॥४२॥ कार्यं नहि क्रियाव्याप्यं निषिद्धस्य समत्वतः। न भविष्यत्क्रिया कार्यं स्रक्ष्यतीश इति ह्यपि ॥४३॥ कार्यं स्यान्नैव चाकर्तुमशक्यं कार्यमिष्यते। साम्यादेव निषिद्धस्य तदिष्टं साधनं तथा ॥४४॥ कार्यं साधनमिष्टस्य भगवानिष्टदेवता। मुख्येष्टं वा सुमनसां प्रेयस्तदिति च श्रुतिः ॥४५॥ प्राणबुद्धिमनःखात्मदेहापत्य-

न्यायविवरणम्

इत्याह। "तद् विजिज्ञासस्व तद् ब्रह्म" इति ब्रह्मशब्देन पूर्णगुणत्वोक्तेर्नानुभवसिद्धाल्पगुणजीवाभेदः। "अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणाः" इति श्रुतेरिति[४] ॥१॥

---

१ "समुदाहृतः" इति प्र. पाठः। २ "निर्वेदमायान्नास्त्यकृतः कृतेन। तद् विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्", "यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्", "यस्य देवे- " इत्यादिसमग्रश्रुतिः प्र. पाठे पठ्यते। ३ "श्रुतिभ्यश्च" इति प्र. पाठः। ४ प्र. पाठे "श्रुतेः" इत्यतः परं इतिपदं न पठ्यते।

भाष्यम्

अपि ये भक्ता नामज्ञानाधिकारिणः। स्त्रीशूद्रब्रह्मबन्धूनां तत्र[1] ज्ञानेऽधिकारिता। एकदेशे परोक्षे तु नच[2] ग्रन्थपुरःसरे। त्रैवर्णिकानां वेदोक्ते सम्यग् भक्तिमतां हरौ। आहुरप्युत्तमस्त्रीणामधिकारं तु वैदिके। यथोर्वशी यमी चैव शच्याद्याश्च तथाऽपराः" इति।

यतो नारायणप्रसादमृते न मोक्षः, नच ज्ञानं विनाऽत्यर्थप्रसादः, अतो ब्रह्मजिज्ञासा कर्तव्या।

"यत्रानवसरोऽन्यत्र पदं तत्र प्रतिष्ठितम्। वाक्यं वेति सतां नीतिः सावकाशे न तद् भवेत्" इति ब्रह्मसंहितायाम्[3]।

"तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते", "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः", "यमेवैष वृणुते तेन लभ्यः", "आत्मा वा अरे द्रष्टव्यः[4]"

अनुव्याख्यानम्

धनादयः। यत्सम्पर्कात् प्रिया आसंस्ततः को न्वपरः प्रियः ॥४६॥ इत्यादिवाक्यैराकाङ्क्षा सन्निधिर्योग्यता यतः। अस्मिन्नेव[5] समस्तस्येतीष्टे व्युत्पत्तिरिष्यते ॥४७॥ अस्त्यपूपांस्तव भ्रातेत्यादावावापतोऽपि च। उद्वापाद् वर्तमानत्वादाकाङ्क्षादिबलादपि ॥४८॥ बालो व्युत्पत्तिमप्येति नाऽनयेत्यादिवाक्यतः। आनीयमानदृष्ट्यैव व्युत्पत्तेः सम्भवे सति ॥४९॥ एष्यदानयनायायं कुत एव प्रतीक्षते। व्युत्पन्नो वर्तमाने तु क्रियाशब्दे भविष्यति ॥५०॥ पुनर्दृष्ट्यैव शब्दश्रुत् पश्चाद् व्युत्पत्तिमेष्यति। वर्तमानमतीतं च भविष्यदिति च क्रमात् ॥५१॥ आकाङ्क्षादियुतं यस्माद् विधेर्व्युत्पादनं कुतः। दृष्ट्या ज्ञातपदार्थस्य पदाकाङ्क्षा भविष्यति ॥५२॥ व्युत्पत्तिः प्रथमा तस्माद् वर्तमाने गते ततः। इष्टमाकाङ्क्षते सर्वो न प्रवृत्तिमपेक्षते ॥५३॥ अपरोक्षं परोक्षं वा ज्ञानमिष्टस्य साधनम्। क्वापि चेष्टा तदर्था स्याद्दत्तिर्हि रसवित्तये ॥५४॥ वाक्यार्थज्ञानमात्रेण क्वचिदिष्टं भवेदपि। नच स्रुकस्रुववद्यागादावतात्पर्यं[6] श्रुतेर्भवेत् ॥५५॥ यत्किञ्चित्करणस्यापि यज्ञतैवान्यथा भवेत्। तस्मादुपासनार्थं च स्वार्थे तात्पर्यवद् भवेत्। ॥५६॥ इति शब्दोन्नयेऽग्नावित्यप्युन्नीते स्मृतिर्भवेत्। इतिशब्दव्यपेतानि ह्यपि सन्ति वचांस्यलम् ॥५७॥ आत्मानमेवेत्यादीनि योगेऽग्नावपि तत् समम्। एकवाक्यत्वयोगे तु वेदस्यापि ह्यशेषतः ॥५८॥ वाक्यभेदो न युक्तः स्याद् योगश्च स्यान्महाफले। इति ब्रूयादिति वचो गतमग्नौ समीपगम् ॥५९॥ कल्पनागौरवं चेत् स्यात् पृथक् तात्पर्यसम्भवे। कल्पनागौरवादेव पदार्था न स्युरेव हि ॥६०॥ प्रमाणावगतत्वं चेत् तात्पर्याणां तथैव हि।

---

१ "तन्त्रज्ञानेऽधिकारिता" इति प्र. पाठः। प्राचीनपाठे त्वयमर्थः—तत्र चतुर्वर्णान्तर्गतस्त्रीपुरुषेषु शूद्राणां स्त्रीणां ब्रह्मबन्धूनां च तत्र वेदोक्ते विषये न ग्रन्थपुरःसरं पाठाधिकारः। किन्तु परोक्ते तदप्येकदेशे ज्ञानेऽधिकारिता। त्रैवर्णिकानां ग्रन्थपुरःसरं वेदाधिकार इति। एतदेवोक्तम्— "स्त्रीशूद्रब्रह्मबन्धूनां त्रयी न श्रुतिगोचरा। इति भारतमाख्यानं कृपया मुनिना कृतम्" इति। २ "नतु" ३ "बृहत्संहितायाम्" इति प्र. पाठौ। ४ प्र.पाठे "द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति समग्रं श्रुतिवाक्यं पठ्यते। ५ "तस्मिन्नेव" ६ "तात्पर्यकल्पने" इति प्र. पाठौ।

भाष्यम्

इत्यादिश्रुतिस्मृतिभ्यः। "कर्मणा त्वधमः प्रोक्तः प्रसादः श्रवणादिभिः। मध्यमो ज्ञानसम्पत्त्या प्रसादस्तूत्तमो मतः। प्रसादात्त्वधमाद् विष्णोः स्वर्गलोकः प्रकीर्तितः। मध्यमाज्जनलोकादिरुत्तमस्त्वेव मुक्तिदः। श्रवणं मननं चैव ध्यानं भक्तिस्तथैव च। साधनं ज्ञानसम्पत्तौ प्रधानं नान्यदिष्यते। नचैतानि विना कश्चिज्ज्ञानमाप कुतश्चन" इति नारदीये।

ब्रह्मशब्दश्च विष्णावेव—

"यमन्तः समुद्रे कवयोऽवयन्ति" इत्याद्युक्त्वा "तदेव ब्रह्म परमं कवीनाम्" इति हि श्रुतिः[1]। "तन्नो विष्णुः" इति वचनाद् विष्णुरेव हि तत्रोच्यते।

नचेतरशब्दात् तत्प्राप्तिः—

"नामानि विश्वाऽभि न सन्ति लोके यदाविरासीदनृतस्य सर्वम्। नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति" इति भाल्लवेयश्रुतेः[2]। "यो देवानां नामधा एक एव" इति चैवशब्दान्नचान्येषां सर्वनामता[3]। "अजस्य नाभौ" इति तस्य हि लिङ्गम्[4]।

अनुव्याख्यानम्

तस्मात् पदार्थे वाक्यार्थे तात्पर्यमुभयत्र च ॥६१॥ पृथगेव च वाक्यत्वं पृथगन्वयतो भवेत्। अवान्तरत्वाद् वाक्यानां वाक्यभेदो न दूषणम् ॥६२॥ अङ्गीकृतत्वादपि तैः पदार्थानां पृथक् पृथक्। क्रियापदेनान्वयस्य वाक्यभेदाद्धि दूषणम् ॥६३॥ प्रत्यक्षादिविरोधेऽतो[5] गौणार्थस्यापि सम्भवात्। अतात्पर्यं पदार्थेऽपि न कल्प्यमविरोधतः ॥६४॥ अतो ज्ञानफलान्येव कर्माणि ज्ञानमेव हि। मुख्यप्रसाददं विष्णोर्जिज्ञासायाश्च तद् भवेत् ॥६५॥ कर्तव्या तेन जिज्ञासा श्रुतिप्रामाण्ययोगतः। प्रत्यक्षवच्च प्रामाण्यं स्वत एवाऽगमस्य हि ॥६६॥ अनवस्थाऽन्यथा हि स्यादप्रामाण्यं तथाऽन्यतः। मिथ्याज्ञप्तिप्रलम्भादेस्तेन वेदविरोधि यत् ॥६७॥ न मानमपि वेदानामङ्गीकार्या हि नित्यता। नहि धर्मादिसिद्धिः स्यान्नित्यवाक्यं विना क्वचित्। ॥६८॥ अविप्रलम्भस्तज्ज्ञानं तत्कृतत्वादयोऽपि च। कल्प्या गौरवदोषेण पुंवाक्यं ज्ञापकं न तत् ॥६९॥ प्रत्यक्षः कस्यचिद् धर्मो वस्तुत्वादिति चोदिते। न बुद्धो धर्मदर्शी स्यात् पुंस्त्वादित्यनुमाहतिः ॥७०॥ अधर्मवादिनो वाक्यमप्रयोजनमेव हि। धर्माभावोऽपि नो तेन प्रत्यक्षावगतो भवेत् ॥७१॥ अतः संशयसम्पत्तौ वाक्यं प्रत्यक्षवत् प्रमा। शक्तिश्चैवान्विते स्वार्थे शब्दानामनुभूयते ॥७२॥ अतोऽन्विताभिधायित्वं गौरवं कल्पनेऽन्यथा। नचाशक्याभिधायित्वं[6] प्रवृत्तिश्च द्विधाऽन्यथा ॥७३॥ एतत् सर्वं तर्कशास्त्रे ब्रह्मतर्के हि[7] विस्तरात्।

---

१ "'यमन्तः समुद्रे कवयोऽवयन्ति यदक्षरे परमे प्रजाः। यतः प्रसूता जगतः प्रसूती तोयेन जीवान् व्यससर्ज भूम्याम्' इत्याद्युक्त्वा 'तदेवर्तं तद्‌ सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम्' इति हि श्रुतिः" इति प्र.पाठः। २ "भाल्लवेयश्रुतिः" ३ "'यो देवानां नामधा एक एव तं सम्प्रश्नं भुवना यन्त्यन्या' इत्येवशब्दान्नान्येषां सर्वनामता" ४ "'अजस्य नाभावध्येकमर्पितं यस्मिन् विश्वानि भुवनानि तस्थुः' इति हि विष्णोर्लिङ्गम्" ५ "विरोधे तु" ६ "नचाशक्त्याऽभिधायित्वं" ७ "ब्रह्मतर्के च" इति प्र. पाठः।

भाष्यम्

नच प्रसिद्धार्थं[१] विनाऽन्यो युज्यते।

"अजस्य नाभाविति यस्य नाभेरभूच्छुतेः पुष्करं लोकसारम्। तस्मै नमो व्यस्तसमस्तविश्वविभूतये विष्णवे लोककर्त्रे" इति स्कान्दे[२]। "परो दिवा पर एना पृथिव्या" इति च समाख्याश्रुतौ[३] "यं कामये तं तमुग्रं कृणोमि"[४] इत्युक्त्वा "मम योनिरप्स्वान्तः समुद्रे" इत्याह।

उग्रो रुद्रः। समुद्रेऽन्तर्नारायणः। प्रसिद्धत्वात् सूचितत्वाच्चार्थस्य[५]। नचाविरोधे प्रसिद्धः परित्यज्यते। उक्तन्यायेन च श्रुतय एतमेव वदन्ति।

"वेदे रामायणे चैव पुराणे भारते तथा। आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते" इति हरिवंशेषु।

नचेतरग्रन्थैर्विरोधः[६]—

"एष मोहं सृजाम्याशु यो जनान्मोहयिष्यति। त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय। अतथ्यानि वितथ्यानि दर्शयस्व महाभुज। प्रकाशं कुरु चाऽऽत्मानमप्रकाशं च

अनुव्याख्यानम्

उक्तं विद्यापृथक्त्वात्तु सङ्क्षेपेणात्र सूचितम् ॥७४॥ प्रमाणन्यायसच्छिक्षा क्रियते तर्कशास्त्रतः। मानन्यायैस्तु तत्सिद्धैर्मीमांसा मेयशोधनम् ॥७५॥ ब्रह्मतर्के च भगवान् स एव कृतवान् प्रभुः। पञ्चाशत्कोटिविस्तारान्नारायणतनौ कृतात् ॥७६॥ उद्धृत्य पञ्चसाहस्रं कृतवान् बादरायणः। अतस्तदर्थं सङ्क्षेपादत इत्यभ्यसूचयत् ॥७७॥ यतोऽनुभवतः सर्वं सिद्धमेतदतोऽपिच। देवैश्च दुर्गमार्थेषु व्यापृतो नातिविस्तृतिम् ॥७८॥ चकारैता ह्यवज्ञेया युक्तयः प्रतिपक्षगाः। प्रत्यक्षेक्षाक्षमः पक्षं कमेवात्राभिवीक्षते ॥७९॥ तस्मादक्षमपक्षत्वान्मोक्षशास्त्रेऽभ्युपेक्षितः। स्वयं भगवता विष्णुर्ब्रह्मेत्येतत् पुरोदितम् ॥८०॥ स विष्णुराह हीत्यन्ते देवशास्त्रस्य तेन हि। आद्यन्तं देवशास्त्रस्य स्वयं भगवता कृतम् ॥८१॥ मध्यं तदाज्ञया पैलशेषाभ्यां[७] कृतमञ्जसा। अतस्तत्रैव विष्णुत्वसिद्धेर्ब्रह्मेत्यसूचयत् ॥८२॥ दोषारच्छिद्रशब्दानां पर्यायत्वं यतस्ततः। गुणा नारा इति ज्ञेयास्तद्वान् नारायणः स्मृतः ॥८३॥ ब्रह्मशब्दोऽपि हि गुणपूर्तिमेव वदत्ययम्। अतो नारायणस्यैव जिज्ञासाऽत्र विधीयते ॥८४॥ सिद्धत्वाद् ब्रह्मशब्दस्य विष्णौ स्पष्टतया श्रुतौ। अम्भस्यपार इत्युक्तो नारायणपदेरितः[८]॥८५॥ आपो नारा इति ह्याह स एवाप्स्वन्तरीरितः। कामतो विधिरुद्रादिपददात्र्या स्वयं श्रिया[९] ॥

---

१ "अन्योऽर्थो युज्यते" २ "इति च स्कान्दे" ३ "इति समाख्याश्रुतौ" इति प्र. पाठाः। ४ इतः परं प्र.पाठे "तं ब्रह्माणं तमृषिं त सुमेधाम्" इत्यधिकम्। ५ "सूचितत्वाच्चास्यार्थस्य" ६ "ग्रन्थविरोधः" ७ "शेषपैलाभ्यां" ८ "नारायणपदोदितः" इति प्र. पाठाः। ९ "दात्रा स्वयं श्रिया" इति प्राचीनकोशेषु पठ्यते। स्खलितमिति सम्भाव्यते। अदितिश्रुतौ "स यद्यदेव" इति पुंलिङ्गेन परामर्शवत् "पुम्भ्यः शक्तिमती नारी पुंशब्देनैव भण्यते" इति वा व्याख्येयम्।

भाष्यम्

च मां कुरु" इति वाराहवचनात्। शैवे च स्कान्दे– "श्वपचादपि कष्टत्वं ब्रह्मेशानादयः सुराः। तदैवाच्युत यान्त्येव यदैव त्वं पराङ्मुखः" इति। ब्राह्मे च ब्रह्मवैवर्ते— "नाहं नच शिवोऽन्ये च तच्छक्त्येकांशभागिनः। बालः क्रीडनकैर्यद्वत् क्रीडतेऽस्माभिरच्युतः" इति।

नच वैष्णवेषु तथा। तच्च "एष मोहम्" इत्युक्तम् ॥*॥

॥*॥ इति प्रथममधिकरणम् ॥*॥

ब्रह्मणो लक्षणमाह–

## ॥ जन्माद्यस्य यतः ॥२॥

सृष्टिस्थितिसंहारनियमनज्ञानाज्ञानबन्धमोक्षा यतः।

"उत्पत्तिस्थितिसंहारा नियतिर्ज्ञानमावृतिः। बन्धमोक्षौ च पुरुषाद् यस्मात् स हरिरेकराट्" इति स्कान्दे। "यतो वा इमानि भूतानि जायन्ते", "य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा", "चतुर्भिः साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीँरवीविपत्", "परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति",

अनुव्याख्यानम्

॥८६॥ योनित्वेनाऽत्मनो विष्णोस्तिष्ठन्तीत्युदितस्य च। यस्मिन् देवा अधीत्युक्त्वा समुद्रं स्थानमेव च ॥८७॥ नाम चाक्षरमित्येव ऋच इत्युदितं तु यत्। यतः प्रसूतेत्युक्त्वा च तदेव ब्रह्म चाब्रवीत् ॥८८॥*॥ "अन्तःसमुद्रगं विश्वप्रसूतेः कारणं तु यत्। सूक्तोपनिषदाद्युक्तं जन्माद्यस्येति लक्ष्यते ॥८९॥ सृष्टिः स्थितिश्च संहारो नियतिर्ज्ञानमावृतिः। बन्धमोक्षावपि ह्यासु श्रुतिषूक्ता हरेः सदा ॥९०॥ यं नामानि विशन्त्यद्धा यो देवानामिति ह्यपि। श्रुतेर्नामानि सर्वाणि विष्णोरेव यतस्ततः ॥९१॥ अतो न मुख्यतो नाम तदन्यस्य हि कस्यचित्। गुणाः श्रुता इति ह्यस्मान्न दोषोऽर्थः श्रुतेर्भवेत् ॥९२॥ प्रीत्या मोक्षपरत्वाच्च तात्पर्यं नैव दूषणे। सर्वेषामपि वाक्यानां महातात्पर्यमत्र हि ॥९३॥ तद्विरोधे न मानत्वं फलं मुक्तिर्हि वाक्यतः। न पुराणादिमानत्वं विरुद्धार्थे श्रुतेर्भवेत्॥९४॥ दर्शनान्तरमूलत्वान्मोहार्थं चाऽज्ञया हरेः। न सर्वनामताऽन्येषां श्रुतावुक्ता हि कुत्रचित् ॥९५॥ अदोषवचनाच्चैव नियमेन हरेः श्रुतौ। अज्ञानं पारतन्त्र्यं च प्रळयेऽभाव एव च ॥९६॥ अशक्तिश्चोदिताऽन्येषां सर्वेषामपि च श्रुतौ। जन्माद्यस्येति तेनैतद् विष्णोरेव स्वलक्षणम् ॥९७॥ अस्योद्भवादिहेतुत्वं साक्षादेव स्वलक्षणम्। कृष्णद्वयानच्छलेनैव स्वयं भागवतेऽब्रवीत् ॥९८॥ अतो जीवैक्यमपि स निराचक्रे जगद्गुरुः। नहि जन्मादिहेतुत्वं जीवस्य जगतो भवेत् ॥९९॥ हिताक्रियादिदोषं च वक्ष्यत्येव स्वयं प्रभुः। निर्गुणत्वं च तेनैव निषिद्धं प्रभुणा स्वयम् ॥१००॥ भेदेनैव तु मुख्यार्थसम्भवे लक्षणा कुतः। कथं नित्यगुणस्यास्य स्यादैक्यं गुणहानतः॥१०१॥ सदैव गुणवत्त्वेऽस्य

---

१ प्र. पाठे इतः परं "येन जातानि जीवन्ति। यत् प्रयन्त्यभिसंविशन्ति। तद् विजिज्ञासस्व। तद् ब्रह्मेति" इत्यधिकम्।

भाष्यम्

"न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप", "यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा" इत्यादि च ॥*॥

॥*॥ इति द्वितीयमधिकरणम् ॥*॥

अनुमानतोऽन्ये न कल्पनीयाः—

॥ शास्त्रयोनित्वात् ॥ ३ ॥

"नावेदविन्मनुते तं बृहन्तम्", "औपनिषदः पुरुषः" इत्यादिश्रुतिभ्यः[1]।

नचानुमानस्य नियतप्रामाण्यम्—

"श्रुतिसाहाय्यरहितमनुमानं न कुत्रचित्। निश्चयात् साधयेदर्थं प्रमाणान्तरमेव च। श्रुतिस्मृतिसहायं यत् प्रमाणान्तरमुत्तमम्। प्रमाणपदवीं गच्छेन्नात्र कार्या विचारणा। पूर्वोत्तराविरोधेन कोऽत्रार्थोऽभिमतो भवेत्। इत्याद्यमूहनं तर्कः शुष्कतर्कं तु वर्जयेत्" इत्यादि कौर्मे[3]।

अनुव्याख्यानम्

भिन्नं स्यान्निर्गुणं सदा। नच मिथ्यागुणत्वं स्यादनिर्वाच्यस्य दूषणात् ॥१०२॥ निर्गुणत्वं तदा च स्यादासुरत्वं नचान्यथा। लक्ष्यलक्षणयोर्भेदोऽभेदो वा यदि वोभयम् ॥१०३॥ इति पृष्टे तदैक्यस्य गतिरेव न विद्यते। ऐक्याभेदे न शास्त्रेण ज्ञेयं तत् स्वप्रकाशतः ॥ ॥१०४॥ भेदे मिथ्यात्वतो भेदसत्यत्वं स्याद् बलादपि। भेदाभेदौ यदि तदा स्यादेव ह्यनवस्थितिः ॥१०५॥ स्वनिर्वाहकता चेत् स्याद् बाह्यं[4] बाहकमित्यपि। पर्यायो भेदवान् वा स्यादनवस्थोभयत्र च ॥१०६॥ सत्यज्ञानादिकेऽप्येवं[5] न व्यावृत्त्या प्रयोजनम्। व्यावृत्तस्याविशेषत्वे तदखण्डं च खण्डितम्। निर्विशेषत्वमेतेन मूकोऽहमितिवद् भवेत् ॥१०७॥ अभिन्नेऽपि विशेषोऽयं बलादापतति ह्यतः। विशेषतद्वतोश्चैव स्वनिर्वाहकता भवेत् ॥१०८॥ भेदहीने त्वपर्यायशब्दान्तरनियामकः। विशेषो नाम कथितः सोऽस्ति वस्तुष्वशेषतः ॥१०९॥ विशेषास्तेऽप्यनन्ताश्च परस्परविशेषिणः। स्वनिर्वाहकतायुक्ताः सन्ति वस्तुष्वशेषतः ॥११०॥ अतोऽनन्तगुणं ब्रह्म निर्भेदमपि भण्यते। एवं धर्मानिति श्रुत्या तदभेदोऽप्युदीर्यते ॥१११॥*॥ शैवाद्यागमसम्प्राप्तदृष्टेन फलेन तु। तद्वाक्योपमयाऽन्यच्च प्रमाणत्वेऽनुमीयते ॥११२॥ ईशवाक्यत्ववत इति चेत् तद्व्यभिचारिणा। अप्रामाण्यानुमा च स्यान्न पृथक् चानुमेश्वरे।

न्यायविवरणम्

न जीव एवायं ब्रह्मशब्दः। "यतो वा इमानि भूतानि जायन्ते" इत्यादिना जन्मादिकारणत्वस्यैव ब्रह्मलक्षणत्वोक्तेः ॥२॥

नच रुद्रादौ सममेतल्लक्षणम्। शास्त्रैकसमधिगम्यत्वात् कारणस्य ॥३॥

---

१ प्र. पाठे इतः परं "सर्वानुभुमात्मानं साम्पराये" इत्यधिकम्। २ "श्रुतिभ्यश्च" ३ "महाकौर्मे" इति प्र.पाठौ। ४ अत्र प्राचीनकोशेषु वकारस्थाने बकारः पठ्यते। ५ "सत्यज्ञानादिकेऽप्येवं" इति प्र. पाठः।

भाष्यम्

शक्यत्वाच्चानुमानां सर्वत्र—

"सर्वत्र शक्यते कर्तुमागमं हि विनाऽनुमा। तस्मान्न सा शक्तिमती विनाऽऽगममुदीक्षितुम्" इति वाराहे। "रेतो धातुर्वटकणिका घृतधूमाधिवासनम्। जातिस्मृतिरयस्कान्तः सूर्यकान्तोऽम्बुभक्षणम्। प्रेत्य भूताप्ययश्चैव देवताभ्युपयाचनम्। मृते कर्मनिवृत्तिश्च प्रमाणमिति निश्चयः" इति मोक्षधर्मवचनान्न नास्तिक्यवादो युज्यते।

दर्शनाच्च तपआदिफलस्य।

"ऋग्यजुःसामाथर्वाश्च भारतं पञ्चरात्रकम्। मूलरामायणं चैव शास्त्रमित्यभिधीयते। यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम्। अतोऽन्यो ग्रन्थविस्तारो नैव शास्त्रं कुवर्त्म तत्" इति स्कान्दे।

"साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च" इत्यारभ्य वेदपञ्चरात्रयोरैक्याभिप्रायेण पञ्चरात्रस्यैव प्रामाण्यमुक्तमितरेषां भिन्नमतत्वं प्रदर्श्य मोक्षधर्मेष्वपि। शास्त्रं योनिः प्रामाणमस्येति शास्त्रयोनि ॥*॥

॥*॥ इति तृतीयमधिकरणम् ॥*॥

अज्ञानां प्रतीयमानमपि नेतरेषां शास्त्रयोनित्वम्। कुतः?—

॥ तत्तु समन्वयात् ॥४॥

अन्वय उपपत्त्यादिलिङ्गम्। उक्तं च बृहत्संहितायाम्—

"उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्। अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये" इति।

उपक्रमादितात्पर्यलिङ्गैः सम्यङ् निरूप्यमाणे तदेव शास्त्रगम्यम्।

अनुव्याख्यानम्

॥११३॥ पुंस्त्वहेतुबलादेव पूर्वोक्तेनैव वर्त्मना[1]। शास्त्रयोनित्वमेतेन कारणस्य बलाद् भवेत् ॥११४॥ नावेदविन्न तर्केण मतिरित्यादिवाक्यतः। तर्को ज्ञापयितुं शक्तो नेशितारं कथञ्चन ॥११५॥ वनकृत्त्वादिरूपेण पक्षभूतस्य चेशितुः। किञ्चिज्ज्ञानं हि पुंस्त्वेन शक्यं साधयितुं सुखम् ॥११६॥ वृक्षकृन्नाखिलं वृक्षं वेत्ति पुंस्त्वाद्धि चैत्रवत्। इत्याद्यनुमया स्पर्धि नानुमानं परेशितुः। शक्तं विज्ञापने चातिप्रसङ्गोऽनुमयेदृशा ॥११७॥ वस्तुत्वात् तुरगः शृङ्गी पुष्पवत् खं सुतैर्युता। चित्रिणी च रसः षष्ठो रसत्वात् सोत्तरो भवेत्। उपक्रमादिलिङ्गेभ्यो नान्या स्यादनुमा ततः ॥११८॥*॥ त एवान्वयनामानस्तैः सम्यक् प्रविचारिते। मुख्यार्थो भगवान्

१ मूलकोशेषु **"वत्मना"** इति पठ्यते। रेफस्खलनं सम्भाव्येत। परन्तु यत्र यत्र वर्त्मपदं तत्र सर्वत्रापि नैयत्येन वत्मेति विरेफं प्रयोगो दृश्यते। तद्यथा भाष्येऽपि द्वितीयपादे **"स्थानादिव्यपदेशाच्च"** इति सूत्रव्याख्यायाम् **"वर्त्मनी एव गच्छति"** इत्यादिश्रुतिः **"वत्मनी एव गच्छति"** इत्येव पठ्यते। तत्रेदं मृग्यम्—किं यादृच्छिक एवायं सर्वोऽपि सम्पात आहोस्वित् सोद्देशः प्रयोग इति।

भाष्यम्

"मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्य इत्यहम्[1]। इत्यस्या हृदयं साक्षान्नान्यो मद् वेद कश्चन" इति भागवते ॥*॥

॥*॥ इति चतुर्थमधिकरणम् ॥*॥

ननु "यतो वाचो निवर्तन्ते", "अशब्दमस्पर्शम्"[2], "अवचनेनैव प्रोवाच", "यद् वाचाऽनभ्युदितम्"[3], "यच्छ्रोत्रेण न शृणोति"[4] इत्यादिभिर्न[5] तच्छब्दगोचरम्। नेत्याह—

॥ ईक्षतेर्नाशब्दम् ॥५॥

"स एतस्माज्जीवघनात् परात् परं पुरिशयं पुरुषमीक्षते", "आत्मन्येवाऽत्मानं पश्येत्" "विज्ञाय प्रज्ञां कुर्वीत" इत्यादिवचनैरीक्षणीयत्वाद् वाच्यमेव।

औपनिषदत्वान्नावचनेनेक्षणम्—

"सर्वे[6] वेदा यत् पदमामनन्ति", "वेदैश्च सर्वैरहमेव वेद्यः" इत्यादिभ्यश्च।

अवाच्यत्वादिकं त्वप्रसिद्धत्वात्।

"न तदीदृगिति ज्ञेयं न वाच्यं नच तर्क्यते। पश्यन्तोऽपि न जानन्ति[7] मेरो रूपं

अनुव्याख्यानम्

विष्णुः सर्वशास्त्रस्य नापरः ॥११९॥*॥ ईक्षणीयत्वतो विष्णुर्वाच्य एव नचान्यथा। लक्ष्यत्वं क्वापि दृष्टं हि किं तदित्यनवस्थितिः ॥१२०॥ माधुर्यादिविशेषाश्च तच्छब्दैरुदिताः सदा। वाक्यार्थोऽपि हि वाक्यार्थशब्देनैवोदितो भवेत् ॥१२१॥ नावाच्यं तेन किञ्चित् स्याद् यत इत्यादिकैर्वदन्। अवाच्यत्वं कथं ब्रूयान्मूकोऽहमितिवत् सुधीः ॥१२२॥ येन लक्ष्यमिति प्रोक्तं लक्ष्यशब्देन सोऽवदत्। एकस्यापि हि शब्दस्य गौणार्थस्वीकृतौ सताम् ॥१२३॥ महती जायते लज्जा यत्र तत्राखिला रवाः। अमुख्यार्था इति वदन् यस्तन्मार्गानुवर्तिनाम्।

न्यायविवरणम्

नच पाशुपतशास्त्रोदितत्वादि[8] शास्त्रप्रतिपाद्यत्वे कारणम्। किन्तूपक्रमादिलक्षणः समन्वय एव॥४॥ नच तस्यावाच्यत्वं श्रुत्यभिप्रायः। "सर्वे वेदा यत् पदमामनन्ति" इत्यादिश्रुतिसहितानुभवस्य बलवत्त्वात् ॥५॥

---

१ "विकल्प्योऽपोह्य इत्यहम्" इति प्र.पाठः। प्राचीनपाठे विकल्प्येति ल्यप् "विविधं कल्पयित्वा दोषादपोह्यः" इति तत्त्वदीपिकावचनात्। विकल्प्यश्चासावपोह्य इति वा। २ "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" "अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्" इति प्र. पाठः। ३ इतः परं "येन वागभ्युद्यते" इति प्र. पाठेऽधिकम्। ४ इतः परं "येन श्रोत्रमिदं श्रुतम्" इत्यधिकम्। ५ "इत्यादिभिः श्रुतिभिर्न" इति प्र.पाठः।६ "'सर्वे वेदा यत् पदमामनन्ति तपांसि सर्वाणि च यद् वदन्ति', 'वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद् वेदविदेव चाहम्' इत्यादिश्रुतिस्मृतिभ्यश्च" इति प्र.पाठः।७ "न पश्यन्ति" इति प्र. पाठः। ८ क्वचित् कोशे "पाशुपतशास्त्रोदितत्वादिकार्यान्वितत्वादि" इति पठ्यते।

भाष्यम्

विपश्चितः" इतिवत् ।"अप्रसिद्धेरवाच्यं तद् वाच्यं सर्वागमोक्तितः। अतर्क्यं तर्क्यमज्ञेयं ज्ञेयमेवं परं स्मृतम्" इति गारुडे ।

नचाशब्दत्वमितरसिद्धम् ॥*॥

॥ गौणश्चेन्नाऽऽत्मशब्दात् ॥६॥

नच गौण आत्मा दृश्यो वाच्यश्च न निर्गुण इति युक्तम् । आत्मशब्दात् ।

"यो गुणैः सर्वतो हीनो यश्च दोषविवर्जितः । हेयोपादेयरहितः स आत्मेत्यभिधीयते । एतदन्यस्वभावो यः सोऽनात्मेति सतां मतः[1] । अनात्मन्यात्मशब्दस्तु सोपचारः प्रयुज्यते" इति वामने । "द्वे वाव ब्रह्मणो रूपे आत्मा चैवानात्मा च । तत्र यः स आत्मा स नित्यः शुद्धः केवलो निर्गुणश्चाथ ह योऽनीदृशः सोऽनात्मा" इति तलवकारब्राह्मणम् ।

नच मुख्ये सत्यमुख्यं युज्यते ॥*॥

॥ तन्निष्ठस्य मोक्षोपदेशात् ॥७॥

नहि गौणात्मनिष्ठस्य मोक्षः ।

"यस्यानुवित्तः प्रतिबुद्ध आत्माऽस्मिन् सन्देघे[2] गहने प्रविष्टः । स विश्वकृत् स हि सर्वस्य कर्ता तस्य लोकः स उ लोक एव" इत्यात्मनिष्ठस्य मोक्ष उपदिश्यते । "अयमात्मा ब्रह्म", "ब्रह्मेति परमात्मेति भगवानिति शब्द्यते", "दत्तं दुर्वाससं सोममात्मेशब्रह्मसम्भवान्", "चेतनस्तु द्विधा प्रोक्तो जीव आत्मेति च प्रभो । जीवा ब्रह्मादयः प्रोक्ता आत्मैकस्तु जनार्दनः । इतरेष्वात्मशब्दस्तु सोपचारोऽभिधीयते[3] । तस्याऽऽत्मनो निर्गुणस्य ज्ञानान्मोक्ष उदाहृतः । सगुणास्त्वपरे प्रोक्तास्तज्ज्ञानान्नैव मुच्यते । परो हि पुरुषो विष्णुस्तस्मान्मोक्षस्ततः स्मृतः" इति पाद्मे ॥*॥

अनुव्याख्यानम्

कथं न जायते लज्जा वक्तुं शाब्दत्वमात्मनः ॥१२४॥ आत्मब्रह्मादयः शब्दाः साक्षात् पूर्णाभिधायिनः । जन्मादिकारणं ब्रह्म लक्षितं च यदा तदा ॥१२५॥ वन्ध्यापुत्रोपमं मायाशबळं[4] वाच्यमित्यपि । कल्पयित्वा विना मानं लक्ष्यं शुद्धं वदन् पदैः ॥१२६॥ आत्मशब्दोदितस्यैव ज्ञानं मुक्तावसाधनम् । आह श्रुतपरित्यागः स्याच्चास्याश्रुतकल्पनम् ॥१२७॥ स्यात् सर्वत्र च यत्रैकमपि लोको जुगुप्सते । नियमेनोभयं स्याद्धि यस्य स्वपरयोर्मते ॥१२८॥ अलङ्कृतः सदैवायं दुर्घटैरेव भूषणैः । अन्धन्तमो नित्यदुःखं तस्य स्याद् वसनद्वयम् ॥१२९॥ अनन्दा नाम ते लोका अन्धेन तमसाऽऽवृताः । तांस्ते प्रेत्याभिगच्छन्त्यविद्वांसो बुधो[5] जनाः ॥१३०॥ असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः । तांस्ते प्रेत्याभिगच्छन्ति ये केचाऽऽत्महनो जनाः ॥१३१॥ इत्यादिश्रुतयो मानं शतशोऽत्र समन्ततः । हेयत्वावचनाच्चैव नाऽऽत्मा गौणः

१ "सतां मतम्" २ "सन्दोहे" ३ "सोपचारः प्रयुज्यते" ४ "शबलं" इति प्र. पाठाः । ५ "गच्छन्ति येऽविद्वांसः" इति प्र. पाठः। श्रुतौ बुध इति पञ्चमी । बुधः सकाशात्, बुधं ज्ञानोपदेशकं प्राप्यापि वा, अविद्वांसः ज्ञानविधुराः ।

भाष्यम्

॥ हेयत्वावचनाच्च ॥८॥

"तमेवैकं जानथ आत्मानमन्या वाचो मुञ्चथामृतस्यैष सेतुः" इत्यन्येषां हेयत्ववचना-दस्याहेयत्ववचनान्न गौण आत्मा ॥*॥

॥ स्वाप्ययात् ॥९॥

"पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते", "स आत्मन आत्मानमुद्धृत्याऽत्मन्येव विलाययत्यथाऽत्मैव भवति", "स देवो बहुधा भूत्वा निर्गुणः पुरुषोत्तमः। एकीभूय पुनः शेते निर्दोषो हरिरादिकृत्" इत्यादि स्वस्यैव स्वस्मिन्नप्ययवचनात्।

नहि निर्दोषस्य गौणात्मनि लयः ॥*॥

नच कासुचिच्छाखास्वन्यथोच्यते—

॥ गतिसामान्यात् ॥१०॥

"सर्वे वेदा युक्तयः सुप्रमाणा ब्राह्मं ज्ञानं परमं त्वेकमेव। प्रकाशयन्ते न विरोधः कुतश्चिद् वेदेषु सर्वेषु तथेतिहासे" इति पैङ्गिश्रुतेर्गतेर्ज्ञानस्य साम्यमेव ॥*॥
"एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा। कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च" इति—

॥ श्रुतत्वाच्च ॥११॥

नह्यशब्दः श्रूयते। नचाप्रसिद्धं कल्प्यम्। सर्वशब्दावाच्यस्य लक्षणायुक्तेः ॥*॥

॥*॥ इति पञ्चममधिकरणम् ॥*॥

अनुव्याख्यानम्

श्रुतौ श्रुतः ॥१३२॥ तमेवैकं जानथान्या वाचो मुञ्चथ चेति ह। उक्त आत्मा कथं गौणो हेयपक्षे ह्यसौ श्रुतः ॥१३३॥ परिवारतया ग्राह्या अपि हेयाः प्रधानतः। पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥१३४॥ इति स्वस्यैव पूर्णस्य पूर्णेऽप्यय उदाहृतः। कथं मायाव्यवच्छिन्नः पूर्णो मुख्यतया भवेत् ॥१३५॥ पदं च निर्गुण इति कथं गौणं वदिष्यति। गुणाभावोपलक्ष्यं चेत् पदं तदपि वाचकम् ॥१३६॥ अतोऽनवस्थितिमुखसर्वदोषमहास्पदम्। कथमेतन्मतं सद्भिरादि्रयेत विचक्षणैः ॥१३७॥*॥ नच साङ्ख्यनिराकृत्यै सूत्राण्येतान्यचीक्लृपत्। भगवान् नह्यशब्दत्वं प्रधानेऽङ्गीकरोत्यसौ ॥१३८॥ समन्वये प्रतिज्ञाते शब्दगोचरतैव हि। प्रथमप्रतिपाद्या स्यात् तदभावे कुतोऽन्वयः ॥१३९॥ कथं च लक्षणावादी ब्रूयाद् ब्रह्मसमन्वयम्। योऽसौ शब्दस्य मुख्यार्थस्तत्रैव स्यात् समन्वयः ॥१४०॥ जन्मादिकारणे

---

१ "विमुञ्चथ" इति प्र. पाठः। २ इतः पूर्वं प्र.पाठे "पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते" इति पूर्वार्धमपि पठ्यते। ३"विलापयति" ४"इति स्वस्यैव" ५"नहि गौणात्मनि निर्दोषस्य लयः" इति प्र.पाठाः।

भाष्यम्

तमेव समन्वयं प्रकटयत्यानन्दमयोऽभ्यासादित्यादिना समस्तेनाध्यायेन[1]। प्रायेणान्यत्र प्रसिद्धानां शब्दानां परमात्मनि समन्वयः प्रदर्श्यतेऽस्मिन् पादे। नान्यथा तदृष्टेः।

ब्रह्मजिज्ञासा कर्तव्येत्युक्तम्। तच्च[2] "ब्रह्म पुच्छं प्रतिष्ठा" इत्यानन्दमयावयवरूपं प्रतीयते। नह्यवयविनं विनाऽवयवमात्रस्य ज्ञेयतेत्यत आह–

॥ आनन्दमयोऽभ्यासात् ॥ १२ ॥

आनन्दमयो ब्रह्मादिः प्रकृतिर्विष्णुर्वा। ब्रह्मशब्दाद्धिरण्यगर्भस्य प्राप्तिः। शतानन्दनाम्ना च। अष्टमूर्तित्वात् सूर्ये प्रोक्तत्वाच्च रुद्रस्य। एवमन्येषाम्[3]। "मम योनिर्महद् ब्रह्म" इति ब्रह्मशब्दाद् बहुभावाच्च प्रकृतेः। "जातिर्जीव[4]कमलासनशब्दराशिषु" इति ब्रह्मशब्दादेव सर्वजीवानाम्। अन्नमयत्वादेश्च। तथाऽपि न त आनन्दमयशब्देनोच्यन्ते। किन्तु विष्णुरेव।

अनुव्याख्यानम्

साक्षादाह देवः समन्वयम्। उक्तं तदेव जिज्ञास्यं क्वावकाशोऽत्र निर्गुणे ॥१४१॥ कथञ्चासम्भवस्तस्य मुख्यार्थस्य निराकृतौ। मानेन केन विज्ञेयमवाच्याज्ञेयनिर्गुणम् ॥१४२॥ अमेयं चेन्न शास्त्रस्य तत्र वृत्तिः कथञ्चन। तस्माच्छास्त्रेण जिज्ञास्यमस्मदीयं गुणार्णवम्। ॥१४३॥ वासुदेवाख्यमद्वन्द्वं परं ब्रह्माखिलोत्तमम्। विज्ञेयवाच्यलक्ष्यत्वपूर्वाशेषविशेषतः। ॥१४४॥ निर्गतं मनसो वाचो यदि तत् स्यादगोचरम्। अस्तु तन्मा वदेद् वादी नचास्मच्छास्त्रगं तु तत् ॥१४५॥ अवाच्यं वाच्यमित्युक्त्वा किमित्युन्मत्तवन्मृषा। अस्मच्छास्त्रस्य चौर्याय यतते स्वोक्तिदूषकः ॥१४६॥ जन्मादिकारणं यत्तत् साक्षान्नारायणाभिधम्। वदन्तु श्रुतयो[5] ब्रह्म शास्त्रं चैतत् तदर्थतः ॥१४७॥ प्रवृत्तमस्त्ववाच्यं ते मैवं[6] ब्रूयाः कथञ्चन। सर्वशब्दैरवाच्यं तदुक्त्वा तद्विषयं पुनः ॥१४८॥ शास्त्रं वदन्तमुन्मत्तं कथं लोको न वारयेत्। मा वदो मा विजानीहि त्यजास्मच्छास्त्रचोरताम् ॥१४९॥ वयं त्वां श्रुतियुक्तिभ्यां बद्ध्वाऽस्मच्छास्त्रमञ्जसा। विचारयामः श्रुतिभिर्युक्तिभिश्चैव सादरम् ॥ १५० ॥ अद्भुतत्वादवाच्यं तदतर्क्याज्ञेयमेव च। अनन्तगुणपूर्णत्वादित्यूदे पैङ्गिनां श्रुतिः। अवाच्यमिति लोकोऽपि वक्त्याश्चर्यतमं भुवि ॥१५१॥*॥ एवं शास्त्रावगम्यत्वे विभागेन समन्वयम्। आनन्दमय इत्यादिनाऽध्यायेन वदत्यजः ॥१५२॥ तत्रान्यत्र प्रसिद्धानां विष्णावेव समन्वयम्। शब्दानां प्रथमे पादे गुणिसामान्यवाचिनाम् ॥१५३॥ गुणवाचिनां च प्रथममाह देवः समन्वयम्। समुद्रशायिनं सर्वप्रसूतिप्रसवं[7] श्रुतिः ॥१५४॥ तदेव ब्रह्म परममिति सावधृतिर्जगौ। यतोऽतो ब्रह्मशब्दस्य तत्रैव नियतत्वतः ॥ १५५॥ येऽन्नं ब्रह्मेत्यादिरूपादभ्यासात् तैत्तिरीयके। अन्यासु चैतद्रूपासु शाखास्वपि सहस्रशः ॥१५६॥

---

१ "समस्तेनाध्यायेन प्रायेण। प्रायेणान्यत्र" इति प्र. पाठे प्रायेणेति द्विः पठ्यते। सकृदेव प्राचीनपाठः। अत एव तत्त्वदीपिकावचनम्–"समन्वयं वक्ति प्रायेणेति। प्रायेणान्यत्र प्रसिद्धानां शब्दानामिति च सम्बन्धः" इति। २ "तच्च ब्रह्म, ब्रह्म पुच्छं प्रतिष्ठा" ३ "एवमन्येषामपि" इति प्र.पाठौ। ४ "बृह जातिजीव–" इत्यादि प्र. पाठः। ५"वदन्ति श्रुतयः" ६"मैवं ब्रूयाः" ७ "प्रसूतिप्रभवं" इति प्र. पाठाः।

भाष्यम्

"तदेव ब्रह्म परमं कवीनाम्", "एतमेव ब्रह्मेत्याचक्षते", "ब्रह्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते। असम्पूर्णाः परे यस्मादुपचारेण वा भवेत्", "ब्रह्मेति परमात्मेति भगवानिति शब्द्यते", "वासुदेवात्मकं ब्रह्म मूलमन्त्रेण वा यतिः" इत्यादिषु तस्मिन्नेव प्रसिद्धब्रह्मशब्दाभ्यासात् ॥*॥

अनुव्याख्यानम्

आनन्दमय इत्याद्यैः शब्दैर्वाच्यो हरिः स्वयम्। उपलक्षणत्वं शब्दानामानन्दमयपूर्विणाम् ॥
॥१५७॥ सूत्रस्याल्पाक्षरत्वेन सर्वशाखाविनिर्णये। पुनश्च प्रापकाद्धेतोस्तत्राधिकरणान्तरम् ॥
॥१५८॥ सर्वे वेदा आमनन्ति यत् पदं त्विति हि श्रुतिः। आनन्दमयरूपे तु ब्रह्मणः पुच्छतोक्तितः ॥१५९॥ समस्ताब्रह्मताप्राप्तेरानन्दमयनाम हि। ब्रह्मशब्दस्य चाभ्यासात् पञ्चरूपादिषु स्फुटम् ॥१६०॥ ब्रह्मताऽवयवेऽपि स्यात् तथाऽवयविनि स्वतः। यथैव कृष्णकेशस्य कृष्णस्य ब्रह्मताऽखिला॥१६१॥दर्शिता चैव पार्थाय निःसीमाः शक्तयोऽस्य हि। ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ॥१६२॥ विष्ण्वाख्यमुक्तमन्यत्र ह्यूर्ध्वरेतं च तत् प्रति। विरूपाक्षाख्यमवरं[1] ब्रह्मोक्तं तद्व्रते स्थितम् ॥१६३॥ समानाधिकृतत्वं चेदुत्तरं नीललोहितम्। कृष्णपिङ्गलरूपेण पुनरुक्तं भविष्यति ॥१६४॥ ब्रह्माधिपतिरित्यत्र तापनीयश्रुतौ पुरः। स्वरितब्रह्मशब्दान्तं बहुव्रीहित्वमेष्यति[2] ॥ १६५ ॥ स्वाहेन्द्रशत्रुर्वर्द्धस्व यद् बहुव्रीहितामगात्[3]। तस्मादस्येन्द्र एवाभूच्छत्रुरित्युत्तरश्रुतेः ॥१६६॥ पूर्वान्तस्वरिते पुंसोर्बहुव्रीहित्वमेष्यति[4]। महाव्याकरणे सूत्रमिति स्वरविनिर्णये ॥१६७॥ ऋतं सत्यं परं ब्रह्मेत्याद्युद्देश्यद्वितीयका। विभक्तिरूर्ध्वरेतादिः प्रथमा रुद्रगोचरा ॥१६८॥ तस्माद् विष्णुं परं ब्रह्म प्रति रुद्रो व्रते स्थितः। ऊर्ध्वरेता इति ह्येव श्रुत्यर्थोऽवसितो भवेत् ॥१६९॥ ऋतं सत्यं परं ब्रह्म प्रति विष्णुं सदाशिवः। ऊर्ध्वरेता ध्यायति ह शङ्करो नीललोहितः ॥१७०॥ इत्यर्थमेतमेवाऽह नीलग्रीवश्रुतिः परा। आथर्वणी परं ब्रह्म तस्मादेको हरिः श्रुतौ ॥१७१॥ तदेवर्तमिति प्राह कथमेवान्यथा श्रुतिः। अवधारयन्ती तस्यैव ह्यृतत्वादिकमञ्जसा॥१७२॥एको नारायण आसीन्न ब्रह्मा नच शङ्करः। वासुदेवोऽग्र एवाऽसीन्न ब्रह्मा नच शङ्करः ॥१७३॥ नेन्द्रसूर्यौ नच गुहो न सोमो न विनायकः। इत्यादिवाक्यतो विष्णोरुत्पत्तिरवतारगा ॥१७४॥ मुख्यं ब्रह्म हरिस्तस्मात् प्रस्तावः परमित्यपि। मुख्यब्रह्मग्रहे युक्ते नामुख्यं युज्यते क्वचित् ॥१७५॥ असम्भवे हि मुख्यस्य गौणार्थाङ्गीकृतिर्भवेत्। प्राचुर्यार्थाश्च मयटः सर्वेऽत्र प्रतिपादिताः ॥१७६॥ भोग्यत्वमत्र चाद्यत्वमुपजीव्यतया हरेः। महाभोक्ता महाभोग्य इत्यर्थोऽन्नमये भवेत् ॥
॥१७७॥ महाप्राणो महाबोधो महाविज्ञानवानपि। विशेषसामान्यतया विज्ञानं मन इत्यपि ॥
॥१७८॥ एकस्य ज्ञानरूपस्य हरेरुक्तिर्विभागतः। अभिन्नोऽपि[5] विशेषेणैवान्य इत्युदितो हरिः ॥

१ "विरूपाक्षाख्यमपरम्" २ "बहुव्रीहित्वमेष्यति" ३"बहुव्रीहितामगात्" ४"बहुव्रीहित्वमेष्यति" ५ "अभेदेऽपि" इति प्र॰पाठाः।

भाष्यम्

॥ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥१३ ॥

विकारात्मकत्वात् तदभिमानित्वाच्च युज्यते प्रकृत्यादीनां मयट्छब्दः । नतु परमात्मन इति मा भूत् प्रचुरानन्दत्वाद्ध्यानन्दमयः । नतु तद्विकारत्वात् । अन्नादीनां च प्राचुर्यमेव । "अद्यतेऽत्ति च" इति व्याख्यानात् । तत्प्राचुर्यं च युज्यते । उपजीव्यत्वमेवाद्यत्वम् । "स वा एषः" इत्यन्यप्रारम्भात् । "येऽन्नं ब्रह्मोपासते" इत्यादिब्रह्मशब्दाद् बहुरूपत्वाच्च न विकारत्वमविरोधश्च । नच पृथक् कल्पना युक्ता । स्वरूपे च युज्यते प्रचुरप्रकाशो रविरितिवत् ॥*॥

॥ तद्धेतुव्यपदेशाच्च ॥१४॥

"को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्यात्" इति ॥*॥

॥ मान्त्रवर्णिकमेव च गीयते ॥१५॥

"ब्रह्मविदाप्नोति परम्" इति सूत्रयित्वा[2] "सत्यं ज्ञानमनन्तं ब्रह्म" इति मन्त्रवर्णलक्षितमेव ब्रह्म[3] शब्दानुसन्धानाद् गीयते ।

नचावयवत्वविरोधः—

अनुव्याख्यानम्

॥१७९॥ भेदशब्दा विशेषं तु हरावन्यत्र भिन्नताम् । ब्रूयुर्हरेर्जीवजडैरपि भेदं हि मुख्यतः ॥ ॥१८०॥ ब्रह्मतर्कवचोऽप्येवमत एकः स पञ्चधा । उक्तोऽन्नमय इत्यादि भृगोश्चैतद् वदिष्यति ॥१८१॥ प्राच्यत्वेन मयट्प्रोक्तेर्न तत्राप्यन्यदुच्यते । प्रचुरान्नादिरेवातो ह्यन्नमन्नमयेत्यपि ॥१८२॥ उच्यते ह्यविशेषेण नान्यत् किञ्चिदिहोच्यते । महानन्दत्व एवास्य हेतुः कोऽन्यादिति स्फुटम् ॥१८३॥ उक्तः श्रुत्यन्तरे यस्मात् सुखं लब्ध्वा करोत्ययम् । करोति नासुखी भूमा सुखं नाल्पे सुखं भवेत् ॥१८४॥ इत्युक्तं यत् प्रवृत्तिश्च नृत्तगानादिका सुखात् । दुःखाद् रोदादिका चैव सर्वकर्तृत्वतोऽस्य च ॥१८५॥ सर्वशक्तेर्न दुःखं स्यादतः केवललीलया । प्रवर्तको न चेदेष प्राण्यादन्याच्च कः पुमान् ॥१८६॥ ब्रह्मवित् परमाप्नोतीति यत् प्रथमसूचितम् । तदेव मन्त्रवर्णेन सत्यं ज्ञानमनन्तवत्॥१८७॥ लक्षितं तत्र सत्यत्वं सृष्ट्याऽन्नप्राणयोरपि । उक्तं ज्ञानं तु मनसा विज्ञानेनाप्युदीरितम् ॥१८८॥ अनन्तत्वं तथाऽऽनन्दमयवाचाऽप्युदाहृतम् । सद्भावं यापयेद् यस्मात् सत्यं तत् तेन कथ्यते ॥१८९॥ इति सृष्टिरिह प्रोक्ता जगत्सद्भावयापकम् । ब्रह्मेति स्थापनायैव सत्त्वं जीवनमेव च ॥१९०॥ विशीर्णता च सत्त्वं स्यात् सन्नमित्याहुरेव यत् । अतोऽद्यताऽत्तृताऽन्नत्वं सत्यशब्दार्थ एव हि ॥१९१॥ प्राणं देवा अनुप्राणन्ति मनुष्याः पशवश्च ये । आयुः प्राणो हि भूतानामिति यद्

न्यायविवरणम्

नचावयवत्वविरोधः । "नेह नानाऽस्ति किञ्चन" इत्यादिश्रुतेरवयवाद्यभेदात्[4] ॥६॥

१ "विकारित्वम्" २ "सूचयित्वा" ३ "मन्त्रवर्णलक्षितं परमेव ब्रह्म" ४"इति श्रुतेः" इति प्र.पाठाः ।

भाष्यम्

"स शिरः स दक्षिणः पक्षः स उत्तरः पक्षः स आत्मा स पुच्छम्" इति तस्यैवावयवत्वोक्तेश्चतुर्वेदशिखायाम्। "शिरो नारायणः पक्षो दक्षिणः सव्य एव च। प्रद्युम्नश्चानिरुद्धश्च सन्देहो[1-2] वासुदेवकः। नारायणोऽथ सन्देहो वासुदेवः शिरोऽपि वा। पुच्छं सङ्कर्षणः प्रोक्त एक एव तु पञ्चधा। अङ्गाङ्गित्वेन भगवान् क्रीडते पुरुषोत्तमः। ऐश्वर्यान्न विरोधश्च चिन्त्यस्तस्मिन् जनार्दने। अतर्क्ये हि कुतस्तर्कस्त्वप्रमेये कुतः प्रमा" इति बृहत्संहितायाम्।

रसशब्देन विशेषणात् तत्तत्सारभूतं चिन्मात्रमेवोच्यते। इदमिति च दृश्यमानसन्निहितत्वात्।

"अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान्। प्रोच्यते भगवान् विष्णुरैश्वर्यात् पुरुषोत्तमः" इति ब्रह्माण्डे ॥*॥

नचोक्तप्राप्त्या विरिञ्चादिरुच्यते—

## ॥ नेतरोऽनुपपत्तेः ॥१६॥

नह्यन्यज्ञानान्मोक्ष उपपद्यते।

"तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते" इति ह्युक्तम् ॥*॥

अनुव्याख्यानम्

गतिजीवने ॥१९२॥ उक्ते सदितिधात्वर्थो गतिश्चातो हि सत्यता। प्राणत्वमवबोधार्थो मनुधातुः प्रकीर्तितः ॥१९३॥ नाल्पे सुखमिति प्रोक्त्यैवाऽनन्दमयतोक्तितः। अनन्तत्वं सुनिर्णीतं पूर्णानन्दो हि नाल्पके ॥१९४॥ अतो हि मन्त्रवर्णोक्तविस्तृतिस्तु समस्तया। क्रियते परया यस्मादितरोऽत्र न कथ्यते ॥१९५॥ पुरुषं वेत्ति यो मुच्येन्नान्यः पन्था हि विद्यते। इति श्रुतेरन्यवेदी कथं मुक्तिं प्रयास्यति ॥१९६॥ पुरुषः पर आत्माऽजो ब्रह्म नारायणः प्रभुः। महानानन्द उद् विष्णुर्भर्ग ओम इतीर्यते ॥१९७॥ स्वयं[3] नारायणो देवो नान्यस्यैतानि कस्यचित्। तस्मादोमित्युदाहृत्य यज्ञदानादि कुर्वते ॥१९८॥ सूक्तेन पौरुषेणैनं यजन्त्यध्यात्मकोविदाः। इति पैङ्गिश्रुतिस्तेन नान्यज्ञानाद् विमुच्यते ॥१९९॥ ब्रह्मशब्दोदिते तस्मिन्नात्मशब्दं प्रयुज्य च। तस्मादाकाशसृष्टिं च प्रोवाचात्र चतुर्विधाम् ॥२००॥ भूतं भूताभिमानी च तद्देहोऽन्तर्नियामकः। हरिश्चाऽकाशशब्दोक्तो मुख्यतो हरिरेव च ॥२०१॥ आ समन्तात् काशते यदाकाशो मुख्यतो हरिः। बलज्ञानस्वरूपत्वाद् वायुरग्निरगं नयन् ॥२०२॥ आप आपालनाच्चैव पृथिवी प्रथितो यतः। उष्टानामाश्रयत्वेन स एवोषधिनामकः[4] ॥२०३॥ ओषधीषु स्थितो विष्णुः क्षुधितैराश्रितो भवेत्। पुरि शेते यतः सोऽथ पुरुषश्चेति गीयते ॥२०४॥ क्रियाप्रवर्तकत्वेन प्रादुर्भावो हरेर्जनिः। आकाशादिषु नान्याऽस्ति ह्यभिमानोऽभिमानिनः ॥२०५॥[5] अभिमानिशरीरस्य साक्षाद् भूतस्य चोद्भवः। एवं देहादिपर्यन्तमागतं हरिमेव तु ॥२०६॥

---

१-२"सन्दोहः" इति प्र.पाठः। प्राचीनपाठे देहस्य समीचीनः सारभूतो भागः सन्देहः। मध्यदेह इति यावत्। शिरसः करयोश्चरणानां च परिदेहत्वादस्य सन्देहत्वम्। ३ "सोऽयम्" ४ "स एवौषधिनामकः" ५ "कथ्यते इति प्र.पाठः।

भाष्यम्

॥ भेदव्यपदेशाच्च ॥१७॥

"ते ये शतं प्रजापतेरानन्दाः", "अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते", "स यश्चायं पुरुषे" इत्यादिभेदव्यपदेशात् ।

नच "तत् त्वमसि", "अहं ब्रह्मास्मि" इत्यादिविरोधः[1] । "नामानि सर्वाणि यमाविशन्ति" इति तत्तच्छब्दवाच्यत्वोक्तेः । "इदं हि विश्वं भगवानिवेतरः[2]", "असर्वः सर्व इत्यपि", "विद्याऽऽत्मनि भिदाबोधः", "[3]भेददृष्ट्याऽभिमानेन", "अन्यमीशमस्य महिमानमिति वीतशोकः", "असर्वः सर्व इवाऽऽत्मैव सन्ननात्मेव प्रत्यङ् परागिवैक ईयते बहुधेयते स पुरुषः स ईश्वरः स ब्रह्म", "सर्वान्तर्यामिको[4] विष्णुः सर्वनाम्नाऽभिधीयते । एषोऽहं त्वमसौ चेति नतु सर्वस्वरूपतः", "नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह" इत्यादेश्च ।

उक्ता च प्राप्तिः । "ब्रह्मैव सन्" इत्यपि जीव एव ब्रह्मशब्दः । उपपद्यते च विरोधे । प्रमादात्मकत्वाच्च बन्धस्य[5] विमुक्तत्वं च युज्यते ।

"मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः" इति हि भागवते ॥*॥

नच तत्तदनुमानविरोधः—

॥ कामाच्च नानुमानापेक्षा ॥१८॥

यथाकामं ह्यनुमातुं शक्यते । अतो न तत्त्वे पृथगनुमानमपेक्ष्यते । उक्तं च स्कान्दे—

"यथाकामाऽनुमा यस्मात् तस्मात् साऽनपगा श्रुतेः । पूर्वापराविरोधाय चेष्यते नान्यथा क्वचित्" इति । "नैषा तर्केण मतिरापनेया" इति च ॥*॥

अनुव्याख्यानम्

परामृशति तस्यैव पञ्चरूपत्ववित्तये । त्यक्त्वा भूतादिकं सर्वं स वा एष इति श्रुतिः ॥२०७॥ स इत्यात्मपदोद्दिष्ट एष जीवशरीरगः । सारान्नमय एवायं न लोकान्नमयः प्रभुः ॥२०८॥ इति तं रसशब्देन विशिनष्टि शरीरगम् । इदमित्येव निर्देशो वस्त्रप्रावृतवद् विभोः ॥२०९॥ शिरआदेर्भवेज्जीवशिरआदौ व्यवस्थितेः । तं विदित्वाऽस्य मुक्तिः स्यान्नान्यज्ञानात् कथञ्चन॥ ॥२१०॥ आदित्ये पुरुषे चायमिति भेदोपदेशतः । नास्याभेदोऽस्ति जीवेन नानुमा कामचारिणी ॥२११॥ विमतानि शरीराणि मद्भोगायतनानि यत् । शरीराणीत्यादिका तु तत्त्वज्ञाने ह्यपेक्ष्यते ॥२१२॥ प्रत्यक्षादिविरुद्धत्वादक्षागमभयोज्झिता । अनुमा कामवृत्ता हि कुत्र नावसरं व्रजेत् ॥२१३॥ जड आत्मैव वस्तुत्वात् प्रमेयत्वाज्जडं चितिः । घन आकाश इत्याद्या वार्यन्ते केन हेतुना ॥२१४॥ न जीवभेदसूत्राणां शङ्कयाऽत्र पुनरुक्तता । वाक्यान्तरद्योतकत्वात् पृथगित्यत्र पूर्णता । योगमन्नमयाद्यैर्यत् फलत्वेनास्य शंसति । स्थानद्वयेऽप्यतः कोशा

१ "इत्यादिश्रुतिविरोधः" इति प्र. पाठः । २ इतः परं प्र. पाठे "यतो जगत्स्थाननिरोधसम्भवः" इत्यधिकम् । ३ "भेददृष्ट्याऽभिमानेन निस्सङ्गेनापि कर्मणा", "जुष्टं यदा पश्यत्यन्यमीशमस्य—" इत्यादि प्र॰ पाठः । ४ "सर्वान्तर्यामिकः" ५ "प्रमादात्मकत्वाद् बन्धस्य" इति प्र.पाठौ ।

भाष्यम्

## ॥ अस्मिन्नस्य च तद्योगं शास्ति ॥१९॥

अस्य जीवस्य। युक्तिसमुच्चये चशब्दः।

"[1]सह ब्रह्मणा विपश्चिता", "अनिलयनेऽभयं प्रतिष्ठां विन्दते", "एतमानन्दमयमात्मानमुपसङ्क्रामति" इत्यादि ॥*॥

॥*॥ इति षष्ठमधिकरणम् ॥*॥

"अदृश्येऽनात्म्ये" इत्युक्तम्। तच्चादृश्यत्वम्–"अन्तः प्रविष्टं कर्तारमेतमन्तश्चन्द्रमसि मनसा चरन्तम्। सहैव सन्तं न विजानन्ति देवाः" इत्यन्तस्थस्य कस्यचिदुच्यते। स च – "इन्द्रो राजा", "सप्त युञ्जन्ति" इत्यादिभिरन्यः प्रतीयते।

अनुव्याख्यानम्

एत इत्यतिसाहसम् ॥२१५॥ उपसङ्क्रमणं चैव द्वितीयोद्देशितं प्रति। अतिक्रमं वदन्तं तमुपशब्दो निवारयेत् ॥२१६॥ अश्रुतस्यातिशब्दस्य स्थानं दद्यात् कथं पुनः। श्रुताश्रुतपरित्यागकल्पने विगतह्रियाम् ॥२१७॥ मृतावेव परित्यागः कृतो ह्यन्नमयस्य च। येऽन्नं ब्रह्मेत्याद्युपासां सामानाधिकरण्यतः ॥२१८॥ उक्त्वा पञ्चस्वरूपाणां पुनस्तत्प्राप्तिवादिनी। स्थानद्वयगता वेदवाणी तदपलापिनाम् ॥२१९॥ तमसोऽन्यत्र संस्थानं कथमेव सहेत सा। अधीहि भगवो ब्रह्मेत्युक्तोऽन्नप्राणपूर्वकम् ॥२२०॥ आह ब्रह्म कथं तन्न द्वारं तदिति वादिनः। उपसत्तिं कथं विद्युरुपसन्नाय हि त्रिशः ॥२२१॥ वक्तव्यं ब्रह्म गुरुणा चतुर्वारमथापि वा। सकृद् वेत्यागमा ब्रूयुः सम्प्रदायविदोऽपिच ॥२२२॥ तद् यत्किञ्चित् कथं ब्रूयादुपसन्नाय दिक्पतिः। न वदेद् ब्रह्म च कथं मायावी नहि वारिराट् ॥२२३॥ चष्ट इत्येव तच्चक्षुः श्रवणाच्छ्रोत्रमुच्यते। वचनादेव वाग् ब्रह्म सृष्टिस्थित्यादिकारणम् ॥२२४॥ तच्च वाधूलशाखायामष्टरूपमुदाहृतम्। विज्ञानानन्दसहितं पृथक् सृष्ट्यादिलक्षणैः ॥२२५॥ आवापोद्वापतः शाखा यत आहुः परं पदम्। यतो भूतानि जायन्त इत्याद्यैर्लक्षणैः स्वयम् ॥२२६॥ लक्षितं गुरुणा पश्चात् तपसैवापरोक्षतः। दृष्ट्वैकैकं स्वरूपं तु समस्तोक्तानुदर्शनम् ॥२२७॥ इच्छताऽऽज्ञां गुरोः प्राप्य तपसैवापरोक्षितम्। अब्रह्मेत्येव वदतां श्रुतहान्यश्रुतग्रहौ ॥२२८॥ साक्षाल्लक्षणतां प्राप्ताविति लज्जा तदुक्तिषु। समीपे सहभोगस्य मुक्तित्वेनोक्तितोऽसकृत् ॥२२९॥ भेदो जीवेशयोर्मिथ्येत्येव मिथ्या स्वयं भवेत्। एतेन मयटश्चैव द्वैविध्येनार्थकल्पनात्। तदन्येषां मतमपि सत्संसत्सु न भासते ॥२३०॥ अतो नारायणो देवो निःशेषगुणवाचकैः। गुणिसामान्यवचनैरपि मुख्यतयोदितः ॥२३१॥ अध्यात्मगैश्च प्राणाद्यैस्तथैव ह्यधिभूतगैः। अन्नादिशब्दैर्भगवानेको मुख्यतयोदितः ॥२३२॥ जन्माद्यस्येति सूत्रेण गुणसर्वस्वसिद्धये। ब्रह्मणो लक्षणं प्रोक्तं शास्त्रमूलं यतस्ततः ॥२३३॥ अन्वयः सर्वशब्दानां गुणसर्वस्ववेदकः। शब्दप्रवृत्तिहेतूनां तस्मिन् मुख्यसमन्वयात् ॥२३४॥ अन्यार्थेष्वल्पताहेतोस्तन्निमित्तत्वतस्तथा। तद्वाचकत्वं शब्दानां [2]बहळातिप्रयोगतः ॥२३५॥

---

१ "सोऽश्नुते सर्वान् कामान्त्सह ब्रह्मणा विपश्चिता" २ "बहुलातिप्रयोगतः" इति प्र. पाठौ।

भाष्यम्

तस्मात् स एवाऽनन्दमय इति न मन्तव्यम्—

॥ अन्तस्तद्धर्मोपदेशात् ॥२०॥

अन्तः श्रूयमाणो विष्णुरेव ।

"समुद्रे मनसा चरन्तम्", "समुद्रे अन्तः कवयः", "यस्याण्डकोशं शुष्ममाहुः" इत्यादितद्धर्मोपदेशात् ।

स हि क्षीरसमुद्रशायी । तस्य च वीर्यमण्डकोशः ।

"सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः । अप एव ससर्जाऽदौ तासु वीर्यमवासृजत् । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । यस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः । आपो नारा इति प्रोक्ता आपो वै नरसूनवः । अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः" इति व्यासस्मृतेः ।

"अहं तत् तेजो रश्मीन्नारायणं पुरुषं जातमग्रतः । पुरुषात् प्रकृतिर्जगदण्डम्" इति च चतुर्वेदशिखायाम् ॥*॥

॥ भेदव्यपदेशाच्चान्यः ॥२१॥

"इन्द्रस्याऽत्मा निहितः पञ्चहोता", "वायोरात्मानं कवयो निचिक्युः", "अन्तरादित्ये मनसा चरन्तम्", "देवानां हृदयं ब्रह्माऽन्वविन्दत्" इत्यादिभेदव्यपदेशात् ॥*॥

॥*॥ इति सप्तममधिकरणम् ॥*॥

"को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्यात्" इत्याकाशस्याऽनन्दत्वे[3] हेतुरुक्तः, नतु विष्णोरिति न मन्तव्यम् । यतः—

अनुव्याख्यानम्

रूढमित्येव साध्यं स्याद् रूढिर्हि द्विविधा मता । अविद्वद्विद्वदाप्त्यैव मुख्या हि विदुषां तु सा । ॥२३६॥ विद्वद्रूढिर्वैदिका स्यात् सा योगादेव लभ्यते । तस्मान्मुख्यार्थता विष्णोरिति कृत्वा हृदि प्रभुः ॥२३७॥ समन्वयं साधयति देवानां तत्र शक्तताम् । आशङ्क्य तत्र रूढिं च तच्छब्दानामपि स्वयम् ॥२३८॥ समुद्रान्तस्थितत्वाद्यैस्तद्धर्मैर्विष्णुरूढताम् । साधयित्वा भिदां तैश्च पुनरेव न्यवारयत् ॥२३९॥ चेष्टा हि चेतनानां या सा भवेत् तत्प्रसादतः। अचेतनस्वभा-

न्यायविवरणम्

नच "ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठां दिव आत्मानं सवितारं बृहस्पतिम् । चतुर्होतारं प्रदिशोऽनुक्लृप्तं वाचो वीर्यं तपसाऽन्वविन्दत्" इत्यादिशब्दानामन्यविषयत्वम् । श्रुतिसन्देहेऽनन्यथासिद्धलिङ्गेन निर्णयोपपत्तेः ॥७॥

---

१ "अन्तः समुद्र मनसा चरन्तम् । ब्रह्माऽन्वविन्दद् दशहोतारमर्णे, समुद्रे अन्तः कवयो विचक्षते मरीचीनां पदमिच्छन्ति वेधसः, यस्याण्डकोशम्—" इत्यादि प्र. पाठः । २ "इति चतुर्वेदशिखायाम्" ३ "आनन्दमयत्वे" इति प्र पाठौ ।

भाष्यम्

## ॥ आकाशस्तल्लिङ्गात् ॥२२॥

"अस्य लोकस्य का गतिरित्याकाश इति होवाच" इत्यत्र भूताकाशस्य प्राप्तिः। नचासौ युज्यते। किन्तु विष्णुरेव।

"स एष परोवरीयानुद्गीथः स एषोऽनन्तः" इत्यादितल्लिङ्गात्। "विष्णोर्नु कं वीर्याणि प्र वोचं यः पार्थिवानि वि ममे रजांसि", "परो मात्रया तन्वा वृधान[1] न ते महित्वमन्वश्नुवन्ति" इत्यादिना तस्य हि तल्लिङ्गम्[2]। "अनन्तो भगवान् ब्रह्म आनन्देत्यादिभिः पदैः। प्रोच्यते विष्णुरेवैकः परेषामुपचारतः" इति च ब्राह्मे[3]। "नामानि सर्वाणि यमाविशान्ति" इति चोक्तम् ॥*॥

॥*॥ इत्यष्टममधिकरणम् ॥*॥

## ॥ अत एव प्राणः ॥२३॥

"तद् वै त्वं प्राणो अभवो महान् भोगः प्रजापतेः। भुजः करिष्यमाणो यद् देवान् प्राणयो नव" इति महाभोगशब्देन परमानन्दत्वं प्राणस्योक्तम्।

स च प्राणः प्रसिद्धेर्वायुरित्यापतति। नचैवम्। यतो विष्णुरेव प्राणः। अत एव "श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे" इत्यादितल्लिङ्गादेव ॥*॥

॥*॥ इति नवममधिकरणम् ॥*॥

"यो वेद निहितं गुहायाम्" इत्युक्तम्। तच्च गुहानिहितम्—"वि मे कर्णा पतयतो वि चक्षुर्वीदं ज्योतिर्हृदय आहितं यत्। वि मे मनश्चरति दूरआधीः किं स्विद् वक्ष्यामि किमु नू मनिष्ये" इति ज्योतिरुक्तम।

तच्च ज्योतिरग्निसूक्तत्वात् प्रसिद्धेश्चाग्निरेवेति प्राप्तम्। अत आह—

## ॥ ज्योतिश्चरणाभिधानात् ॥२४॥

विष्णुरेव ज्योतिः। कर्णादीनां विचरणाभिधानात्। स हि "परो मात्रया तन्वा वृधान" इत्यादिना कर्णादिविदूरः ॥*॥

अनुव्याख्यानम्

वस्तु विवरादिः कथं ततः ॥२४०॥ इति शङ्कानिवृत्त्यर्थमाकाश इति नाम च। परतोऽपिवरीयस्त्वपूर्वालिङ्गाद्धरेर्भवेत् ॥२४१॥ नभो ददाति श्वसतां मार्गं यन्नियमाददः। इत्यादिवाक्यैरध्यात्ममन्वयव्यतिरेकतः॥२४२॥ प्राणादिहेतुतादृष्टेरतिदेशो हि तादृशः। लिङ्गं बलवदेव स्यात्

न्यायविवरणम्

अधिभूताध्यात्माधिवेदगतानामपि शब्दानामचेतनजीवान्वयव्यतिरेकनित्यत्वेषु[4] विद्यमानेष्वपि

---

१ "तन्वा वृधान इत्यादिना" इतीयानेव प्र. पाठः। २ "तस्यैव हि तल्लिङ्गम्" ३ "इति ब्राह्मे" ४ "अचेतनत्वजीवान्वयव्यतिरेकित्वनित्यत्वेषु" इति प्र. पाठः।

भाष्यम्

॥ छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात् तथाहि दर्शनम् ॥२५॥

"अथ यदतः परो दिवो ज्योतिर्दीप्यते" इत्युक्तस्य ज्योतिषः "गायत्री वा इदं सर्वम्" इति गायत्र्या समारम्भः कृतः। तस्मान्न विष्णुरिति चेन्न। तथा चेतोऽर्पणार्थं हि निगद्यते। अग्नि-गायत्र्यादिशब्दार्थरूपोऽसाविति चेतोऽर्पणार्थं हि निगद्यते। तथाहि दर्शनम्— "गायति च त्रायति च[1]" इत्यादि।

"सर्वच्छन्दोभिधो ह्येष सर्वदेवाभिधोऽप्यसौ[2]। सर्वलोकाभिधोऽप्येष[3] तेषां तदुप-चारतः" इति वामने ॥*॥

"तावानस्य महिमा ततो ज्यायांश्च पूरुषः। पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि" इति—

॥ भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥२६॥

"सुवर्णं कोशं रजसा परीवृतं देवानां वसुधानीं विराजम्। अमृतस्य पूर्णां तामु कलां वि चक्षते पादं षड्ढोतुर्न किला विवित्से" इति श्रुतेः पाद इति चैकदेशपरिमितम्, चतुर्भागबल इतिवद् भिन्नं च।

स हि पुरुषसूक्ताभिधेयः—

"यज्ञेन यज्ञमयजन्त" इति यज्ञशब्दात्। "यज्ञो विष्णुर्देवता" इति हि श्रुतिः।

"तस्मिन् काले महाराज राम एवाभिधीयते। यथा हि पौरुषे सूक्ते विष्णुरेवा-भिधीयते" इति च स्कान्दे ॥*॥

॥ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥२७॥

"त्रिपादस्यामृतं दिवि" इति पूर्वोपदेशः। "परो दिवः" इति पञ्चम्यन्तः पश्चिमः। तस्मान्नैकं वस्त्वत्रोच्यत इति चेन्न। त्रिसप्तलोकापेक्षयोभयस्मिन्नप्यविरोधात् ॥*॥

॥*॥ इति दशममधिकरणम् ॥*॥

प्राणो विष्णुरित्युक्तम्। तत्र "ता वा एताः शीर्षञ्छ्रियः श्रिताश्चक्षुः श्रोत्रं मनो वाक् प्राणः" इत्यत्र प्राणस्य विष्णुत्वं न विद्यते[4]। इन्द्रियैः सहाभिधानादित्यत आह—

अनुव्याख्यानम्

प्रेरकोऽस्यापि यद्धरिः ॥२४३॥ नित्यत्वादेव शब्दस्य तत्स्वभावः कथं हरेः। कथं प्रसिद्धबहुल-शब्दानामयथार्थता ॥२४४॥ इति चेत् तद्धरेरेव बाहुल्याच्छ्रुतिलिङ्गयोः। तादृशत्वाच्च तच्छक्ते-

न्यायविवरणम्

भगवद्विषयत्वमेवानन्यथासिद्धैर्लिङ्गैः[5]। "तावानस्य महिमा ततो ज्यायांश्च पूरुषः" इत्यादिशब्दस-हितलिङ्गैश्च। सन्दिग्धश्रुतिलिङ्गाभ्यां युक्ताभ्यामप्यसन्दिग्धयोः केवलयोरपि[6] बलवत्त्वात् ॥८-१०॥

---

१ "गायति त्रायति च" २ "देवाभिधो ह्यसौ" ३ "लोकाभिधो ह्येषः" ४ "न युज्यते" इतिप्र.पाठाः। ५ प्राचीनकोशेषु "अन्यथासिद्धलिङ्गैः" इति पठ्यते। स्खलितं वा स्यात्। असकृद् दर्शनात् तथैव पाठ इत्यङ्गीकारे 'अन्यथा असिद्धलिङ्गैः' इति व्याख्येयम्। ६ "केवलयोरेव बलवत्त्वात्" इति प्र.पाठः।

भाष्यम्

॥ प्राणस्तथाऽनुगमात् ॥२८॥

"तं देवाः प्राणयन्त", "स एषोऽसुः स एष प्राणः", "प्राण ऋच इत्येव विद्यात्", "तदयं प्राणोऽधितिष्ठति" इत्याद्यनुगमादत्रापि प्राणो विष्णुरेव। "विष्णुमेवानयन् देवा विष्णुं भूतिमुपासते। स एव सर्ववेदोक्तस्तद्रथो देह उच्यते" इति स्कान्दे। ब्रह्मशब्दानुगमाच्च ॥*॥

॥ न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥२९॥

"प्राणो वा अहमस्म्यृषे" इति वक्तुरध्यात्मोपदेशादिन्द्र एवेति चेन्न। "प्राणस्त्वं प्राणः सर्वाणि भूतानि" इति बह्वध्यात्मसम्बन्धो ह्यत्र विद्यते ॥*॥

॥ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥३०॥

शास्त्रमन्तर्यामी—

"संविच्छास्त्रं परं पदम्" इति हि भागवते "तत्तन्नाम्नोच्यते विष्णुः सर्वशास्तृत्वतो[1] हरिः। न क्वापि किञ्चिन्नामास्ति तमृते पुरुषोत्तमम्" इति च पाद्मे[2]। "अहं मनुरभवं सूर्यश्च" इत्यादिवत् ॥*॥

॥ जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥३१॥

"तावन्ति शतसंवत्सरस्याह्नां सहस्राणि भवन्ति" इति जीवलिङ्गम्। प्राणसंवादादि मुख्यप्राणलिङ्गम्। तस्मान्नेति चेन्न। अन्तर्बहिःसर्वगतत्वेनेत्युपासात्रैविध्यादिहाऽऽश्रितत्वाच्च—

"स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत", "स एतमेव पुरुषं ब्रह्म ततमम· पश्यत्", "एतद्ध स्म वै तद् विद्वानाह महिदास ऐतरेयः" इत्यादिना। "महिदासाभिधो जज्ञ इतरायास्तपोबलात्। साक्षात् स भगवान् विष्णुर्यस्तन्त्रं वैष्णवं व्यधात्" इति च ब्रह्माण्डे[3]।

अनुव्याख्यानम्

बाहुल्ये श्रुतिलिङ्गयोः ॥२४५॥ अन्यस्य मुख्यवाच्यत्वमिति तन्नात्रगस्य हि। विष्णोरेव तु लिङ्गानि प्राणस्थानि तु सर्वशः ॥२४६॥ प्राणसंवादपूर्वाणि मुख्यतो जीवगानि च। अभ्यार्च· च्छतवर्षाणि प्राणवंशत्वमित्यपि ॥२४७॥ तस्मादन्यत्रगैः शब्दैरुक्तन्यायैः समन्ततः। एको

न्यायविवरणम्

न[4]चानन्यथासिद्धत्वमन्यत्र श्रुतिलिङ्गादेः। अन्यगतलिङ्गादीनामपि त[5]द्गभगवदपेक्षया युक्तेः ॥११॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे
प्रथमाध्यायस्य प्रथमः पादः

---

१ "सर्वशास्तृत्वहेतुतः" २ "इति पाद्मे" ३ "इति ब्रह्माण्डे" इति प्र.पाठाः। ४ अत्रापि प्राचीनकोशेषु "नचान्यथा(ऽ)सिद्धत्वम्" इत्येव पठ्यते। ५ "तद्गतभगवदपेक्षया" इति प्र. पाठः।

भाष्यम्

तत्तदुपासनायोग्यतया च पुरुषाणाम्—

"केषाञ्चित् सर्वगत्वेन केषाञ्चिद्धृदये हरिः। केषाञ्चिद् बहिरेवासावुपास्यः पुरुषोत्तमः" इति ब्राह्मे। "अग्नौ क्रियावतां विष्णुर्योगिनां हृदये हरिः। प्रतिमास्वप्रबुद्धानां सर्वत्र विदितात्मनाम्" इति च ॥*॥

॥*॥ इत्येकादशमधिकरणम् ॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीमद्ब्रह्मसूत्रभाष्ये
— प्रथमाध्यायस्य प्रथमः पादः —

ॐ॥ लिङ्गात्मकानां शब्दानां विष्णौ प्रवृत्तिं दर्शयत्यस्मिन् पादे प्राधान्येन।

"ब्रह्म ततमम्" इति सर्वगतत्वमुक्तं विष्णोः। तच्च "तस्यैतस्यासावादित्यो रसः" इत्यादिनाऽऽदित्यस्य प्रतीयत इत्यतोऽब्रवीत्—

॥ सर्वत्र प्रसिद्धोपदेशात् ॥१॥

"स यश्चायमशरीरः प्रज्ञात्मा" इत्यादिना सर्वत्रोच्यमानो नारायण एव। "तदेव ब्रह्म परमं कवीनाम्", "परमं यो महद् ब्रह्म", "वासुदेवात् परः को नु ब्रह्मशब्दोदितो भवेत्। स हि सर्वगुणैः पूर्णस्तदन्ये तूपचारतः" इति तस्मिन्नेव प्रसिद्धब्रह्मशब्दोपदेशात् ॥*॥

"स योऽतोऽश्रुतः" इत्यादि—

॥ विवक्षितगुणोपपत्तेश्च ॥२॥

स हि "न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप" इत्यादिनाऽश्रुतत्वादिगुणः। "स सविता स वायुः स इन्द्रः सोऽश्रुतः सोऽदृष्टो यो हरिर्यः परमो यो विष्णुर्योऽनन्तः" इत्यादि च चतुर्वेदशिखायाम् ॥*॥

अनुव्याख्यानम्

नारायणो देवो भण्यते नात्र संशयः ॥२४८॥ वासुदेवादिरूपेण चतुर्मूर्तिश्च सर्वशः। अथवा पञ्चमूर्तिः स प्रोक्तोऽधिकरणं प्रति ॥२४९॥ प्रतिसूत्रं प्रतिपदं प्रत्यक्षरमथापि वा। तैस्तैर्युक्तिश्रुतिन्यायविशेषैर्योग्यता यथा ॥२५०॥ बृहत्तन्त्रप्रमाणेन बह्वर्थमपि सङ्ग्रहात्। उच्यते नरबुद्धीनामपि किञ्चिद्ग्रहार्थतः ॥२५१॥ ग्रन्थोऽयमपि बह्वर्थो भाष्यं चात्यर्थविस्तरम्। बहुज्ञा एव जानन्ति विशेषेणार्थमेतयोः। तस्मान्महागुणो विष्णुर्नाम्नामपुनरुक्तितः ॥२५२॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीमद्ब्रह्मसूत्रानुव्याख्याने
— प्रथमाध्यायस्य प्रथमः पादः —

१ "न ते विष्णो जायमानो न जात इत्यादिना" २ "इत्यादि चतुर्वेदशिखायाम्" इति प्र. पाठौ।

भाष्यम्

नचाऽऽदित्यशब्दाच्चक्षुर्मयत्वादेश्च जीव इति वाच्यम्—

॥ अनुपपत्तेस्तु न शारीरः ॥३॥

एकस्य सर्वशरीरस्थत्वानुपपत्तेरेव ॥*॥

"आत्मानं परस्मै शंसति" इत्यादि—

॥ कर्मकर्तृव्यपदेशाच्च ॥४॥

"एतमेव ब्रह्मेत्याचक्षते" इति—

॥ शब्दविशेषात् ॥५॥

नहि जीवमेव ब्रह्मेत्याचक्षते।

"एष उ एव ब्रह्मैष उ एवाऽऽत्मैष उ एव सवितैष उ एवेन्द्रो[1] य उ एव हरिर्हरति परः परानन्दः" इति चेन्द्रद्युम्नशाखायाम् ॥*॥

॥ स्मृतेश्च ॥६॥

"अहमात्मा गुडाकेश सर्वभूताशयस्थितः। गामाविश्य च भूतानि धारयाम्यहमोजसा" इत्यादि।

नैचाप्रमाणकं[2] कल्प्यम् ॥*॥

॥ अर्भकौकस्त्वात् तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥७॥

"सर्वेषु भूतेषु" इत्यल्पौकस्त्वाच्चक्षुर्मयत्वादिना जीवव्यपदेशाच्च नेति चेन्न। अर्भकौकस्त्वेन चक्षुर्मयत्वादिरूपेण च तस्यैव विष्णोर्निचाय्यत्वात्। सर्वगतत्वेऽप्यल्पौकस्त्वं युज्यते च व्योमवत्[3]।

"सर्वेन्द्रियमयो विष्णुः सर्वप्राणिषु च स्थितः। सर्वनामाभिधेयश्च सर्ववेदेडितश्च सः[4]" इति च स्कान्दे[5] ॥*॥

अनुव्याख्यानम्

ॐ ॥ लिङ्गात्मकानां शब्दानां वृत्तिर्नारायणे परे। चिन्त्यते सर्वगत्वं तु प्रथमं प्रविचार्यते ॥ ॥१॥ तत्र तत्र स्थितो विष्णुस्तत्तच्छक्तिप्रबोधकः। दूरतोऽप्यतिशक्तः स लीलया केवलं प्रभुः ॥२॥ इति ज्ञापयितुं कर्मकर्त्रोरुत्सर्गतो भिदा। अभेदोऽपि विशेषे स्याद् बली सोऽप्यनपोदितः ॥३॥ एतद् भावाभिधं लिङ्गं क्रियालिङ्गं ततः परम्। अन्तर्याम्यन्तरश्चेति क्रिया-

न्यायविवरणम्

ॐ ॥ बहुलिङ्गसहितश्रुतेरपि सावकाशाया निरवकाशश्रुत्यादीनामेव बलवत्त्वम्। बहवो ह्यत्राऽऽदित्यशब्दाः[6]। क्षित्यादिषूक्त्वाऽऽदित्येऽनुक्तिरित्यादिलिङ्गं च। तथाऽपि निरवकाशाः "एतमेव" इत्यवधारणादयः ॥१॥

---

१ "इन्द्र एष उ एव हरिः" २ "नचाप्रामाणिकम्" ३ "अल्पौकस्त्वं च युज्यते व्योमवत्" ४ "सर्ववेदोदितश्च सः" ५ "इति स्कान्दे" इति प्र. पाठाः। ६ क्वचित् कोशे "आदित्यादिशब्दाः" इति पठ्यते।

भाष्यम्

## ॥ सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॥८॥

जीवपरयोरेकशरीरस्थत्वे समानभोगप्राप्तिरिति चेन्न । सामर्थ्यवैशेष्यात् । उक्तं हि गारुडे[1]–

"सर्वज्ञाल्पज्ञताभेदात् सर्वशक्त्यल्पशक्तितः । स्वातन्त्र्यपारतन्त्र्याभ्यां सम्भोगो नेशजीवयोः" इति च ॥*॥

॥*॥ इति प्रथममधिकरणम् ॥*॥

"जन्माद्यस्य यतः" इत्युक्तम् । तत्रात्तृत्वम्— "स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्वं वा अत्तीति तददितेरदितित्वम्" इत्यदितेः प्रतीयते । [2]पुंलिङ्गं च "कूटस्थोऽक्षर उच्यते" इत्यादिवदित्यत्रोच्यते[3]—

## ॥ अत्ता चराचरग्रहणात् ॥९॥

नहि चराचरस्य सर्वस्यात्तृत्वमदितेः ।

"स्रष्टा पाता तथैवात्ता निखिलस्यैक एव तु । वासुदेवो वरः[4] पुंसामितरेऽल्पस्य वा नवा" इति स्कान्दे । "एकः पुरस्ताद् य इदं बभूव यतो बभूव भुवनस्य गोपाः । यमप्येति भुवनं साम्पराये स नो हरिर्घृतमिहाऽयुषेऽत्तु देवः" इति च श्रुतिः[5] ॥*॥

## ॥ प्रकरणाच्च ॥१०॥

अप्संवत्सरसृष्ट्यादिना तत्प्रकरणाच्च[6] ।

"नेहाऽसीत् किञ्चनाप्यादौ मृत्युरासीद्धरिस्तदा । सोत्मनो मनसाऽस्राक्षीदप एव जनार्दनः । शयानस्तासु भगवान् निर्ममेऽण्डं महत्तरम् । तत्र संवत्सरं नाम ब्रह्माणमसृजत् प्रभुः । तमत्तुं व्याददादास्यं तदाऽसौ विरुराव ह । अथ तत्कृपया विष्णुः सृष्टिकर्म न्ययोजयत्[7] । सोऽसृजद् भुवनं सर्वमाद्यार्थं[8] हरये विभुः" इति च ब्रह्मवैवर्ते[9] ॥*॥

॥*॥ इति द्वितीयमधिकरणम् ॥*॥

अनुव्याख्यानम्

भावाख्यमुच्यते ॥४॥ अदृश्यत्वाद्यभावाख्यं श्रुतिर्लिङ्गाधिका परा ॥*॥ अनित्यत्वात् क्रियाणां तु कथमेव स्वरूपता ॥५॥ इति चेत् स विशेषोऽपि क्रियांशक्त्यात्मना स्थिरः। शक्तिता व्यक्तता[10] चेति विशेषोऽपि विशेषवान् ॥६॥ अभिन्नोऽपि क्रियादिश्च स्वभाव इति हि श्रुतिः। ज्ञानं नित्यं

न्यायविवरणम्

सन्दिग्धश्रुतिलिङ्गाभ्यां निश्चितलिङ्गप्रकरणयोरेव बलवत्त्वम् । सन्दिग्धश्रुतिर्लिङ्गं चादितिशब्दोऽदितित्वं च ॥२॥

---

१ "उक्तं च गारुडे" २ स यद्यदेवासृजतेति पुंलिङ्गं च" ३ "इत्यादिवत् । अत्रोच्यते" ४ "वासुदेवः परः पुंसाम्" ५ "इति श्रुतिः" ६ "तत्प्रकरणत्वाच्च" इति प्र. पाठाः । ७ "सृष्टिकर्मण्ययोजयत्" इति प्र. पाठः । प्राचीनपाठे कर्मेति द्वितीया । सृष्टिकर्म कर्तुं ब्रह्माणं नियोजयति स्म । सृष्टिकर्म प्रति वा । ८ "सर्वमद्यार्थम्" इति प्र. पाठः । उभयथाप्यर्थः समानः । ९ "इति ब्रह्मवैवर्ते" १० "व्यक्तिता चेति" इति प्र.पाठौ ।

भाष्यम्

सर्वात्तैकः पर उक्तः। "ऋतं पिबन्तौ सुकृतस्य लोके" इति पिबन्तौ प्रतीयेते। तौ कावित्युच्येते[2]—

॥ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥११॥

गुहां प्रविष्टौ पिबन्तौ विष्णुरूपे एव।[1]

"घर्मा समन्ता त्रिवृतं[3] व्यापतुस्तयोर्जुष्टिं मातरिश्वा जगाम" इत्यादिना तद्दर्शनात्। "आत्माऽन्तरात्मेति हरिरेक एव द्विधा स्थितः। निविष्टो हृदये नित्यं रसं पिबति कर्मजम्" इति बृहत्संहितायाम्। "शुभं पिबत्यसौ नित्यं नाशुभं स हरिः पिबेत्। पूर्णानन्दमयस्यास्य चेष्टा न ज्ञायते क्वचित्" इति पाद्मे।

"यो वेद निहितं गुहायाम्" इत्यादिना प्रसिद्धं हिशब्देन दर्शयति ॥*॥

"यः सेतुरीजानानामक्षरं ब्रह्म यत् परम्" इति—

॥ विशेषणाच्च ॥१२॥

पृथग् वक्तुं गुणास्तस्य न शक्यन्तेऽमितत्वतः। यतोऽतो ब्रह्मशब्देन सर्वेषां वचनं भवेत्[4]। एतस्माद् ब्रह्मशब्दोऽयं विष्णोरेव विशेषणम्। अमिता हि गुणा यस्मान्नान्येषां तमृते विभुम्" इति ब्राह्मे।

नच जीवे समन्वयोऽभिधीयते।

अनुव्याख्यानम्

क्रिया नित्या बलं शक्तिः परात्मनः। नित्यानन्दोऽव्ययः पूर्णो भगवान् विष्णुरच्युतः ॥७॥
इति पैङ्गिश्रुतिश्चाऽह शक्तिसद्भाव एव तु। क्रियादिनित्यता ज्ञेया तदन्यत्र त्वनित्यता ॥८॥
इति सत्तरववचनं द्वित्वं चैकस्य युज्यते। यः सेतुरिति चैकत्ववचनेन विशेषणात् ॥९॥*॥

---

१ इतः परं प्र. पाठे—"**गुहां प्रविष्टौ परमे परार्द्धे। छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिनाचिकेताः**" इत्यन्तं श्रुतिवचनं पठ्यते। २ "**तौ कावित्युच्यते**" इति प्र.पाठः। ३ "**समन्ता त्रिवृतम्**" इत्येव प्राचीनकोशसम्मतः वेदसम्प्रदायसम्मतश्च पाठः। तथा हि तत्त्वदीपिका च—"समन्तौ पूर्णौ" इति। ननु तर्हि कथं "समन्ताद् विद्यमानौ" इति गुर्वर्थदीपिका सङ्गच्छेत, पदपाठविरोधादिति ? इत्थं समाधेयम्-समन्ता इति वा भवतु पदपाठः। समन्तादिति वा भवतु। उभयथाऽपि संहितायां "**समन्तात्त्रिवृतम्**" इति द्वितकारोत्तररेफः पाठो भवतीति प्रातिशाख्ये स्थितम्। तद् यथा 'आ त्वा' इति स्थिते 'आत्त्वा' इति पठन्ति। तस्मात् समन्ता इति समन्तादिति द्वेधा च व्याख्यानं भवति। ननु तर्हि कथं पादपाठः? अयोगव्यवच्छेद एवायम्। नान्ययोगव्यवच्छेदः! अत एव ज्योतिरधिकरणे "**वि मे मनश्चरति दूरआधीः**" इत्यत्र पदपाठरीत्या दूरआधीरित्यैकपद्येऽपि दूरे विचरतीति विभज्य व्याख्यातं तत्त्वप्रकाशिकायाम्। अत एव च "**पुरुष एवेदं सर्वम्**" इत्यत्र 'पुरुषः' इति पदपाठेऽपि पुरुषे सर्वं प्रतिष्ठितमिति सप्तम्यन्ततया व्याचक्षते। 'तत् त्वमसि'—'अतत् त्वमसि' इति द्वेधा च्छेदस्तु सर्वविदितः। ४ "**सर्वेषां ग्रहणं भवेत्**" इति प्र. पाठः।

भाष्यम्

"सत्य आत्मा, सत्यो जीवः, सत्यं भिदा सत्यं भिदा सत्यं भिदा, मैवाऽरुवण्यो मैवाऽरुवण्यो मैवाऽरुवण्यः" इति पैङ्गिश्रुतेः[1]। "यथेश्वरस्य जीवस्य भेदः सत्यो विनिश्चयात्। एवमेव हि मे वाचं सत्यां कर्तुमिहार्हसि", "यथेश्वरश्च जीवश्च सत्य-भेदौ परस्परम्। तेन सत्येन मां देवास्त्रायन्तु सहकेशवाः" इत्यादेर्नासत्यो भेदः ॥*॥

॥*॥ इति तृतीयमधिकरणम् ॥*॥

आदित्ये विष्णुरित्युक्तम्। "य एष आदित्ये पुरुषः सोऽहमस्मि स एवाहमस्मि" इत्यादावग्नी-नामेवाऽदित्यादिस्थत्वमुच्यते। अतोऽक्ष्यादित्ययोरैक्यात् "य एषोऽन्तरक्षिणि पुरुषो दृश्यते" इत्यत्राप्यग्निरेवोच्यते। अतः "तद् यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते" इत्यग्निज्ञानादेव सर्वपापाश्लेषान्मोक्षोपपत्तिरित्यतो ब्रवीति—

॥ अन्तर उपपत्तेः ॥१३॥

चक्षुरन्तस्थो विष्णुरेव। "त्रिपादस्यामृतं दिवि" इत्यादिना तस्यैवामृतत्वाद्युपपत्तेर्ब्रह्मात्म-शब्दाद्युपपत्तेश्च[2]। "सोऽहमस्मि" इत्यादि त्वन्तर्याम्यपेक्षया—

"अन्तर्यामिणमीशेशमपेक्ष्याहं त्वमित्यपि। सर्वशब्दाः[3] प्रयुज्यन्ते सति भेदेऽपि वस्तुषु" इति कौर्मे[4] ॥*॥

॥ स्थानादिव्यपदेशाच्च ॥१४॥

"[5]सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति" इत्यादिस्थानशक्तिः, [6]भामनिर्वामनिरित्याद्या-त्मशक्तिश्चोच्यते। तस्य ह्येतल्लिङ्गम्—

"स ईशः सोऽसपत्नः स हरिः स परः परोवरीयान् यदिदं चक्षुषि सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति स भामनः स वामनः स आनन्दः[7] सोऽच्युतः" इति हि चतुर्वेदशिखायाम्[8]। "यत्स्थानत्वादिदं चक्षुरसङ्गं सर्ववस्तुभिः। स वामनः परोऽस्माकं गतिरित्येव चिन्तय" इति च वामने[9] ॥*॥

अनुव्याख्यानम्

अन्तः स्थित्वा रमणकृदन्तरः समुदाहृतः[10]। रमणं चाऽत्मशब्देनाऽदेयं मातीति चोच्यते॥१०॥

न्यायविवरणम्

द्विवचनश्रुतेरपि निरवकाशत्वं[11] नास्ति। विष्णोरेव द्विरूपत्वात्॥३॥ "सोऽहमस्मि स एवाहमस्मि" इत्याद्यभ्यासार्थवादसहितबहुश्रुतिभ्योऽपि निरवकाशोपपत्तेरेव प्राबल्यम्॥४॥

---

१ इतः परं प्र. पाठे "आत्मा हि परमः स्वतन्त्रोऽधिगुणो जीवोऽल्पशक्तिरस्वतन्त्रोऽवर इति च भाल्लवेयश्रुतिः" इत्यधिकम्। २ "ब्रह्मशब्दाद्युपपत्तेश्च" ३ "सर्वे शब्दाः" ४ "इति महाकौर्मे" ५ "तद्यदस्मिन् सर्पिर्वोदकं वा सिञ्चति" ६ "वामनिर्भामनिरित्यादि" ७ "स वामनः स भामनः स आनन्दः" ८ "इति चतुर्वेदशिखायाम्" ९ "चिन्तयेदिति वामने" १० "समुदीरितः" ११ "श्रुतेरपि बलं निरवकाशत्वम्" इति प्र.पाठाः।

भाष्यम्

॥ सुखविशिष्टाभिधानादेव च ॥१५॥

"प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म" इति। "विज्ञानमानन्दं ब्रह्म", "आनन्दो ब्रह्मेति व्यजानात्" इत्यादेस्तस्यैव तल्लक्षणम्[१]। "लक्षणं परमानन्दो विष्णोरेव न संशयः। अव्यक्तादितृणान्तास्तु विप्लुंडानन्दभागिनः[२]" इति ब्रह्मवैवर्ते।

नच मुख्ये सत्यमुख्यं युज्यते ॥*॥

॥ श्रुतोपनिषत्कगत्यभिधानाच्च ॥१६॥

"स एनान् ब्रह्म गमयति" इति। नह्यन्यविद्ययाऽन्यगतिर्युक्ता ॥*॥

॥ अनवस्थितेरसम्भवाच्च नेतरः ॥१७॥

जीवस्य जीवान्तरनियामकत्वेऽनवस्थितेः साम्यादसम्भवाच्च न जीवः। नियमप्रमाणाभावात्। अनीश्वरापेक्षत्वाच्च ॥*॥

॥*॥ इति चतुर्थमधिकरणम् ॥*॥

"यः पृथिव्यां तिष्ठन्" इत्याद्यन्तर्याम्युच्यते[३]। तत्र च "एतदमृतम्" इत्युक्तममृतत्वमुच्यते। स च "यस्य पृथिवी शरीरम्" इत्यादिना सर्वात्मकत्वात् प्रकृतिस्तत्तज्जीवो वा युक्तः। नहि विष्णोः पृथिव्यादिशरीरत्वमङ्गीक्रियत इत्यत आह—

॥ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥१८॥

"यं पृथिवी न वेद", "पृथिव्या अन्तरः[४]" इत्यादिनाऽधिदैवादिषु तद्धर्मव्यपदेशाद् विष्णुरेवान्तर्यामी।

स हि—"न[५] ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप", "स योऽतोऽश्रुतः", "सर्वेषां भूतानामन्तरपुरुषः" इत्यादिनाऽविदितोऽन्तरश्च ॥*॥

अनुव्याख्यानम्

विशिष्टसुखवत्त्वाच्च ब्रह्मत्वं च विशिष्टता। अन्योन्यनियतिश्चेशनियमे नान्यथा भवेत् ॥११॥ चेतनानां विशेषो यः स्वभावोऽपीश्वरार्पितः। अन्योन्यनियमे तस्मादनवस्थित्यसम्भवौ ॥१२॥ ईश्वरश्चेन्नियन्ता च[६] स एव प्रथमागतः। किमित्यपोद्यते कस्माद् वृथाऽवस्थितिकल्पना। दोषवत्येव तस्मात् सा नैव कार्या कथञ्चन ॥१३॥*॥ रमणं नातियत्नस्य

न्यायविवरणम्

पृथिव्यादिशरीरत्वं च न निरवकाशम्। यौगिकशरीरवत्त्वोपपत्तेर्[७]विष्णोरपि ॥५॥

---

१ "तस्यैव हि तल्लक्षणम्" २ "विप्रुडानन्दभागिनः" ३ "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिव्यामन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत इत्याद्यन्तर्याम्युच्यते" इति प्र.पाठाः। क्वचित् "इत्यादिनाऽन्तर्याम्युच्यते" इति पाठः। "इत्यादीति प्रथमा तृतीयार्थे सप्तम्यर्थे वा"इति तत्त्वदीपिका। ४ "यः पृथिव्या अन्तरः" ५ "न ते विष्णो जायमानो न जातः, स योऽतोऽश्रुतोऽगतोऽमतोऽनतोऽदृष्टोऽविज्ञातोऽनादिष्टः सर्वेषां भूतानामन्तरपुरुषः" ६ "नियन्ता स्यात्" ७ "शरीरत्वोपपत्तेः" इति प्र. पाठाः।

भाष्यम्

॥ नच स्मार्तमतद्धर्माभिलापात् ॥१९॥

त्रिगुणत्वादिप्रधानधर्मानुक्तेर्न स्मृत्युक्तं प्रधानमन्तर्यामी ॥*॥

॥ शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥२०॥

"य[1] आत्मनि तिष्ठन्नात्मनोऽन्तरः", "यो विज्ञाने तिष्ठन्" इत्युभयेऽपि शाखिनो भेदेन जीवमधीयते।

"शीर्यते नित्यमेवास्माद् विष्णोस्तु जगदीदृशम्। रमते च परोऽप्यस्मिन्[2] शरीरं तस्य तज्जगत्" इति वचनान्न शरीरत्वविरोधः ॥*॥

॥*॥ इति पञ्चममधिकरणम् ॥*॥

अदृश्यत्वादिगुणा विष्णोरुक्ताः। "य[3]त्तदद्रेश्यमग्राह्यम्" इत्युक्त्वा तस्माच्च "अक्षरात् परतः परः" इति परः प्रतीयत इत्यतो ब्रवीति—

॥ अदृश्यत्वादिगुणको धर्मोक्तेः ॥२१॥

पृथिव्यादिदृष्टान्तमुक्त्वा, "अक्षरात् सम्भवतीह विश्वम्" इत्यतः परं तत्परतःपराभिधानात्, "कूटस्थोऽक्षर उच्यते" इति स्मृतेश्च प्रकृतेः प्राप्तिः। ब्रह्मशब्दात् तत्परतःपराभिधानादेव च हिरण्यगर्भस्य।

"तमेवं विद्वानमृत इह भवति", "तत् कर्म हरितोषं यत् सा विद्या तन्मतिर्यया", "अथ द्वे वाव विद्ये वेदितव्ये परा चापरा च[4]। तत्र ये वेदा यान्यङ्गानि यान्युपाङ्गानि

अनुव्याख्यानम्

विक्षेपादेव युज्यते। इति चेत् सर्वनियमो यस्य कस्मान्न शक्यते ॥१४॥ आत्मना[5]ऽनियतं वस्तु प्रतीपं ह्यात्मनो भवेत्। स्वाधीनसत्ताशक्त्यादि कथमात्मप्रतीपकम् ॥१५॥*॥ गुणक्रियादयो भावा यदिवा स्युरभेदिनः। अभेदोऽभावधर्माणां ब्रह्मणा युज्यते कथम् ॥१६॥ नाभावो भाव इति च विशेषः प्रायशो भवेत्। अतद्भावोऽन्यता चेति न विशेषोऽस्ति कश्चन ॥१७॥ दोषाभावो गुण इति प्रसिद्धो लौकिकेष्वपि। अदृश्यत्वादिकांस्तस्माद् गुणानाह स्वयं प्रभुः ॥१८॥ भावाभावविरोधोऽपि नतु सर्वत्र विद्यते। तदभावो हि तद्भावविरोधी न

---

१ "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽत्मा शरीरं य आत्मानमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः, यो विज्ञाने तिष्ठन् विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानं शरीरमित्युभयेऽपि हि शाखिनो भेदेनैनं जीवमधीयते" २ "परो ह्यस्मिन्" ३ "यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादम्। नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीरा इत्युक्त्वा यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति। यथा सतः पुरुषात् केशलोमानि तथाऽक्षरात् सम्भवतीह विश्वम्-इत्युक्त्वा तस्माच्च—अक्षरात् परतः पर इति परः प्रतीयते। अतो ब्रवीति" ४ "परा चैवापरा च" ५ "स्वात्मना" इति प्र. पाठाः।

भाष्यम्

यानि प्रत्यङ्गानि साऽपराऽथ परा यया स हरिर्वेदितव्यो योऽसावद्दश्यो निर्गुणः परः परात्मा"इत्यादिना तद्धर्मत्वेनावगतपरविद्याविषयत्वोक्तेर्विष्णुरेवाद्दश्यत्वादिगुणकः॥*॥

॥ विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥२२॥

"यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः" इति विशेषणान्न प्रकृतिः। "तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते" इति भेदव्यपदेशान्न विरिञ्चः। "अपरं त्वक्षरं या सा प्रकृतिर्जडरूपिका। श्रीः परा प्रकृतिः प्रोक्ता चेतना विष्णुसंश्रया। तामक्षरं परं प्राहुः परतः परमक्षरम्। हरिमेवाखिलगुणमक्षरत्रयमीरितम्" इति स्कान्दे त्र्यक्षराभिधानादक्षरात् परतः पर इत्यपि विशेषणमेव। "जुष्टं यदा पश्यत्यन्यमीशमस्य"[1] इति भेदव्यपदेशादीशशब्दप्राप्तोऽपि[2] न रुद्रः ॥*॥

॥ रूपोपन्यासाच्च ॥२३॥

"यदा पश्यः पश्यते रुग्मवर्णम्[3]" इति।

"एको नारायण आसीन्न ब्रह्मा नच शङ्करः। स मुनिर्भूत्वा समाचिन्तयत्तत[4] एते व्यजायन्त विश्वो हिरण्यगर्भोऽग्निर्यमो वरुणरुद्रेन्द्रा इति। तस्य हैतस्य परमस्य नारायणस्य चत्वारि रूपाणि शुक्लं रक्तं रौग्मं[5] कृष्णमिति। स एतान्येतेभ्योऽभ्यचीक्लृपत्[6]। विमिश्राणि व्यमिश्रयदत एतादृगेतद्रूपम्" इति तस्यैव हि रूपाण्यभिधीयन्ते ॥*॥

॥*॥ इति षष्ठमधिकरणम् ॥*॥

अदृश्यत्वादिगुणेषु सर्वगतत्वम्—"यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते" इति वैश्वानरस्योक्तमित्यत आह—

॥ वैश्वानरः साधारणशब्दविशेषात् ॥२४॥

अग्नाविष्ण्वोः साधारणवैश्वानरशब्दस्य[7] विष्णावेव प्रसिद्धात्मशब्देन विशेषणाद् वैश्वानरो विष्णुरेव ॥*॥

अनुव्याख्यानम्

ततोऽपरः ॥१९॥ पृथक्त्वाभावतद्रूपान् भेदांस्त्रीन् कल्पयन्ति चेत्। कल्पनागौरवाद्यास्तु दोषास्तत्र विरोधिनः ॥२०॥ पृथक्त्वान्यत्वभेदास्तु पर्यायेणैव लौकिकैः। व्यवह्रियन्ते सततं वैदिकैरपि सर्वशः ॥२१॥ दृष्टहानिरदृष्टस्य कल्पनेत्येव दूषणम्। यदा तदधिको दोषो विद्यते को नु वादिनाम् ॥२२॥ भावाभावस्वरूपास्तु विशेषा एव वस्तुनः। अभिन्ना एव सङ्ग्राह्या

न्यायविवरणम्

"अक्षरात् परतः परः" इति श्रुतेरपि न "अक्षरात् सम्भवतीह विश्वम्" इत्यस्या निरवकाशत्वम्[8]। अक्षरात् परतः परस्याप्यक्षरान्तरत्ववचनात् ॥६॥

---

१ प्र. पाठे "अस्य महिमानमिति वीतशोकः" इति समग्रं पठ्यते। २ "ईशपदप्राप्तोऽपि" ३ "रुक्मवर्णम्" ४ "समचिन्तयत्" ५ "रौक्मम्" इति प्र.पाठाः। ६ "ह्यचीक्लृपत्" इति क्वचित्पाठान्तरम्। ७ "साधारणस्य वैश्वानरशब्दस्य" ८ "सम्भवतीत्यस्या निरवकाशत्वम्" इति प्र. पाठौ ।

भाष्यम्

॥ स्मर्यमाणमनुमानं स्यादिति ॥२५॥

"अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः" इति स्मर्यमाणमत्रापि स एवोच्यत इत्यस्यानुमापकम्। समाख्यानात्। इतिशब्दः समाख्याप्रदर्शकः ॥*॥

॥ शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात् पुरुषविधमपि चैनमधीयते ॥२६॥

"अयमग्निर्वैश्वानरः", "वैश्वानरमृत आजातमग्निम्" इत्यादिः शब्दः[1]। "वैश्वानरे तद्धुतं भवति" "हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः" इत्याद्यग्निलिङ्गमादिशब्दोक्तम्। "येनेदमन्नं पच्यते", "तद्यद् भक्तं प्रथममागच्छेत् तद्धोमीयम्" इत्यादिना पाचकत्वेनान्तःप्रतिष्ठानं च प्रतीयते। तस्मान्न विष्णुरिति चेन्न।

"अथ हेममात्मानमणोरणीयांसं परतः परं विश्वं हरिमुपासीतेति। सर्वनामा सर्वकर्मा सर्वलिङ्गः सर्वगुणः सर्वकामः सर्वधर्मः सर्वरूप इति। स य एतमेवमात्मानं विश्वं हरिमादरमुपास्ते तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेषु देवेषु सर्वेषु वेदेषु कामचारो भवति" इति तत्तन्नामलिङ्गादिना तस्यैव दृष्ट्युपदेशान्महोपनिषदि।

"अनात्तत्वादनात्मान ऊनत्वाद् गुणराशितः। अब्रह्माणः परे सर्वे ब्रह्माऽत्मा विष्णुरेव हि" इत्यादिना, "को न आत्मा किं ब्रह्म" इत्यारम्भाच्चान्येषामसम्भवाद् विष्णुरेव वैश्वानरः।

"चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत" इत्यादिना यः पुरुषाख्यो विष्णुरभिहितस्तद्विधमेवात्र—"मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मा" इत्यादिनैनं वैश्वानरमधीयते।

चशब्देन सकलवेदतन्त्रपुराणादिषु विष्णुपरत्वं पुरुषसूक्तस्य दर्शयति। तथाच ब्राह्मे—

अनुव्याख्यानम्

व्यवहारप्रसिद्ध्ये ॥२३॥ यथैकः समवायोऽपि भेदाभेदौ च वस्तुनि। अङ्गीकार्या विशेषेण स्थानेषु व्यवहर्तृभिः ॥२४॥ अखण्डवादिनोऽपि स्याद् विशेषोऽनिच्छतोऽप्यसौ। व्यावृत्ते निर्विशेषे तु किं व्यावर्त्यबहुत्वतः ॥२५॥*॥ बहुलिङ्गसमायुक्तैर्बहुभी रूढनामभिः। प्रसिद्धैरन्यगत्वेन वाच्यः साक्षाज्जनार्दनः ॥२६॥ वैश्वानरादयः शब्दा अपि तद्वाचिनस्ततः। तानि लिङ्गानि ते शब्दा अपि तद्वा हि सर्वशः। बहुलाऽप्यज्ञरूढिस्तत् प्राज्ञरूढिं न बाधते ॥२७॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते

श्रीमद्ब्रह्मसूत्रानुव्याख्याने

— प्रथमाध्यायस्य द्वितीयः पादः —

---

१ "इत्यादिशब्दः" इति प्र.पाठः।

भाष्यम्

"यथैव पौरुषं सूक्तं नित्यं विष्णुपरायणम्। तथैव मे मनो नित्यं भूयाद् विष्णुपरायणम्" इति।

चतुर्वेदशिखायां च—

"सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपादित्येष ह्येवाचिन्त्यः परः परमो हरिरादिरनादिर[1]नन्तोऽन्तोऽनन्तशीर्षोऽनन्ताक्षोऽनन्तबाहुरनन्तगुणोऽनन्तरूपः" इति।

बृहत्संहितायां च—

"यथा हि पौरुषं सूक्तं विष्णोरेवाभिधायकम्। न तथा सर्ववेदाश्च वेदाङ्गानि च नारद" [2]इति। "यद् यस्माज्जायते चाङ्गाल्लोक[3]देवादिकं हरेः। तन्नामवाच्यमङ्गं तद् यथा ब्रह्मादिकं मुखम्" इति नारदीयवचनान्नाभेदोक्तिविरोधः ॥*॥

॥ अत एव न देवता भूतं च ॥२७॥

अग्निवैश्वानरादिशब्दस्तेजसि भूतेऽग्निदेवतायां च प्रसिद्धोऽप्यतः पूर्वोक्तहेतुत एवात्र न सा तच्चाभिधीयते ॥*॥

॥ साक्षादप्यविरोधं जैमिनिः ॥२८॥

नाग्न्यादयः शब्दा अग्न्यादिवाचकाः। तथाऽपि साक्षादेवानन्ययोगेन ब्रह्मवाच[4]कैर्व्यवहारार्थमनभिज्ञानाच्चान्यत्र व्यवहरन्तीत्यभ्युपगमेऽविरोधं जैमिनिर्वक्ति।

"व्यासचित्तस्थिताकाशादवच्छिन्नानि कानिचित्। अन्ये व्यवहरन्त्येतान्यूरीकृत्य गृहादिवत्" इति स्कान्दवचनान्न मतानां परस्परविरोधः ॥*॥

॥ अभिव्यक्तेरित्याश्मरथ्यः ॥२९॥

तत्र तत्र प्रसिद्धावप्यग्न्यादिषु ब्रह्मणोऽभिव्यक्तेरग्न्यादिसूक्तनियम इत्याश्मरथ्यः ॥*॥

॥ अनुस्मृतेर्बादरिः ॥३०॥

तत्रोक्त[5]स्य विष्णोरग्न्यादिष्वनुस्मर्यमाणत्वात् तन्नियम इति बादरिः ॥*॥

न्यायविवरणम्

श्रुतिसाधार[6]ण्येऽपि विशेषश्रुत्यादेर्निश्चयः। उभयत्र विशेषश्रुत्यादौ पुनः सावकाशत्वनिरवकाशत्वबलान्निश्चयः ॥७॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे
प्रथमाध्यायस्य द्वितीयः पादः

---

१ "अनन्तोऽनन्तशीर्षः" २ "इत्यादि" ३ "लोकवेदादिकम्" ४ "ब्रह्मवाचकैः शब्दैर्व्यवहारार्थम्" ५ "तत्र तत्रोक्तस्य" ६ "श्रुतिसाधारण्ये विशेष—" इति प्र. पाठः।

भाष्यम्

॥ सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॥३१॥

साक्षादप्यविरोधं वदन् जैमिनिः सूक्तादिनियममग्न्यादिसम्प्राप्त्या मन्यते । " तं यथा यथोपासते तदेव भवति" इति हि दर्शयति[1] ॥*॥

नह्यन्योपासकोऽन्यं प्राप्नुत इति युज्यत इत्यत आह—

॥ आमनन्ति चैनमस्मिन् ॥३२॥

एनं विष्णुमस्मिन्नग्न्यादावामनन्ति –

" योऽग्नौ[2] तिष्ठन्नग्नेरन्तरः ", " य एष एतस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुषः " इत्यादिना ॥*॥

॥*॥ इति सप्तममधिकरणम् ॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते

श्रीमद्ब्रह्मसूत्रभाष्ये

— प्रथमाध्यायस्य द्वितीयः पादः —

---

ॐ ॥ तत्र चान्यत्र च प्रसिद्धानां शब्दानां विष्णौ समन्वयमस्मिन् पादे[3] दर्शयति । विष्णोः परविद्याविषयत्वमुक्तम् । तत्र, " यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः । तमेवैकं जानथ आत्मानम् " इत्यत्र, " प्राणानां ग्रन्थिरसि रुद्रो माऽऽविशान्तकः ", "प्राणेश्वरः कृत्तिवासाः पिनाकी" इत्यादिना रुद्रस्य प्राणाधारत्वप्रतीतेः " स एषोऽन्तश्चरते बहुधा जायमानः " इति जीवलिङ्गाच्च तयोः प्राप्तिरित्यत उच्यते—

॥ द्युभ्वाद्यायतनं स्वशब्दात् ॥१॥

" तमेवैकं जानथ आत्मानम् " इत्यात्मशब्दाद् द्युभ्वाद्यायतनं विष्णुरेव[4] । "आत्मब्रह्मादयः शब्दास्तमृते विष्णुमव्ययम् । न सम्भवन्ति यस्मात् तेनैवाऽस्ता गुणपूर्णता " इति हि ब्रह्मवैवर्ते[5] ॥*॥

॥ मुक्तोपसृप्यव्यपदेशात् ॥२॥

" अमृतस्यैष सेतुः " इति । " ब्रह्मविदाप्नोति परम् ", " नारायणं महाज्ञेयं विश्वात्मानं परायणम् ", " मुक्तानां परमा गतिः", "एतमानन्दमयमात्मानमुपसङ्क्रामति"

अनुव्याख्यानम्

ॐ ॥ तत्रान्यत्र च सिद्धानां[6] लिङ्गनाम्नां पुनर्हरिः । विशेषान्मुख्यतो वृत्तिं स्वस्मिन्नेवात्र वक्त्यजः ॥१॥ विष्णावेवाऽत्मशब्दस्य रूढत्वान्न शिवादिकान् । श्रुतिर्वक्त्यखिलेशत्वाद्

---

१ "इति दर्शयति" इति प्र. पाठः । २ प्र. पाठे "योऽग्नौ तिष्ठन्" इतीयानेव श्रुतिभागः पठ्यते । ३ "समन्वयं प्रायेणास्मिन् पादे " ४"द्युभ्वाद्याश्रयो विष्णुरेव" ५ "इति ब्रह्मवैवर्ते" ६ "तत्रान्यत्र प्रसिद्धानाम्" इति प्र.पाठः ।

भाष्यम्

इत्यादिना तस्यैव मुक्तप्राप्यत्वव्यपदेशात् । "बहुनाऽत्र किमुक्तेन यावच्छ्वेतं न गच्छति। योगी तावन्न मुक्तः स्यादेष शास्त्रस्य निर्णयः" इत्यादित्यपुराणे ॥*॥

॥ नाऽनुमानमतच्छब्दात् ॥३॥

नानुमानात्मकागमपरिकल्पितरुद्रोऽत्र वाच्यः। भस्मधरोग्रत्वादितच्छब्दाभावात्।

"सोऽन्तकः स रुद्रः स प्राणभृत् स प्राणनायकः स ईशो यो हरिर्योऽनन्तो यो विष्णुर्यः परः परोवरीयान्" इत्यादिना प्राणग्रन्थिरुद्रत्वादेर्विष्णोरेवोक्तत्वात्।

ब्रह्माण्डे च—

"रुजं द्रावयते यस्माद् रुद्रस्तस्माज्जनार्दनः। ईशनादेव चेशानो महादेवो महत्त्वतः। पिबन्ति ये नरा नाकं मुक्ताः संसारसागरात्। तदाधारो यतो विष्णुः पिनाकीति ततः श्रुतः[1]। शिवः सुखात्मकत्वेन शर्वः शंरोधनाद्धरिः। कृत्यात्मकमिमं देहं यतो वस्ते प्रवर्तयन्। कृत्तिवासास्ततो देवो विरिञ्चश्च विरेचनात्। बृंहणाद् ब्रह्मनामाऽसावैश्वर्यादिन्द्र उच्यते। एवं नानाविधैः शब्दैरेक एव त्रिविक्रमः। वेदेषु सपुराणेषु गीयते पुरुषोत्तमः" इति।

वामने च—

"नतु नारायणादीनां नाम्नामन्यत्र सम्भवः। अन्यनाम्नां गतिर्विष्णुरेक एव प्रकीर्तितः" इति।

स्कान्दे च—

"ऋते नारायणादीनि नामानि पुरुषोत्तमः। प्रादादन्यत्र भगवान् राजेवर्ते स्वकं पुरम्" इति। "चतुर्मुखः शतानन्दो ब्रह्मणः पद्मभूरिति। उग्रो भस्मधरो नग्नः कपालीति शिवस्य च। विशेषनामानि ददौ स्वकीयान्यपि केशवः" इति च ब्राह्मे ॥*॥

॥ प्राणभृच्च ॥४॥

एतैरेव हेतुभिर्न जीवो वायुश्च। "अजायमानो बहुधा विजायते" इति तस्यैव बहुधा जन्मोक्तेः॥*॥

॥ भेदव्यपदेशात् ॥५॥

नचैक्यं वाच्यम्। "अन्यमीशमस्य[2]" इति भेदव्यपदेशात् ॥*॥

॥ प्रकरणात् ॥६॥

"द्वे विद्ये वेदितव्ये" इति तस्यैव ह्येतत्[3] प्रकरणम् ॥*॥

॥ स्थित्यदनाभ्यां च ॥७॥

"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" इतीशजीवयोः स्थित्यदनोक्तेः ॥*॥

॥*॥ इति प्रथममधिकरणम् ॥*॥

---

१ "ततः स्मृतः" २ "जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति भेदव्यपदेशात्" ३ "तस्य ह्येतत्" इति प्र.पाठाः।

भाष्यम्

" प्राणो वा आशाया भूयान् " इत्युक्त्वा " यो वै भूमा तत् सुखम् " इति तस्यैवं भूमत्वप्राप्तिः । " उत्क्रान्तप्राणान् " इत्यादिलिङ्गात् प्राणशब्दश्च वायुवाचीत्यतो वक्ति—

॥ भूमा सम्प्रसादादध्युपदेशात् ॥८॥

सम्प्रसादात् पूर्णसुखरूपत्वात् । अध्युपदेशात् सर्वेषामुपर्युपदेशाच्च विष्णुरेव भूमा ।

" सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम् । विश्वं नारायणं देवमक्षरं परमं पदम् । विश्वतःपरमां नित्यम् " इति हि श्रुतिः । " तमुत्क्रामन्तं प्राणोऽनूत्क्रामति " इत्यादिना नोत्क्रमादिलिङ्गविरोधोऽपि ॥*॥

॥ धर्मोपपत्तेश्च ॥९॥

सर्वगतत्वादिधर्मोपपत्तेश्च ॥*॥

॥*॥ इति द्वितीयमधिकरणम् ॥*॥

अदृश्यत्वादिगुणाः " अदृष्टं द्रष्टृश्रुतं श्रोतृ " इत्यादिना " अहं सोममाहनसं बिभर्मि " इत्यादेश्च तस्यापि सम्भवान्मध्यमाक्षरस्योक्ता इत्यतो ब्रूते—

॥ अक्षरमम्बरान्तधृतेः ॥१०॥

" एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च " इत्यम्बरान्तस्य सर्वस्य धृतेर्ब्रह्मैवाक्षरम् ।

" य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा ","भर्ता सन् भ्रियमाणो बिभर्त्येको देवो बहुधा निविष्टः ", "यस्मिन्निदं सं च वि चैधि [सर्वं] यस्मिन् देवा अधि विश्वे निषेदुः " इत्यादिश्रुतेः । " पृथिव्यादि प्रकृत्यन्तं भूतं भव्यं भवच्च यत् । विष्णुरेको बिभर्तीदं नान्यस्तस्मात् क्षमो धृतौ " इति च स्कान्दे ॥*॥

॥ सा च प्रशासनात् ॥११॥

सा च धृतिः प्रशासनादुच्यते— " एतस्य वा अक्षरस्य प्रशासने " इत्यादिना । तच्च प्रशासनं विष्णोरेव—

" सप्तार्द्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि ", " चतुर्भिः साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीँरवीविपत् " इत्यादिश्रुतेः । " एकः शास्ता न

अनुव्याख्यानम्

भूमा विष्णुः सुखाधिकः ॥२॥ अतो विरुद्धवद् भातमपि व्याख्याय तत्त्वतः । योजनीयं हरौ वाक्यं विरुद्धैर्लक्षणैर्युतम् ॥३॥ ब्रह्मैव तानि लिङ्गानि तदन्यत्र त्वसन्त्यपि । अविरोधेन

---

१ "इत्युक्तेस्तस्यैव" २ "इत्यादितल्लिङ्गात्" ३ "नोत्क्रमणादिलिङ्गविरोधोऽपि" ४ "अदृश्यत्वादिगुणा विष्णोरुक्ताः" ५ "इत्यादेस्तस्यापि" ६ "एतस्मिन् खल्वक्षरे" इति प्र॰ पाठाः। ७ प्राचीनकोशेषु "सर्वम्" इति पदं न पठ्यते । ८"प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत इत्यादिना" इति प्र.पाठः। ९ प्राचीनकोशे "विष्णुसुखाधिकः" (?) इति पठ्यते ।

भाष्यम्

द्वितीयोऽस्ति शास्ता", "न केवलं मे भवतश्च राजन् स वै बलं बलिनां चापरेषाम्" इत्यादेश्च ॥*॥

॥ अन्यभावव्यावृत्तेश्च ॥१२॥

"अस्थूलमनणु" इत्यादिना स्थूलाण्वादीनामन्यवस्तुस्वभावानां व्यावृत्तेश्च ।

"अस्थूलोऽनणुरमध्यमो मध्यमोऽव्यापको व्यापको योऽसौ हरिरादिरनादिरविश्वो विश्वः सगुणो निर्गुणः" इत्यादेर्विष्णोरेव ते धर्माः। "अस्थूलानणुरूपोऽसौ स विश्वोऽविश्व एव च[2] । विरुद्धधर्मरूपोऽसावैश्वर्यात् पुरुषोत्तमः" इति च ब्राह्मे ॥*॥

॥*॥ इति तृतीयमधिकरणम् ॥*॥

"सदेव सोम्येदमग्र आसीत्" इत्यादिना सतः स्रष्टृत्वमुच्यते । तच्च सत् "बहु स्यां प्रजायेय" इति परिणामप्रतीतेर्न विष्णुः। स हि—"अविकारः सदा शुद्धो नित्य आत्मा सदा हरिः" इत्यादिनाऽविकारः प्रसिद्ध इत्यतो ब्रवीति—

॥ ईक्षतिकर्मव्यपदेशात् सः ॥१३॥

"तदैक्षत" इतीक्षतिकर्मव्यपदेशात् स एव विष्णुरत्रोच्यते। "नान्योऽतोऽस्ति द्रष्टा", "नान्यदतोऽस्ति द्रष्टृ" इत्यादिना तस्यैव हि तल्लक्षणम् । बहुत्वं चाविकारेणैवोक्तम्— "अजायमानो बहुधा[3]" इति ॥*॥

॥*॥ इति चतुर्थमधिकरणम् ॥*॥

अनुव्याख्यानम्

गोविन्दे सन्त्यस्थूलादिकानि च ॥४॥ अन्यवस्तुस्वभावानां स्थौल्यादीनामपाकृतिम्। नारायणे श्रुतिर्वक्ति नतु तस्यास्वभावताम् ॥५॥ सर्वधर्मा सर्वनामा सर्वकर्मा गुणाः श्रुताः। दोषाः श्रुताश्च नेत्याद्या प्रमाणं श्रुतिरत्र च ॥६॥*॥ लिङ्गं साधारणं शब्दौ स्थानं लिङ्ग-

न्यायविवरणम्

ॐ ॥ "प्राणानां ग्रन्थिरसि", "रुद्रो वै लोकायतनम्", "वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि[4] सन्दब्धानि भवन्ति", "सर्वे वा एते प्राणाश्च प्राणिनश्च देवाश्च दिव्यानि च लोकाश्च लोकिनश्चालोकाश्चालोकिनश्च विष्णावेवोताश्च प्रोताश्च भवन्ति" इत्यादेर्द्युभ्वाद्यायतनत्वमज्ञानां साधारणं लिङ्गम् ॥१॥ "प्राणो वा आशाया भूयान्", "विष्णुर्वै देवेभ्यो भूयांस्तस्माद् भूयान् नाम" इत्यादेर्भूमशब्दोऽज्ञानां साधारणः ॥२॥ विष्णोश्चेतनप्रकृतेश्चाविनाशित्वसाम्यादक्षरशब्दः साधारणः ॥३॥ कारणत्वसाम्याद् विष्णोरचेतनप्रकृतेश्च "सदेव सोम्य" इत्यादिसृष्टिस्थानं च साधारणम्[5] ॥४॥ लिङ्गं हृत्पद्मस्थितत्वं साधारणम् ॥५॥ "कथं नु तद्

---

[1] इतः परं प्र. पाठे "यो हृच्छयस्तमहमिह ब्रवीमि" इत्यधिकम्। २ "अविश्वो विश्व एव च" ३ "बहुधा विजायते" ४ "सर्वाणि भूतानि" ५ "सदेव सोम्येदमग्र आसीदित्यादिसृष्टिस्थानं साधारणम्" इति प्र. पाठाः।

भाष्यम्

चन्द्रादित्याद्याधारत्वं विष्णोरुक्तम्। तच्च—"एतस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः", "किं तदत्र विद्यते", "उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि" इत्यादिनाऽऽकाशस्य प्रतीयते। स चाकाशो न विष्णुः। "तस्यान्ते सुषिरं सूक्ष्मम्" इति श्रुतेः। अत आह—

॥ दहर उत्तरेभ्यः ॥१४॥

"य आत्माऽपहतपाप्मा विजरो विमृत्युः" इत्यादिभ्य उत्तरेभ्यो गुणेभ्यो दहरे विष्णुरेव।

"योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति", "स एष सर्वेभ्यः पाप्मभ्य उदितः" इत्यादिना विष्णोरेव हि ते गुणाः। "नित्यतीर्णाशनायादिरेक एव हरिः स्वतः। अशनायादिकानन्ये तत्प्रसादात् तरन्ति हि" इति पाद्मे।

सापेक्षनिरपेक्षयोश्च निरपेक्षं स्वीकर्तव्यम्।

"सत्यकामोऽपरो नास्ति तमृते विष्णुमव्ययम्। सत्यकामत्वमन्येषां भवेत् तत्काम्यकामता" इति च स्कान्दे ॥*॥

॥ गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॥१५॥

"अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति" इति सुप्तस्य तद्गतिर्ब्रह्मशब्दश्चोच्येते। "सता सोम्य तदा सम्पन्नो भवति" इति श्रुतेस्तं हि सुप्तो गच्छति। "अरश्च हवै ण्यश्चार्णवौ ब्रह्मलोके" इति लिङ्गं च तथा दृष्टम्। "अरश्च वै ण्यश्च सुधासमुद्रौ तत्रैव सर्वाभिमतप्रदौ द्वौ" इत्यादिना तस्यैवं तल्लक्षणत्वेनोच्यते ॥*॥

अनुव्याख्यानम्

मनुग्रहः। पुनः शब्दा लिङ्गशब्दौ विचार्या द्विस्थिता इह ॥७॥ बाहुल्यं लिङ्गशब्दानामनुक्तिश्च विरुद्धता। अदृष्टिरन्वयाभावो विपरीतश्रुतिभ्रमः॥८॥ लिङ्गावकाशराहित्यभ्रमस्तादृग् द्वयं तथा।

न्यायविवरणम्

विजानीयाम्" इत्यानुकूल्येन ग्रहणं कस्येति विचार्यमनुग्रहः ॥६॥ पुनः शब्दा ईशानो वज्रो ज्योतिराकाश इति ॥७॥१०-१२॥ लिङ्गं स्वप्नादिदर्शनं कस्येति ॥१३॥ शब्दो ब्राह्मण इति ॥१४॥*॥ "यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मन ओतं प्राणा ओताः" इत्यत्रोक्तानां लिङ्गानामन्यत्र रुद्रादिविषयत्वे शब्दबाहुल्यम्। "प्राणानां ग्रन्थिरसि रुद्रो माऽऽविशान्तकः", "प्राणेश्वरः कृत्तिवासाः पिनाकी", "मनो वै रुद्र ओतं च प्रोतं च", "रुद्रो वाव लोकाधारः" इत्यादिकं शब्दबाहुल्यम् ॥१॥

---

१ "अथ यदिदमस्मिन्" इति प्र. पाठः। यद्यपि यदिदमस्मिन्नित्येव च्छन्दोगानां पाठः। तथाऽपि भाष्यकारस्तत्र तत्र श्रुत्यन्तरोपसङ्ग्रहणहेतोरेवं भिन्नामानुपूर्वीमपि क्वचिदुपादत्त इति तत्त्वदीपिकायां स्थितम्। २ "दहरोऽस्मिन्नन्तर आकाशः" ३ "इत्यत आह" ४ "विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्य इत्यादिभ्यः" ५ "सत्यकामः परो नास्ति" ६ "कामिता" ७ "इति स्कान्दे" ८ "अहरहर्गच्छन्त्यः" ९ "ब्रह्मशब्दश्चोच्यते" १० "तस्यैव हि" इति प्र. पाठाः। ११ प्राचीनकोशेषु क्वचित् "वज्रः" इति न पठ्यते। स्खलितमिति सम्भाव्यते।

भाष्यम्

## ॥ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥१६॥

"एष सेतुर्विधृतिः" इति धृतेः। "एष भूताधिपतिरेष भूतपालः" इत्याद्यस्य महिम्नोऽस्मिन्नुपलब्धेः।

"एतस्मिन्नु खल्वक्षरे[1] गार्ग्याकाश ओतश्च प्रोतश्च", "एतस्य वा अक्षरस्य प्रशासने[2]" "स हि सर्वाधिपतिः स हि सर्वपालः स ईशः स विष्णुः", "पतिं विश्वस्याऽत्मेश्वरम्" इत्यादिश्रुतिभ्यस्तस्य ह्येष महिमा। "सर्वेशो विष्णुरेवैको नान्योऽस्ति जगतः पतिः" इति च स्कान्दे ॥*॥

## ॥ प्रसिद्धेश्च ॥१७॥

"तत्रापि दहं[3] गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्" इति प्रसिद्धेश्च। तदन्तस्थापेक्षत्वान्न[4] सुषिरश्रुतिविरोधः ॥*॥

## ॥ इतरपरामर्शात् स इति चेन्नासम्भवात् ॥१८॥

"परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते", "एष आत्मेति होवाच" इति जीवपरामर्शात् स इति चेत्, न। तस्य स्वतोऽपहतपाप्मत्वाद्यसम्भवात् ॥*॥

## ॥ उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥१९॥

"स तत्र पर्येति जक्षन् क्रीडन् रममाणः[5] स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा" इत्याद्युत्तरवचनाज्जीव एवेति चेत्, न। तत्र हि परमेश्वरप्रसादादाविर्भूतस्वरूपो मुक्त उच्यते। यत्प्रसादात् स मुक्तो भवति स भगवान् पूर्वोक्तः ॥*॥

## ॥ अन्यार्थश्च परामर्शः ॥२०॥

यं प्राप्य स्वेन रूपेण जीवो निष्पद्यते[6] स एष आत्मेति परमार्थश्च[7] परामर्शः ॥*॥

## ॥ अल्पश्रुतेरिति चेत् तदुक्तम् ॥२१॥

दहर इत्यल्पश्रुतेर्नेति चेत्, न। "निचाय्यत्वादेवं व्योमवच्च" इत्युक्तत्वात्। "एष म आत्माऽन्तर्हृदये ज्यायान्" इति श्रुत्युक्तत्वाच्च ॥*॥

॥*॥ इति पञ्चममधिकरणम् ॥*॥

अनुव्याख्यानम्

बहुतादृक्त्वमुक्तस्य विरोधोऽर्थात् तथा गतिः। समस्तमेतदित्यत्र पूर्वपक्षेषु युक्तयः ॥ ९ ॥

न्यायविवरणम्

"प्राणो वा आशाया भूयान्" इत्युक्त्वा प्राणाद् भूयसोऽनुक्तिः ॥ २ ॥ "अत्ता" इत्युक्तत्वात्[8] "न तदश्नाति किञ्चन" इति विरुद्धता ॥३॥ "बहु स्यां प्रजायेय" इत्यन्यस्यान्यभावादृष्टिः ॥४॥

---

१ "एतस्मिन् खल्वक्षरे" २ "प्रशासने गार्गि" ३ "तत्रापि दहरम्" ४ "तदन्तस्थत्वापेक्षत्वात्" ५ "रममाण इत्याद्युत्तरवचनात्" ६ "अभिनिष्पद्यते" ७ "परमात्मार्थश्च" ८ "अत्तेत्युक्त्वा" इति प्र.पाठाः।

भाष्यम्

अदृश्यत्वादयः परमेश्वरगुणा उक्ताः ।

"तेषां सुखं शाश्वतं नेतरेषाम्", "तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम्[1]। कथं नु तद् विजानीयाम्" इत्यादिना ज्ञानिसुखस्याप्यनिर्देश्यत्वमज्ञेयत्वं चोच्यत इत्यतो वक्ति—

॥ अनुकृतेस्तस्य च ॥२२॥

"तमेव भान्तमनु भाति सर्वम्" इत्यनुकृतेः, "तस्य भासा सर्वमिदं विभाति" इति वचनाच्च परमात्मैवानिर्देश्यसुखरूपः। नहि ज्ञानिसुखमनु भाति सर्वम्। नच तद्भासा। "अहं तत् तेजो रश्मीत्" इति नारायणभासा हि सर्वं भाति ॥*॥

॥ अपि स्मर्यते ॥२३॥

"यदादित्यगतं तेजो जगद् भासयतेऽखिलम्। यच्चन्द्रमसि यच्चाग्नौ तत् तेजो विद्धि मामकम्" इति। "न तद् भासयते सूर्यो न शशाङ्को न पावकः। यद् गत्वा न निवर्तन्ते तद् धाम परमं मम" इति च ॥*॥

॥*॥ इति षष्ठमधिकरणम् ॥*॥

विष्णुरेव जिज्ञास्य इत्युक्तम्। तत्र—

"ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति। मध्ये वामनमासीनं विश्वे देवा उपासते" इति सर्वदेवोपास्यः कश्चित् प्रतीयते। स च "एवमेवैष प्राण इतरान् प्राणान् पृथक् पृथगेव सन्निधत्ते", "योऽयं मध्यमः प्राणः", "कुविदङ्ग" इत्यादिना प्राणव्यवस्थापकत्वान्मध्यमत्वात् सर्वदेवोपास्यत्वाच्च वायुरेवेति प्रतीयते। अतोऽब्रवीत्—

॥ शब्दादेव प्रमितः ॥२४॥

वामनशब्दादेव विष्णुरिति प्रमितः। नहि श्रुतेर्लिङ्गं बलवत्।

"श्रुतिर्लिङ्गं समाख्या च वाक्यं प्रकरणं तथा। पूर्वपूर्वं[2] बलीयः स्यादेवमागमनिर्णयः" इति स्कान्दे।

तच्च लिङ्गं विष्णोरेव। तस्यैव प्राणत्वोक्तेः "तद् वै त्वं प्राणः" इति[3] ॥*॥

न्यायविवरणम्

"दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यम्"[4] इत्यनेन "यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः" इत्यस्यान्वयाभावः ॥५॥ "तदेतदिति मन्यते", "कथं नु तद् विजानीयाम्" इति "तेषां सुखं शाश्वतं नेतरेषाम्"[5] इत्युक्तज्ञानिसुखग्रहणमिति विपरीतश्रुतिभ्रमः॥६॥ "ऊर्ध्वं प्राणमुन्नयति" इत्यादिलिङ्गानां प्राणादन्यत्रावकाशराहित्यमिति भ्रमः। "एवमेवैष प्राण इतरान् प्राणान् पृथक् पृथगेव सन्निधत्ते" इत्यादिवाक्याद् भ्रमः ॥७॥ वज्रशब्द उद्यतत्वलिङ्गं च तादृग् द्वयम् ॥१०॥ आदित्यादिज्योतिष्ट्वम्, उभयलोकसञ्चरणम्, आदित्येनैवायं ज्योतिषा-

---

१ "परमं सुखमित्यादिना ज्ञानिसुखस्यापि" २ "पूर्वं पूर्वम्" ३ "प्राणो अभव इति" इति प्र. पाठाः।
४ "दहरोऽस्मिन्नन्तर आकाशः" ५ "तेषां सुखं शाश्वतमित्युक्त—" इति प्र. पाठौ।

भाष्यम्

॥ हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥२५॥

सर्वगतस्यापि तस्याङ्गुष्ठमात्रत्वं हृद्यवकाशापेक्षया युज्यते। इतरप्राणिनामङ्गुष्ठाभावेऽपि मनुष्याधिकारत्वान्न विरोधः ॥*॥

॥*॥ इति सप्तममधिकरणम् ॥*॥

मनुष्याणामेव वेदविद्यायामधिकार[1] इत्युक्तम्। तिर्यगाद्यपेक्षयैव मनुष्यत्वविशेषणमुक्तम्, नतु देवाद्यपेक्षयेत्याह—

॥ तदुपर्यपि बादरायणः सम्भवात् ॥२६॥

तदुपरि मनुष्याणां सतां देवादित्वप्राप्त्युपरि। सम्भवति हि तेषाम्। विशिष्टबुद्ध्यादिभावात्। तिर्यगादीनां तदभावादभावः। तेषामपि यत्र बुद्ध्यादिभावस्[2]तत्राविरोधः। निषेधाभावात्। दृश्यन्ते हि जरितार्यादयः ॥*॥

॥ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥२७॥

मनुष्या एव देवादयो भवन्तीति " तदुपरि " इत्युक्तम्। तत्र यदि मनुष्याः सन्तो देवा भवन्ति[3] तत्पूर्वं देवताभावाद् देवतोद्दिष्टकर्मणि विरोध इति चेत्, न। अनेकेषां देवतापदप्रतिपत्तेर्दर्शनात्[4] " यत्र[5] पूर्वे साध्याः सन्ति देवाः " इति ॥*॥

॥ शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् ॥२८॥

"वाचा विरूप नित्यया" इति[6] श्रुतेराप्त्यनिश्चयान्नित्यत्वापेक्षत्वाच्च मूलप्रमाणस्य स्वतःप्रामाण्यप्रसिद्धेश्च नित्यत्वाद् वेदस्य तदुदितानां देवानामनित्यत्वाच्छब्दे विरोध इति चेत्, न।

" सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् " इति[7]। " यथैव कालनियमः सुरादिनियमस्तथा। तस्मान्नानीदृशं क्वापि विश्वमेतद् भविष्यति " इत्यादेरत एव शब्दात् तेषां प्रभवनियमात्।

महतां प्रत्यक्षात्। यथेदानीं तथोपर्यपि देवा भविष्यन्तीतीतरेषामनुमानाच्च ॥*॥

॥ अत एव च नित्यत्वम् ॥२९॥

अत एव शब्दस्य नित्यत्वादेव च देवप्रवाहनित्यत्वं भवति[8] ॥*॥

न्यायविवरणम्

ऽऽस्ते " इत्यवधारणमित्यादीनां परमात्मन्यवकाशाभावो बहुतादवक्त्वम् ॥११॥ " वै नाम " इति प्रसिद्धिद्योतकनिपातद्वयं रूढित्यागेनोक्तयौगिकार्थस्वीकारे विरोधि॥१२॥ जीवेश्वराभेद ईश्वरोक्तावप्यर्थाज्जीव एवोच्यत इत्यर्थात् तथा गतिः ॥१३॥ ब्राह्मणशब्दस्य पापालेपलिङ्गस्य च चतुर्मुखस्य[9]ऽपरमात्मनाऽभेदं विनाऽवकाशराहित्यादर्थादभेदप्रातिरिति समस्तमेतत् ॥१४॥*॥

---

१ "वेदविद्याधिकारः" २ "विशिष्टबुद्ध्यादिभावः" ३ "देवादयो भवन्ति" ४ "प्राप्तेर्दर्शनात्" इति प्र.पाठाः। ५ इतः पूर्वं प्र. पाठे "ते ह नाकं महिमानः सचन्ते" इत्यधिकं पठ्यते। ६ "इत्यादिश्रुतेः" इति प्र. पाठः। ७ प्र. पाठेऽयं "इति" शब्दो न पठ्यते। ८ "नित्यत्वं युक्तम्" ९ "चतुर्मुखेन सह परमात्मनोऽभेदम्" इति प्र.पाठौ।

भाष्यम्

॥ समाननामरूपत्वाच्चा[ऽ]वृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥३०॥

अतीतानागतानां देवानां समाननामरूपत्वात् प्राप्तपदानां मुक्त्याऽ[ऽ]वृत्तावप्यविरोधः।

"यथापूर्वम्" इति दर्शनात्। "अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा। ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः। वेदशब्देभ्य एवाऽदौ निर्ममे स महेश्वरः" इति स्मृतेश्च ॥*॥

॥ मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥३१॥

"वसूनामेवैको भूत्वा" इत्यादिना प्राप्यफलत्वात् प्राप्तपदानां देवानां मध्वादिविद्यास्वनधिकारं जैमिनिर्मन्यते ॥*॥

॥ ज्योतिषि भावाच्च ॥३२॥

ज्योतिषि सर्वज्ञत्वे भावाच्च। आदित्यप्रकाशेऽन्तर्भाववत् तज्ज्ञाने सर्ववस्तूनामन्तर्भावान्नित्यसिद्धत्वाद् विद्यानाम्[1] ॥*॥

॥ भावं तु बादरायणोऽस्ति हि ॥३३॥

फलविशेषभावात् प्राप्तपदानामपि देवानां मध्वादिष्वप्यधिकारं बादरायणो मन्यते। अस्ति हि प्रकाशविशेषः।

"यावत् सेवा परे तत्त्वे तावत् सुखविशेषता। सम्भवाच्चाप्रकाशस्य[2] परमेकमृते हरिम्। तेषां सामर्थ्ययोगाच्च देवानामप्युपासनम्। सर्वं विधीयते नित्यं सर्वयज्ञादिकर्म च" इति स्कान्दे।

उक्तफलानधिकारमात्रं जैमिनिमतम्। अतो न मतविरोधः[3]।

"सर्वज्ञस्यैव कृष्णस्य त्वेकदेशविचिन्तितम्। स्वीकृत्य मुनयो ब्रूयुस्तन्मतं न विरुद्ध्यते" इति च ब्राह्मे[4] ॥*॥

॥*॥ इत्यष्टममधिकरणम् ॥*॥

मनुष्याधिकारत्वादित्युक्तेऽविशेषाच्छूद्रस्यापि—"अह हारेत्वा शूद्र" इति पौत्रायणोक्तेरधिकार इत्यत आह—

॥ शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ॥३४॥

नासौ पौत्रायणः शूद्रः। शुचाऽऽद्रवणमेव शूद्रशब्देनोक्तम्[5]। "कम्वर एनमेतत्सन्तम्" इत्यनादरश्रवणात्। "स ह सञ्जिहान एव क्षत्तारमुवाच" इति सूच्यते हि ॥*॥

---

१ "सिद्धत्वाच्च विद्यानाम्" इति प्र.पाठः। २ "सम्भवाच्च प्रकाशस्य" इति प्र.पाठः। प्राचीनपाठे—हरिमृते देवानामन्येषामप्रकाशस्य सम्भवात्, भगवदितरेषां निरुपचरितसार्वज्ञ्याभावात्; तथा आप्रकाशस्य सम्भवात्, विद्याविचारेण ज्ञानविशेषसम्भवादित्यर्थः। तथाह्यनुव्याख्याने च—"नच सर्वं प्रकाशते" इति। ३ "तन्मतविरोधः" ४ "इति ब्राह्मे" ५ "शुचाऽऽद्रवणमेव शूद्रत्वम्" इति प्र. पाठः।

भाष्यम्

॥ क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥३५॥

"अयमश्वतरीरथः" इति चित्ररथसम्बन्धित्वेन लिङ्गेन पौत्रायणस्य क्षत्रियत्वावगतेश्च[1]।

"रथस्त्वश्वतरीयुक्तश्चित्र इत्यभिधीयते" इति ब्राह्मे। "यत्र वेदो रथस्तत्र न वेदो यत्र नो रथः" इति च ब्रह्मवैवर्ते[2] ॥*॥

॥ संस्कारपरामर्शात् तदभावाभिलापाच्च ॥३६॥

"अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत" इत्यध्ययनस्य[3] संस्कारपरामर्शात्। "नाग्निर्न यज्ञो न संस्कारो[4] न व्रतानि शूद्रस्य" इति पैङ्गिश्रुतौ संस्काराभावाभिलापाच्च। उत्तमानां तु स्त्रीणां[5] न शूद्रवत्। "सपत्नीं मे पराधम" इत्यादिष्वधिकारदर्शनात्। संस्काराभावेनाभावस्तु सामान्येन। अस्ति च[6]—

"स्त्रीणां प्रदानकर्मैव यथोपनयनं तथा" इति[7] ॥*॥

॥ तदभावनिर्धारणे च प्रवृत्तेः ॥३७॥

"नैतदब्राह्मणो विवक्तुमर्हति" इति शूद्रत्वाभावनिर्धारणे प्रवृत्तेश्च[8] ॥*॥

॥ श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च ॥३८॥

"श्रवणे त्रपुजतुभ्यां श्रोत्रपरिपूरणम्। अध्ययने जिह्वाच्छेदः। अर्थावधारणे हृदयविदारणम्" इति प्रतिषेधात्। "नाग्निर्न यज्ञः शूद्रस्य तथैवाध्ययनं कुतः। केवलैव तु शुश्रूषा त्रिवर्णानां विधीयते" इति स्मृतेश्च।

विदुरादीनां तूत्पन्नज्ञानत्वाद् विशेषः[9]॥*॥

॥*॥ इति नवममधिकरणम् ॥*॥

अनुव्याख्यानम्

त एव बलवन्तस्तु[10] गत्यन्तरविवर्जिताः। सिद्धान्तयुक्तयो ज्ञेया दृश्यन्ते ताश्च सर्वशः ॥ १० ॥

न्यायविवरणम्

तेषामेव लिङ्गशब्दानां "प्राणानां ग्रन्थिरसि" इत्यादीनां विष्णौ मुख्यवृत्तिरिति बलवत्त्वम्। तस्य हि रुद्रावणादिकर्तृत्वं मुख्यम् ॥१॥ प्राणस्य विष्णोः सकाशाद् भूयस्त्वानुक्तिः, चशब्देन "एष तु वा अतिवदति यः सत्येनातिवदति" इति प्राणाद् विष्णोर्भूयस्त्वोक्तिश्च ॥२॥ सर्वाधारप्रकृत्याधारत्वं विष्णोरन्यस्य विरुद्धम्। "पतिं विश्वस्याऽऽत्मेश्वरम्", "विश्वात्मानं परायणम्"इत्यादि-

---

१"क्षत्रियत्वावगतेश्च" २"इति ब्रह्मवैवर्ते" ३"इत्यध्यापनार्थम्" ४"न यज्ञो न क्रिया न संस्कारः" ५"उत्तमस्त्रीणां तु" ६"अस्ति च तासां संस्कारः" ७"इति स्मृतेः" इति प्र. पाठाः। ८ समग्रं भाष्यवाक्यं प्र. पाठे भिन्नक्रमं दृश्यते। तद्यथा–"नाहमेतद् वेद भो यद्गोत्रोऽहमस्मीति सत्यवचनेन सत्यकामस्य शूद्रत्वाभावनिर्धारणे हारिद्रुमतस्य नैतदब्राह्मणो विवक्तुमर्हतीति तत्संस्कारे प्रवृत्तेश्च" इति। ९ "कश्चिद् विशेषः" इति प्र. पाठः। १० "ता एव बलवत्यस्तु" इति प्र. पाठः। प्राचीनपाठे त एवेति लिङ्गशब्दादयः।

भाष्यम्

"यदिदं किञ्च जगत् सर्वं प्राण एजति निस्सृतम्। महद् भयं वज्रमुद्यतं य एतद् विदुरमृतास्ते भवन्ति" इत्युद्यतवज्रज्ञानान्मोक्षः प्रतीयेत[1] इत्यतोऽब्रवीत्—

॥ कम्पनात् ॥३९॥

एजतीति कम्पनवचनादुद्यतवज्रो भगवान्[2]।

"को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्यात्" इति हि श्रुतिः। "प्राणस्य प्राणम्" इति च[3]। "नभस्वतोऽपि सर्वाः स्युश्चेष्टा भगवतो हरेः। किमुतान्यस्य जगतो यस्य चेष्टा नभस्वतः" इति हि स्कान्दे[4]। "चक्रं चङ्क्रमणादेष वर्जनाद् वज्र उच्यते[5]। खण्डनात् खड्ग एवैष हेतिनामा स्वयं हरिः" इति हि ब्रह्मवैवर्ते[6] ॥*॥

॥*॥ इति दशममधिकरणम् ॥*॥

हृदय आहितं ज्योतिः परमात्मेत्युक्तम्। तत्र "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः" इत्यत्र "उभौ लोकावनु सञ्चरति" इति वचनाज्जीव इति प्रतीयत इत्यत उच्यते—

॥ ज्योतिर्दर्शनात् ॥४०॥

"विष्णुरेव ज्योतिर्विष्णुरेव ब्रह्म विष्णुरेवाऽऽत्मा विष्णुरेव बलं विष्णुरेव यशो विष्णुरेवाऽऽनन्दः" इति दर्शनाच्चतुर्वेदशिखायां ज्योतिर्विष्णुरेव। "प्राज्ञेनाऽऽत्मनाऽन्वारूढः उत्सर्जद् याति" इति वचनात् तस्यापि लोकचरणमस्त्येवं[7] ॥*॥

॥*॥ इत्येकादशमधिकरणम् ॥*॥

सर्वाधारत्वं विष्णोरुक्तम्। तत्र[8] "आकाशो वै नाम नामरूपयोर्निर्वहिता[9] ते यदन्तरा तद् ब्रह्म" इत्याकाशस्य प्रतीयते। वैनामेति प्रसिद्धोपदेशात् प्रसिद्धाकाशश्चाङ्गीकर्तव्य इत्यत उच्यते—

॥ आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥४१॥

"ते यदन्तरा तद् ब्रह्म" इत्यर्थान्तरत्वादिव्यपदेशादाकाशो हरिरेव। "अवर्णम्", "यतो वाचो निवर्तन्ते" इत्यादिश्रुतेस्तस्यैं[10] हि तल्लक्षणम्। "अनामा सोऽप्रसिद्धत्वादरूपो भूतवर्जनात्" इति हि ब्राह्मे[11]॥*॥

॥*॥ इति द्वादशमधिकरणम् ॥*॥

न्यायविवरणम्

श्रुतेः। अनशनोक्तिश्चानुपजीवनार्थत्वेनैव सावकाशा[12] ॥३॥ अचेतनस्येक्षणादृष्टिः। बहुभावश्रुतिस्त्वन्यभावं विना तत्तन्नियामकतया स्वरूपबहुत्वार्थत्वेनैव युज्यते ॥४॥ आकाशपक्ष एवान्वया-

---

१ "श्रूयते" २ "भगवानेव" ३ "प्राणस्य प्राणमुत चक्षुषश्चक्षुरिति च" ४ "इति च स्कान्दे" ५ "वज्रमुच्यते" ६ "इति ब्रह्मवैवर्ते" ७ "लोकसञ्चरणमस्त्येव" ८ "तच्च" ९ "नामरूपयोर्निर्वहितेत्यत्राऽऽकाशस्य प्रतीयते" १०"तस्यैव" ११"इति ब्राह्मे" १२"अनशनोक्तिस्तु" इति प्र. पाठाः।

भाष्यम्

असङ्गत्वं परमात्मन उक्तम् । तच्च "स यत् तत्र किञ्चित् पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुषः" इति स्वाप्नादिद्रष्टुः[1] प्रतीयते । स च जीवः प्रसिद्धेरित्यतो वक्ति—

॥ सुषुप्त्युत्क्रान्त्योर्भेदेन ॥४२॥

"प्राज्ञेनाऽत्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नाऽन्तरम्", प्राज्ञेनाऽत्मनाऽन्वारूढ उत्सर्जद् याति" इति भेदव्यपदेशान्न जीवः पर एवासङ्गः । स्वप्नादिद्रष्टृत्वं च सर्वज्ञत्वात् तस्यैव युज्यते ॥*॥

॥*॥ इतित्रयोदशमधिकरणम् ॥*॥

"एष नित्यो महिमा ब्राह्मणस्य" इति ब्राह्मणस्यापि नित्यमहिमा प्रतीयते । स च ब्राह्मणः "सवा एष महानज आत्मा" इत्यजशब्दाद् विरिञ्च इति प्राप्तम् । देवानां च विद्याकर्मणोः पदप्राप्तिः सूचिता "तदुपर्यपि" इति । अतो ब्रवीति—

॥ पत्यादिशब्देभ्यः ॥४३॥

"सर्वस्याधिपतिः सर्वस्येशानः", "स वा एष नेति नेति" इत्यादिशब्देभ्यो नित्यमहिमो विष्णुरेव[2] ।

"उतामृतत्वस्येशानो यदन्नेनातिरोहति", "सप्तार्द्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि", "स योऽतोऽश्रुतः" इत्यादिश्रुतिभ्यस्तस्यैव हि ते शब्दाः ॥*॥

॥*॥ इति चतुर्दशमधिकरणम् ॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीब्रह्मसूत्रभाष्ये
—प्रथमाध्यायस्य तृतीयः पादः—

---

अनुव्याख्यानम्

मुक्तोपसृप्यता प्राणाद्राधिक्यं सर्वतस्तथा । वैलक्षण्यं स्वभावस्य प्रेक्षापूर्वक्रिया तथा ॥११॥
अरस्य ण्यस्य चेशत्वं सूर्याद्यनुकृतिस्तथा । वामनाख्या सर्वकम्पस्तच्छब्दानन्यसिद्धता ॥१२॥
अनामरूपता भेदस्योपजीव्यप्रमाणता । सर्वैश्वर्यादिकाद्यास्ता वेदेशेन प्रदर्शिताः ॥१३॥*॥

न्यायविवरणम्

भावः । विष्णुपक्षे तु योऽन्वेष्टव्यो भगवान्, तस्यान्तर्हृदये यावान् वाऽयमाकाशस्तावना-काशः, तस्मिन् द्यावापृथिवी अन्तरेव समाहिते, स च भगवानात्मा अपहतपाप्मेत्यन्वयः[3] ॥५॥ यज्ज्ञानाच्छाश्वतं सुखं स भगवान् । यद् ब्रह्मानिर्देश्यसुखमिति[4] वदन्ति तदेतत् तत्स्वरूपमिति[5] मन्यन्ते । अतः पूर्ववादिविपरीतैव श्रुतिः । पूर्ववादोक्तयोजना तु भ्रम एव ॥६॥ लिङ्गानां परमात्म-

---

१ "स्वप्नादिद्रष्टुः" २ "नित्यमहिमा विष्णुरेव" ३ "स भगवानपहतपाप्मेत्यन्वयः" ४ "अनिर्देश्यं सुखतिति" ५ "तदेतत् स्वरूपमिति" इति प्र.पाठाः।

अनुव्याख्यानम्

अधिकारश्च तद्धानिः प्रसङ्गादेव चिन्तितौ। तत्फलाय विधिः सिद्धे चोपासाया निराकृतः॥१४॥
यतो जैमिनिनाऽन्यार्थमसिद्धेऽर्थे विधिस्तथा। विद्याधिराजस्य मतमविरोधस्तयोस्ततः ॥१५॥
मोक्षे फलविशेषोऽस्ति नच सर्वं प्रकाशते। सर्वदा तेन देवानामपि युक्ता ह्युपासना ॥१६॥
नित्यं वृद्धिक्षयापेतं विष्णोः पूर्णं तु वेदनम्। स्पष्टातिस्पष्टविशदं ब्रह्मणोऽशेषवस्तुगम्॥१७॥
अन्येषां क्रमशो ज्ञानं मितवस्तुगतं सदा। इत्यादयो विशेषास्तु सदा विद्यापतेर्हृदि ॥१८॥
जैमिन्याद्यास्तु सामान्यवेत्तृत्वात् तत् तथाऽवदन्। विद्येशमतमेतस्मान्नैव सद्भिर्विरुद्ध्यते॥
॥१९॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते

श्रीब्रह्मसूत्रानुव्याख्याने

— प्रथमाध्यायस्य तृतीयः पादः —

---

न्यायविवरणम्

न्यवकाशो विद्यत एवेति तद्राहित्यं भ्रम एव। वामनश्रुतेरेवानवकाश इतीशानशब्दोक्तो विष्णुरेव॥ ॥७॥ वज्रशब्दस्योद्यतत्वस्य च विष्णावेवावकाशः। उद्यमित्वमेवोद्यतत्वमिति ॥१०॥ "अयं पुरुषः" इति संसारी। आत्मशब्दोदित एव विष्णुः। अत आदित्यादिज्योतिष्षु संसारिण एव। "आदित्येनैव" इत्यवधारणं बाह्यज्योतिःप्राधान्यापेक्षयेत्यादि[1]। लोकसञ्चरणं तु जीवमादाय तस्यैवादुःखेन। स्वातन्त्र्यात् ॥११॥ वैनामेति निर्वहितृत्वे श्रुत्यादिप्रसिद्धिबाहुल्यम्। प्रसिद्धाकाशस्योक्तमनामरूपत्वं विरुद्धम् ॥१२॥ सुषुप्त्युत्क्रान्त्योर्जीवेशयोर्भेदोक्तेरसङ्गित्वादि[2] चेश्वरस्यैवेत्यर्थाद् भेद एव भवति। जीवस्य तदयुक्तेरीशे सावकाशत्वाच्च ॥१३॥ ब्रह्मणा वेदेन गम्यत इति ब्राह्मणशब्दो विष्णावेव युज्यत इत्यर्थादजशब्दोऽपि तस्मिन्नेव। चतुर्मुखस्य कर्मफलाभावायुक्तेस्तयोर्भेदोऽर्थादापद्यते। उक्तविरोधश्च तत्रैव। भेदश्रुतिबाहुल्यात्। तल्लिङ्गं स[3] शब्दश्चतुर्मुखेऽनवकाश इति च समस्तमेतत्[4] ॥१४॥ ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते

श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे

प्रथमाध्यायस्य तृतीयः पादः

---

१ "बाह्यज्योतिष्षु प्राधान्यापेक्षया" २"जीवेश्वरयोर्भेदोक्तिरसङ्गत्वादि" ३"स शब्दश्च चतुर्मुखे" ४ "इति समस्तमेतत्" इति म्रि. पाठाः।

भाष्यम्

ॐ॥ श्रुतिलिङ्गादिभिरन्यत्रैव प्रसिद्धानामपि शब्दानां सामस्त्येन विशेषहेतुभिर्विष्णावेव प्रवृत्तिं दर्शयत्यस्मिन् पादे ।

॥ आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥१॥

"तत्तु समन्वयात्" इति सर्वशब्दानां परमेश्वरे समन्वय उक्तः। तन्न युज्यते। यतः "अव्यक्तात् पुरुषः परः"इति साङ्ख्यानुमानपरिकल्पितं प्रधानमप्येकेषां शाखिनामुच्यत इति चेत्, न। तस्यैव पारतन्त्र्याच्छरीररूपेऽव्यक्ते[1] विन्यस्तस्य परमात्मन एवाव्यक्तशब्देन गृहीतेः। कप्रत्ययः कुत्सने। परमात्मन एवाव्यक्तशब्दः। तत्तन्त्रत्वेन तच्छरीररूपत्वादितरस्याव्यक्तशब्दः[2]। "तुच्छयेनाऽभ्वपिहितं यदासीत्" इति दर्शयति च ।

"अव्यक्तमचलं शान्तं निष्कळं[3] निष्क्रियं परम्। यो वेद हरिमात्मानं स भयादनुमुच्यते" इति पिप्पलादशाखायाम्। "अक्षरं ब्रह्म परमम्" इत्युक्त्वा "अव्यक्तोऽक्षर इत्युक्तः[4]" इति वचनाच्च ॥*॥

॥ सूक्ष्मं तु तदर्हत्वात् ॥२॥

सूक्ष्ममेवं[5] चाव्यक्तशब्देनोच्यते। तद्ध्यव्यक्ततामर्हति। सूक्ष्मत्वं च मुख्यं तस्यैव।

"यत्तत् सूक्ष्मं परमं वेदितव्यं नित्यं पदं वैष्णवं ह्यामनन्ति। यत्तल्लोका न विदुर्लोकसारं विदन्त्येतत्[6] कवयो योगनिष्ठाः" इति च पिप्पलादशाखायाम्।

मुख्ये च विद्यमाने नामुख्यं युक्तम् ॥*॥

अनुव्याख्यानम्

ॐ॥ दुःखिबद्धावराद्यास्तु तदधीनत्वहेतुतः। शब्दा ब्रह्मणि वर्तन्ते राज्ञि यद्वत् पराजयः॥ ॥१॥ स्वातन्त्र्यं तद्गतत्वं च शब्दवृत्तेर्हि कारणम्। स्वातन्त्र्यं तत्र मुख्यं स्यात् कुतो राज्ञि जयोऽन्यथा ॥२॥ नहि भृत्यस्य विजयिशब्दस्तावत् प्रयुज्यते। यावद् राज्ञ्यन्यगत्वेऽपि स्वातन्त्र्याभासमात्रतः॥३॥ भृत्यबन्धादिकं राज्ञि राज्ञो बन्धादियोग्यतः। कारणं संशयस्य स्यादिति नैव प्रयुज्यते ॥४॥ अमङ्गलत्वाच्छब्दानां राज्ञा योगादमङ्गले। अप्रियत्वाच्च शब्दस्य स्यात् प्रयोगनिवर्तनम् ॥५॥ गुणास्तु तादृशा यत्र प्रयुज्यन्तेऽखिला अपि। पूज्येष्वेव विशेषेण स्वातन्त्र्यं मुख्यकारणम् ॥६॥ ततो[7] दोषातिदूरत्वात् संशयस्याप्यसम्भवात्। दोषाणां

---

१ "रूपकेऽव्यक्ते" २ "इतरस्याप्यव्यक्तशब्दः" ३ "निष्कलम्" इति प्र.पाठाः। ४ "अव्यक्तोऽक्षर उच्यते" इति प्र. पाठः। गीतायां तु "अव्यक्तोऽक्षर इत्युक्तः" इत्येव पाठः। तथाह्यष्टमाध्याये उपक्रमे— "अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते" (८-३) इति। उपसंहारे च—"अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम्। यं प्राप्य न निवर्तन्ते तद् धाम परमं मम" (८-२१) इति। ५ "सूक्ष्ममेवाव्यक्तशब्देन" ६ "विन्दन्त्येतत्" ७ "अतः" इति प्र.पाठाः।

भाष्यम्

॥ तदधीनत्वादर्थवत् ॥३॥

तदधीनत्वाच्चाव्यक्तत्वादीनां तस्यैवाव्यक्तत्वपरावरत्वादिकमर्थवत्।

"यदधीनो गुणोऽन्यस्य[1] तद्गुणी सोऽभिधीयते। यथा जीवः परात्मेति यथा राजा जयीत्यपि" इति च स्कान्दे ॥*॥

॥ ज्ञेयत्वावचनाच्च ॥४॥

अन्यस्य न वाच्यत्वं युज्यते॥*॥

॥ वदतीति चेन्न प्राज्ञो हि ॥५॥

"महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते" इति ज्ञेयत्वं वदतीति चेत्, न। प्राज्ञः परमात्मा हि तत्रोच्यते। "अणोरणीयान् महतो महीयान्" इति तस्य[2] हि महतो महत्त्वम्। सर्वस्मात् परमस्य[3] महतोऽपि परत्वं युज्यते॥*॥

॥ प्रकरणात् ॥६॥

"सोऽध्वनः पारमाप्नोति तद् विष्णोः परमं पदम्" इति तस्य ह्येतत् प्रकरणम् ॥*॥

॥ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥७॥

त्रयाणामेव पितृसौमनस्यस्वर्ग्याग्निपरमात्मनां प्रश्न उपन्यासश्च। "अविज्ञातप्रार्थनं च प्रश्न इत्यभिधीयते" इति वचनान्न विरोधः॥*॥

॥ महद्वच्च ॥८॥

यथा महच्छब्दो महत्तत्त्वे प्रसिद्धोऽपि परममहत्त्वात् परमात्मन एव मुख्यः एवमितरेऽपि ॥*॥

॥ चमसवदविशेषात् ॥९॥

यथा चमसशब्दोऽन्यत्र प्रसिद्धोऽपि "इदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नः" इति श्रुतेः शिरोवाचकः एवमव्यक्तादिशब्दाः सर्वेऽन्यत्र प्रसिद्धा अपि "नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति" इत्यादिश्रुतेः परमात्माभिधायका एव। अविशेषाच्छ्रुतेः ॥*॥

॥*॥ इति प्रथममधिकरणम् ॥*॥

"वसन्ते वसन्ते ज्योतिषा यजेत" इत्यादिकर्माभिधायकस्य[4] क्रमादिविरोधान्न युज्यत इत्यत आह-

॥ ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ॥१०॥

अनुव्याख्यानम्

विष्णुगतस्य प्राज्ञबुद्धिव्यपेक्षया॥७॥ स्वातन्त्र्यार्थमभिप्रेत्य दोषशब्दाश्च विष्णवि। वासुदेव-श्रुतिश्चाऽह नैव विष्णावमङ्गलम् ॥८॥ मङ्गलामङ्गलेऽन्यत्र ततो नामङ्गलं वदेत्। स्वातन्त्र्या-पेक्षया विष्णौ दोषो नामङ्गलोक्तितः ॥९॥ बहुभुक्त्वं यथा दोषो नृषु नैव हरौ क्वचित्। एवं दुःख्यादिशब्दाश्च स्वातन्त्र्यापेक्षयोदिताः॥१०॥नैव दोषा हरौ तद्वद्बुद्ध्योक्ता दोषकारिणः।तस्मात्

---

१ "गुणो यस्य" २ "तस्यैव" ३ "परस्य" ४ "कर्मक्रमादिविरोधात्" इति प्र. पाठाः।

भाष्यम्

ज्योतिरादिकर्मवाचकत्वेन प्रसिद्धाभिधेयोऽपि स एव। "एष इमं लोकमभ्यार्चत्" इत्युपक्रम्य "ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव प्राण ऋच इत्येव विद्यात्" इति ह्यधीयत एके ॥*॥

॥ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥११॥

मधुविद्यादिवत् सर्वशब्दार्थत्वेन परस्य कल्पनोपदेशान्न कर्मक्रमादिविरोधः ॥*॥

॥*॥ इति द्वितीयमधिकरणम् ॥*॥

॥ न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च ॥१२॥

"यस्मिन् पञ्च पञ्च जना आकाशश्च प्रतिष्ठितः" इत्यादिषु बहुसङ्ख्योपसङ्ग्रहेऽपि न विरोधः। तस्यैवाऽऽकाशादिषु नानाभावात्, तदतिरिक्तस्वरूपवरत्वाच्च ॥*॥

पञ्च पञ्च जनानाह—

॥ प्राणादयो वाक्यशेषात् ॥ १३ ॥

"प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो मनः" इति वाक्यशेषात् ॥*॥

॥ ज्योतिषैकेषामसत्यन्ने ॥१४॥

"तद् देवा ज्योतिषां ज्योतिः" इत्यनेन काण्वानां पञ्चत्वम् ॥*॥

॥*॥ इति तृतीयमधिकरणम् ॥*॥

अवान्तरकारणत्वेनापि स एवोच्यत इति वक्ति—

॥ कारणत्वेन चाऽऽकाशादिषु यथाव्यपदिष्टोक्तेः ॥१५॥

आकाशादिष्ववान्तरकारणत्वेन स एव स्थितः। यथाव्यपदिष्टस्यैव परस्य "य आकाशे तिष्ठन्" इत्यादिनाऽऽकाशादिषूक्तेः ॥*॥

॥*॥ इति चतुर्थमधिकरणम् ॥*॥

सर्वशब्दानां परमवाचकत्वे कथमन्यत्र व्यवहार इत्यतोऽब्रवीत्—

॥ समाकर्षात् ॥१६॥

परमात्मवाचिनः शब्दा अन्यत्र समाकृष्य व्यवह्रियन्ते।

अनुव्याख्यानम्

ते दोषशब्दाश्च तत्रैव गुणवाचकाः ॥११॥*॥ जातमोतं हरौ यस्माज्ज्योतिः षः प्राणरूपतः। आयजेतश्चाऽयजेतौ वसन्तिश्च वसंस्ततः ॥१२॥ विगतच्छादनत्वात्तु गच्छ भूतक्षयङ्करः। भुङ्क्ष्वेत्युक्तो हरिर्हु च हुतमस्मिन् जगद् यतः ॥१३॥ स्फुटत्वात् फडिति प्रोक्तः कव रक्षण इत्यतः। कवचं वर्तते यस्मात् षड्गुणत्वेन सर्वदा। वषट् तद्गत्वतस्तेषां वौषडित्येव कथ्यते॥ ॥१४॥ स्वीयं स्वीकुरुते यस्मात् स्वाहेत्युक्तो जनार्दनः। नमन्त्यस्मिन् गुणा यस्मान्नम इत्येव

१ "कल्पनोपदेशाच्च न" २ "स्वरूपत्वाच्च" इति प्र. पाठौ। ३ "पञ्च जनानाह" इत्येतावदेव प्र. पाठे दृश्यते। ४ "चक्षुषश्चक्षुः श्रोत्रस्य" ५ "पञ्चकम्" ६ "परमात्मवाचकत्वे" ७ "आयजेतश्चाऽयजेतः" इति प्र.पाठः।

भाष्यम्

"परस्य वाचकाः शब्दाः समाकृष्येतरेष्वपि । व्यवह्रियन्ते सततं लोकवेदानुसारतः"
इति हि पाद्मे[1] ॥*॥

तर्हि कथं तेषां शब्दानां जगति प्रसिद्धिः—

॥ जगद्वाचित्वात् ॥१७॥

जगति हि व्यवहारो[2] लोकस्य । नतु परमात्मनि तथा । अतो जगति प्रसिद्धिः शब्दानाम् ॥*॥

॥ जीवमुख्यप्राणलिङ्गादिति चेत् तद् व्याख्यातम् ॥१८॥

तदधीनत्वात् तच्छब्दवाच्यत्वमित्युक्तम् । तज्जीवमुख्यप्राणयोर्लिङ्गम् । "अथ यो जीवो जहाति सा शुष्यति[3]", "वायुना हि सर्वे लोका नेनीयन्ते" इत्यादिश्रुतिभ्य इति चेत्, न । उपासात्रैविध्यादिति व्याख्यातत्वात् ॥*॥

॥ अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥१९॥

परमात्मज्ञानार्थं कर्मादिकमपि वदन्तीति जैमिनिः[4] । "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति । तस्मै स होवाच द्वे विद्ये वेदितव्ये", "कथं नु भगवः स आदेशो भवतीति । यथा सोम्यैकेन मृत्पिण्डेन" इत्यादिप्रश्नव्याख्यानाभ्याम् । एवमपि चैके पठन्ति— "यस्तन्न वेद किमृचा करिष्यति" इति ॥*॥

॥ वाक्यान्वयात् ॥२०॥

वाक्यस्याप्येवमन्वयो युज्यते पृथक् पृथक् स्थितस्यापि परमात्मना ॥*॥

॥ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥२१॥

"नान्यः पन्था अयनाय विद्यते" इति प्रतिज्ञासिद्धेर्लिङ्गत्वेन कर्मादिकमुच्यत इत्याश्मरथ्यः । यस्मादेवमनित्यफलमन्यत् तस्मान्नान्यः पन्था इति ॥*॥

॥ उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः ॥२२॥

उत्क्रमिष्यतो मुमुक्षोः कर्मादिना भाव्यं साधनसाधनत्वेन । अतस्तद् वक्तीत्यौडुलोमिर्मन्यते ॥*॥

अनुव्याख्यानम्

कथ्यते ॥१५॥ इत्यशेषक्रियानामशब्दैरेको जनार्दनः । उच्यते मुख्यतो यस्मात् पदवर्णस्वरादिभिः[5] ॥१६॥ तस्मादनन्तगुणता श्रुतितात्पर्यतोऽस्य हि । विज्ञानार्थत्वतः सर्वशब्दानां नास्ति दूषणम् ॥१७॥ अङ्गीकृतेऽपि नैवास्ति दोषो वाक्यसमन्वये । तदर्थत्वेन कर्मादेः सम्भवादल्पबुद्धये ॥१८॥ कश्छन्दसां योगमिति श्रुतेर्योगार्थतत्त्ववित् । ब्रह्मैको नैव चान्योऽस्ति क इत्यस्योभयार्थतः॥१९॥ तस्यापि पूर्वसिद्धस्य ज्ञानमेवेति निश्चयात् । नित्ययोगोऽपि शब्दाना-

---

१ "इति पाद्मे" २ "जगति व्यवहारः" इति प्र. पाठौ । ३ "अस्य यदैकां शाखां जीवो जहात्यथ सा शुष्यति" इति प्र. पाठे श्रुत्यानुपूर्वी पठ्यते । ४ "वदतीति जैमिनिः" ५ "पदवर्णस्वरात्मभिः" इति प्र.पाठाः ।

भाष्यम्

॥ अवस्थितेरिति काशकृत्स्नः ॥२३॥

सर्वं परमात्मन्यवस्थितमिति वक्तुं तद्वचनमिति काशकृत्स्नः ।

"कृष्णद्वैपायनमतादेकदेशविदः परे । वदन्त्येते यथाप्रज्ञं न विरोधः कथञ्चन" इति पाद्मे ।

॥*॥ इति पञ्चममधिकरणम् ॥*॥

स्त्रीशब्दा अपि तस्मिन्नेवेत्याह—

॥ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥२४॥

"हन्तैतमेव पुरुषं सर्वाणि नामान्यभिवदन्ति । यथा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रमभिविशन्त्येवमेवैतानि नामानि सर्वाणि पुरुषमभिविशन्ति" इति प्रतिज्ञादृष्टान्तानुपरोधात् प्रकृतिशब्दवाच्योऽपि स एव ॥*॥

॥ अभिध्योपदेशाच्च ॥२५॥

"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्", "महामायेत्यविद्येति नियतिर्मोहनीति च[2] । प्रकृतिर्वासनेत्येवं तवेच्छाऽनन्त कथ्यते" इति वचनात् तदभिध्यैव प्रकृतिशब्देनोच्यते । "सोऽभिध्या स जूतिः स प्रज्ञा स आनन्दः" इति श्रुतेरभिध्या च स्वरूपमेव । ध्यायति ध्यानरूपोऽसौ सुखी सुखमतीव च । परमैश्वर्ययोगेन विरुद्धार्थतयेष्यते" इति ब्रह्माण्डे ॥*॥

॥ साक्षाच्चोभयाम्नानात् ॥२६॥

"एष स्त्र्येष पुरुष एष प्रकृतिः एष आत्मैष ब्रह्मैष लोक एष आलोको योऽसौ हरिरादिरनादिरनन्तोऽन्तः परमः पराद् विश्वरूपः" इति पैङ्गिश्रुतौ साक्षादेव प्रकृतिपुरुषत्वाम्नानात् ॥*॥

॥ आत्मकृतेः परिणामात् ॥२७॥

प्रकर्षेण करोतीति प्रकृतिरिति योगाच्च। प्रकृतावनुप्रविश्य तां परिणाम्य तत्परिणामेषु[3] स्थित्वाऽऽत्मनो बहुधाकरणात् ।

"अथ हैष आत्मा प्रकृतिमनुप्रविश्याऽत्मानं बहुधा चकार तस्मात् प्रकृतिस्तस्मात् प्रकृतिरित्याचक्षते" इति भाल्लवेयश्रुतिः । "अविकारोऽपि परमः प्रकृतिं तु विकारिणीम् । अनुप्रविश्य गोविन्दः प्रकृतिश्चाभिधीयते" इति नारदीये ।

नचान्यत् कल्प्यमप्रमाणत्वात्[4] ॥*॥

अनुव्याख्यानम्

मर्थैनैव निषिद्ध्यते ॥*॥ स्त्रीशब्दाश्च निषेधार्थाः सर्वेऽपि ब्रह्मवाचकाः ॥२०॥*॥ विरोधिसर्वबाहुल्यकारणस्त्रीनिषेधिनाम् । पृथक् समन्वयार्थानि स्थानान्येतानि सर्वशः ॥२१॥

---

१"वदन्ति ते" २"मोहिनीति च" ३"तत्परिणामनियामकतया तत्र स्थित्वा" ४"अप्रामाणिकत्वात्" इति प्र.पाठाः।

भाष्यम्

## ॥ योनिश्च हि गीयते ॥२८॥

अव्यवधानेनोत्पत्तिद्वारत्वं च प्रकृतित्वम्। तच्चास्यैव गीयते[1]— “यद् भूतयोनिं परिपश्यन्ति धीराः” इति।

“अव्यवधानेन सूतिस्तु पुंस्त्वं विद्वद्भिरुच्यते। सूतिमव्यवधानेन स्त्रीत्वमाहुर्मनीषिणः। उभयात्मकसूतित्वाद् वासुदेवः परः पुमान्। प्रकृतिः पुरुषश्चेति शब्दैरेकोऽभिधीयते” इति ब्रह्माण्डे[2] ॥*॥

## ॥ एतेन सर्वे व्याख्याता व्याख्याताः ॥२९॥

एतेन सर्वे शून्यादिशब्दा अपि व्याख्याताः।

“एष ह्येव शून्य एष ह्येव तुच्छ एष ह्येवाभाव एष ह्येवाव्यक्तोऽदृश्योऽचिन्त्यो निर्गुणश्च” इति हि महोपनिषदि[4]।

“शमूनं कुरुते विष्णुरदृश्यः सन् परः स्वयम्। तस्माच्छून्यमिति[5] प्रोक्तस्तोदनात् तुच्छ उच्यते। नैष भावयितुं योग्यः केनचित् पुरुषोत्तमः। अतोऽभावं वदन्त्येनं नाशयत्वान्नाशं[6] इत्यपि। सर्वस्य तदधीनत्वात् तत्तच्छब्दाभिधेयता। अन्येषां व्यवहारार्थमिष्यते व्यवहर्तृभिः” इति कौर्मे[7]।

एतेन तदधीनत्वाद्युक्तयुक्तिसमुदायेन।

“अवधारणार्थं सर्वस्याप्युक्तस्याऽऽध्यायमूलतः। द्विरुक्तिं कुर्वते प्राज्ञा अध्यायान्ते विनिर्णये” इति वाराहे[8] ॥*॥

॥*॥ इति षष्ठमधिकरणम्[9] ॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते

श्रीकृष्णद्वैपायनकृतब्रह्मसूत्रभाष्ये

— प्रथमोऽध्यायः —

---

[प्रथमाध्याये आहत्य सूत्राणि–१३५, अधिकरणानि–३८[10]]

---

१ “अस्यैव हि गीयते” २“सूतिरव्यवधानेन प्रकृतित्वमिति स्थितिः” इति प्र. पाठौ। ३ प्र. पाठेऽत्र षष्ठाधिकरणपूर्तिः। अत्र प्राचीनकोशेष्वधिकरणसमाप्तिचिह्नं नास्ति। चरमसूत्रमप्यन्तर्भाव्य षट्सूत्रकमेकमधिकरणमिति भाति। तथाऽपि अनुव्याख्यानेऽधिकरणन्यायमालायामन्तिमसूत्रस्य पृथक् पूर्वपक्षसिद्धान्तयुक्तिनिरुक्तिबलात् पञ्चैव सूत्राण्येकमधिकरणं चरमं च सूत्रमेकमधिकरणान्तरमिति प्रतीयते। आनन्दमाला च सङ्ग्रहभाष्यटीकाऽत्र संवदते। तथा च पक्षान्तरमाश्रित्यानुव्याख्यानन्यायविवरणयोः प्रवृत्तिरिति वक्तव्यम्। उत्तरत्रापि तथा दर्शनात्।
४ “इति महोपनिषदि” ५ “तस्माच्छून्य इति प्रोक्तः” इति प्र.पाठौ। ६ “न आश्यत इति नाशः” इति तत्त्वदीपिका। नाशमिति परमसुलभम्। नाकमिति यथा। नाश्यत्वात् तद्व्यापकत्वान्नाश इति पद्मनाभतीर्थभट्टारकाः। ७ “महाकौर्मे” ८“इति वाराहसंहितायाम्” इति प्र. पाठौ। ९ प्र. पाठेऽत्र सप्तममधिकरणम्।
१० प्र. पाठे अधिकरणानि ३९।

अनुव्याख्यानम्

सर्वमानैर्विरोधश्च व्युत्पत्तेरप्यशक्यता। परस्परविरोधश्च विरोधः कार्यतद्वतोः। स्त्रीलिङ्गत्वं निषेधश्च पूर्वपक्षेषु हेतवः[1] ॥२२॥ दोषात्यस्पृष्टिनियमः शब्दार्थानेकता तथा। बहुरूपत्वमीशस्य व्यक्तयव्यक्तिविशेषिता ॥२३॥ उत्पादनं स्वदेहाच्च दुर्जनाव्यक्तता तथा। इत्याद्या युक्तयः[2] साक्षात् सिद्धान्तस्थापका[3] इह ॥२४॥*॥ अन्वयः सर्वशब्दानामशक्यो ज्ञातुमञ्जसा। इति यल्लोकवैमुख्यं जैमिन्यादिमतं वदन् ॥२५॥ विद्याधिनाथो भगवानपाचक्रे स्वयं प्रभुः। स्वशिष्याणां प्रसिद्ध्यर्थं मतमात्मीयमंशतः ॥२६॥ विज्ञातं तैर्जगादात्र तारतम्यं नृणां वदन्। तेषु तेषु पदार्थेषु रूढिरङ्गीकृता यतः ॥२७॥ प्रयोजनबहुत्वेन तस्य तस्याविरोधतः। उपदेशादिसामर्थ्याद् विष्णौ शक्तिश्च गृह्यते ॥२८॥ तथाऽप्येतद्विरोधे तु तद्वाचित्वमपोद्यते। अविरोधे तु बह्वर्था एतन्मूलतया मताः ॥२९॥ इतो हि रूढताऽन्येषामुपजीव्यत्वमत्र हि। तत्सिद्धिस्तदपेक्षा च सापेक्षा च हरीच्छया ॥३०॥ तस्मात् परममुख्यत्वं विष्णावन्यत्र मुख्यता। उपलक्षणा च गौणी च तिस्रः शब्दस्य वृत्तयः ॥३१॥ प्रवृत्तिहेतोर्बाहुल्यं ज्ञेयं परममुख्यता। तत्र प्रयोगबाहुल्यं यदि तत्परता किमु ॥३२॥ उभयं दृश्यते विष्णौ शब्दानामपि सर्वशः। प्रयोगमात्रबाहुल्यं रूढिरित्यभिधीयते ॥३३॥ प्रयोगयुक्तसादृश्यं सम्बन्धो वाऽप्यमुख्यतः। वृत्तिहेतुरिति ज्ञेयः पूर्वायोगे परग्रहः॥३४॥ एतमेव तथा सन्तं शतर्चीत्यादिनामभिः। आचक्षत इति ह्यत्र सन्तमित्यवधारणा[4] ॥३५॥ योगस्य रूढेः प्राबल्यं विद्वद्रूढिं च तत्रगाम्। बहुशो दर्शयत्यञ्जस्तात्पर्यात् सनिरुक्तिकम् ॥३६॥ अ इति ब्रह्म कथितं तद्व्याख्यानान्मता तथा। शब्दानामपि सर्वेषां नामवित्कृतकृत्यता ॥३७॥ विष्णुनामार्थरूपत्वं संहितादेरथाब्रवीत्। णकारं च षकारं च बलचेष्टात्मकं वदन् ॥३८॥ तज्ज्ञानपूर्वकत्वेन संहिताध्ययनं तथा। उपसर्गत्वतो वेस्तु ताच्छील्यार्थादुनस्तथा ॥३९॥ णकारश्च षकारश्च

न्यायविवरणम्

ॐ॥ अवरत्वादिधर्मनियन्तृत्वं तत्तादात्म्यवत्त्वं चेति द्विविधमवरत्वादि[5]। "निरनिष्टो निरवद्यः" इत्यादिश्रुतेस्तत्तद्दोषतादात्म्यात्यस्पृष्टिनियमाद् विष्णोः, "नामानि सर्वाणि यमाविशन्ति" इति श्रुतिबलाच्च नियन्तृत्वमेवावरत्वादिकमित्यापतति[6]। श्रुतिद्वयस्यापि निरवकाशत्वात्। मृत्युशब्दादिषु प्रसिद्धेश्च। प्रसिद्धत्वाच्च[7] कर्तृव्युत्पत्तेः। "तमेव मृत्युममृतं तात दैवं सर्वात्मनाऽवैहि परं परायणम्" इत्यादेश्च। उपचारत्वकल्पनायाश्च कष्टत्वात्[8], प्रमाणाभावाच्च नाव्यक्तादिशब्दानां परमात्मविषयत्वाङ्गीकारे सर्वमानविरोधः ॥१॥

रूढो रूढयोगो[9] महारूढो[10] महायोगो महारूढयोगो[11] रूढोपचारो रूढलक्षणोपचारो लक्षणेति शब्दवृत्तिभेदाद् रूढिपूर्वकत्वेन महायोगवृत्त्या परमेश्वरेऽखिलशब्दव्युत्पत्त्युपपत्तिः[12] ॥२॥

---

१ "युक्तयः" २ "इत्यादियुक्तयः" ३ "सिद्धान्तस्थापिकाः" ४ "अवधारणात्" ५ "द्विविधं ह्यवरत्वादि" ६ "नियन्तृत्वमवरत्वादिकम्" ७ "प्रसिद्धत्वात् कर्तृव्युत्पत्तेः" ८ "उपचारकल्पनायाश्च क्लिष्टत्वात्" ९ "रूढियोगः" इति प्र· पाठाः। १० प्र. पाठे "महारूढः" इत्येतन्नास्ति। ११ "महारूढियोगः", १२ "शब्दव्युत्पत्त्युपपत्तेः" इति प्र. पाठाः।

अनुव्याख्यानम्

नामरूपतया मतौ। तस्मात् समन्वयो विष्णौ स्वरवर्णपदात्मनः ॥ ४० ॥ अपि वेदस्य किमुत वाक्यरूपेण सङ्गतिः। घोषाः सर्वेऽपि वेदाश्च सर्वे वेदाश्च यत् पदम् ॥४१॥ इन्द्रं मित्रं यमिन्द्रं च प्रथमः सङ्कृतिस्तथा। नामधाः सर्वदेवानामेक इत्यादिका श्रुतिः ॥४२॥ प्रमाणमुक्तविषये तदेवोक्तमुपक्रमात्। इति स्वयं भगवता ब्रुवताऽशेषमन्वयम् ॥४४॥*॥ न शब्दवाच्यतैवात्र प्रधानस्य निषिद्ध्यते। सर्ववेदेतिहासेषु पुराणेषु च सङ्ग्रहात् ॥४४॥ सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः। निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥४५॥ इत्यादिवाक्यरूपेण यत्रार्थो नान्य इष्यते। तेजोऽबन्नात्मकं वाऽपि यद्युपादानमिष्यते ॥४६॥ अनाद्येवापराधः कः प्रधानमिति चोदिते। अजामेकामिति प्राह श्रुतिरेतां यदा तदा। को दोषः सर्वथैवास्ति परिणामि जडं यदि ॥४७॥ अस्माकं परमुख्यार्थो भगवानेक एव तु। मुख्यमात्रतया रूढं सर्वमभ्युपगम्यते ॥४८॥ सर्वेषामपि शब्दानां गौण्याद्यं[1] तद्योगतः। अर्थद्वयमभिप्रेत्य प्रवृत्ते हरिरुक्तवान् ॥४९॥कार्याणां कारणं पूर्वं वचसां वाच्यमुत्तमम्। योगानां परमां सिद्धिं[2] परमं ते पदं विदुः ॥५०॥ इति बुद्धौ समारोहादुभयोर्योगरूढयोः। त्यागे च कारणाभावादुभयार्थत्वमिष्यते ॥५१॥ विपरीतप्रमाभावे पूर्वारोहस्तु कारणम्। सा भवेद् यत्र स व्यर्थः पूर्वारोहो भ्रमो यथा। अतो जगदुपादानं प्रधानं वक्ति सा श्रुतिः ॥५२॥ यत्तत् त्रिगुणमव्यक्तं नित्यं सदसदात्मकम्। प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत् ॥५३॥ पञ्चभिः पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा। एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुः ॥५४॥ इति भागवते प्राह विद्याधीशः स्वयं प्रभुः। नच प्रकृतिशब्देन ब्रह्मोपादानमुच्यते ॥५५॥ अविकारः सदा शुद्धो नित्य आत्मा सदा हरिः। सदैकरूपविज्ञानबल आनन्दरूपकः ॥५६॥ निर्विकारोऽक्षरः शुद्धो निरातङ्कोऽजरोऽमरः। अविश्वो विश्वकर्ताऽजो यः परः सोऽभिधीयते ॥५७॥ निर्विकारमनौपम्यं सदैकरसमक्षयम्। ब्रह्मेति परमात्मेति यं विदुर्वैदिका जनाः ॥ ॥५८॥ इति श्रुतिपुराणोक्त्या न विकारी जनार्दनः। पराधीनविशेषाप्तिरनिवर्त्यान्यथाभवैः[3] ॥ ॥५९॥ क्षीरादिवद् विकारः स्यान्नैव स स्याद्धरेः क्वचित्। अपादानत्वमेवास्य यद्युपादानतेष्यते ॥६०॥ अङ्गीकृतं तत् पितृवन्नतु विश्वात्मना भवः। नचोर्णनाभिजनितृमातॄणां च विकारिता॥६१॥ चेतनत्वात् तदन्नं हि कार्यरूपतया भवेत्। अपादानतया विश्वकर्तृत्वं बुद्धिपूर्वकम् ॥

न्यायविवरणम्

बहुरूपत्वादधिकरणत्वाधेयत्वादि[4] तस्यैव युज्यते ॥३॥
व्यक्त्यपेक्षया कार्यत्वं च ॥४॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे
प्रथमोऽध्यायः

---

१ "गौणाद्यम्" इति प्र. पाठः। २ प्राचीनकोशेषु "परमासिद्धिम्" (?) इति पठ्यते। दृढाभक्तिरित्यादिवद् भवतीति वा व्याकरणान्तरमन्वेष्टव्यम्। ३ "अनिवर्त्योऽन्यथाभवः" ४ "अधिकरणाधेयत्वादि" इति प्र.पाठौ॥

अनुव्याख्यानम्

॥६२॥ उक्तं भाल्लविशाखायां ब्रह्मतर्के च सादरम्। इच्छामात्रात् प्रभोः सृष्टिरविकारस्य सर्वदा ॥६३॥ स्वभावोऽयमनन्तस्य रजो येनाभवज्जगत्। स्वदेहादिच्छया विश्वं भुक्तपूर्वं जनार्दनः ॥६४॥ ससर्ज मातापितृवदूर्णनाभिवदेव वा। प्रधानं परिणाम्येशो निर्विकारः स्वयं सदा ॥६५॥ न चेतनविकारः स्याद् यत्र क्वापि ह्यचेतनम्। नाचेतनविकारोऽपि चेतनः स्यात् कदाचन ॥६६॥ नचान्यस्यान्यरूपत्वं विकृतत्वेऽपि दृश्यते। न क्षीरादन्यता दध्नः केनचिद् दृश्यते क्वचित् ॥६७॥ सर्वज्ञाद् ब्रह्मणोऽन्यत्वं जगतो ह्यनुभूयते। अभेदः सत्त्वमात्रेण स्याद् खर्व[1]स्वर्णयोरपि ॥६८॥ भागेन परिणामश्चेद् भागयोर्भेद एव हि। यो भागो न विकारी स्यात् स एवास्माकमीश्वरः ॥६९॥ भिन्नानां समुदायस्य नाम ब्रह्मेति चेद् भवेत्। ब्रह्मोपादानता न स्यात् तदा विश्वस्य हि क्वचित् ॥७०॥ शृङ्गाच्छरोऽविलोमभ्यो दूर्वा गोमयतस्तथा। वृश्चिकश्चेत्येवमाद्येष्वपादानत्वमिष्यते॥७१॥ उपादानैकदेशत्वं यद्यप्यत्र प्रदृश्यते। अप्यपादानतैवात्र दृष्टान्तो ब्रह्मणो भवेत् ॥७२॥ नह्युपादानतैवात्र बाह्यावयवगौरवात्। नचाचेतनतस्तत्र चेतनस्य समुद्भवः॥७३॥उपादानतया किन्तर्ह्युपादानं ह्यचेतनम्। कार्यदेहगतस्यास्य चेतनस्य प्रदृश्यते ॥७४॥ सच्च त्यच्चाभवदिति नास्य विश्वत्वमुच्यते। तत् सृष्ट्वेति गिरैवास्य पूर्वं विश्वस्य सिद्धितः ॥७५॥ सत्त्वात् ततेर्वैदिकत्वात् सम्यग् वक्तुमशक्यतः। आश्रयत्वात् स्वाश्रयत्वाज्ज्ञानत्वाद् दुर्विदत्वतः ॥७६॥ सत्ततेर्यतनाच्चैव ह्यप्राप्त[2]त्वाच्च दुर्जनैः। नित्यासाधुगुणव्यातियन्तृरूपत्वतः सदा। जगद्गतेन रूपेण ब्रह्मैव हि तथोच्यते ॥७७॥ व्यक्तिरुक्तगुणानां हि पुरुषापेक्षया नृणाम्। भवेदै[3]भवदित्याद्यः प्रयोगश्चात्र युज्यते ॥७८॥ तस्मादशेषकर्तैको निर्विकारो रमापतिः। शब्दैः प्रकृतिरित्याद्यैः स्त्रीलिङ्गैरभिधीयते ॥७९॥ बहु स्यामिति तस्यैव ह्युक्तमार्गेण युज्यते। तत्तद्गतेन रूपेण तदर्थं ह्यसृजज्जगत् ॥८०॥ यच्चाविकृतमेवै[4]तद् ब्रह्म विश्वात्मना मृषा। दृश्यते मन्ददृष्ट्यैव स सर्ग इति कथ्यते ॥८१॥ सा मन्ददृष्टिस्तस्यैव ब्रह्मणः किं ततोऽन्यगा। ब्रह्मणश्चेत् क्व सार्वज्ञ्यमन्यगा चेत् स्वतोऽन्यता ॥८२॥ नादेहयोगिनो दृष्टिरिति तत् कारणं स्वतः। देहिनः कारणयुता देहाश्च यदि न भ्रमात् ॥८३॥ किं भ्रान्तिकल्पितं तत्र भेदोऽपि भ्रमजो यदि। भ्रान्तेरज्ञानमूलत्वात् तस्य भेदव्यपेक्षया ॥८४॥ नाज्ञानकल्पकं किञ्चिदन्योन्याश्रयता यतः। भ्रमत्वे त्वियमुक्तिश्च तदन्तःपतनान्नहि ॥८५॥ व्यावहारिकता चास्य स्यादबाध्यत्व एव हि। बाध्यं नार्थक्रियाकारि नच स्वप्नोऽपि नो मृषा ॥८६॥ वासनाजनितत्वेन तस्याप्यङ्गीकृतत्वतः। स हि कर्तेति वाक्याच्च जाग्रत्त्वमिति हि भ्रमः ॥८७॥ सर्पभ्रमादावपि हि ज्ञानमस्त्येव तादृशम्। तदेवार्थक्रियाकारि तत् सदेवार्थकारकम् ॥८८॥ ब्रह्म त्वर्थक्रियाकारि परतः स्वत एव वा। अङ्गीकृतं हि तेनैव परतस्त्वे नच प्रमा ॥८९॥ अमुख्यसत्यमानस्य साधकत्वे सदाऽऽवयोः।

---

१ खर्वमित्ययसो नाम। खर्बमिति च। अत एव तौळवभाषायामस्यापभ्रंशः "कर्ब" इति। २ "ह्यप्राप्यत्वाच्च" ३ "भवेदभवदित्यस्मात्" ४ "एवैकम्" इति प्र. पाठाः।

अनुव्याख्यानम्

नहि सम्प्रतिपत्तिः स्यादतास्तिष्ठतु सा प्रमा ॥९०॥ नहि विप्रतिपन्नेन शक्यं साधयितुं क्वचित् । साधकत्वं तु सत्यस्य साक्षिणो ह्यावयोर्द्वयोः। सम्यक् सम्प्रतिपन्नं तन्न विवर्तमतं भवेत् ॥९१॥ यदि नाङ्गीकृतं किञ्चिदनङ्गीकृतताऽपि हि । नाङ्गीकृतेति मूकः स्यादिति नास्य द्विवादिता ॥९२॥ विश्वं सत्यं यच्चिकेत प्रधान्वस्य यथार्थतः । इत्यादिश्रुतयः सर्वा विश्वसत्यत्ववाचकाः[1] ॥९३॥ सत्यत्वं गगनादेश्च साक्षिप्रत्यक्षसाधितम् । साक्षिसिद्धस्य न क्वापि बाध्यत्वं तद्दोषतः ॥९४॥ सर्वकालेष्वबाध्यत्वं साक्षिणैव प्रतीयते । कालो हि साक्षिप्रत्यक्षः सुषुप्तौ च प्रतीतितः ॥९५॥ अतीतानागतौ कालावपि नासाक्षिगोचरौ । पक्षीकर्तुमशक्यत्वान्नानुमा तत्र वर्तते ॥९६॥ तदेतदिति सर्वं च दृश्यं वा स्मृतिगोचरम् । साक्षिसिद्धेन कालेन खचितं ह्येव वर्तते॥९७॥ तस्मान्न तं विना किञ्चित् स्मर्तुं द्रष्टुमथापि वा । शक्यं तन्नित्यसिद्धेर्हि नानुमावसरो भवेत् ॥ ९८ ॥ अतोऽदोषप्रतीतस्य सत्यत्वं साक्षिणा मतम् । परीक्षादेश्च सत्यत्वं तेन ह्येव मतं भवेत् ॥ ९९ ॥ अन्यथा श्रुतियुक्त्यादिप्रमाणैश्च सहैव तु । अकस्माद् विनिवृत्तिश्च किं विश्वस्य न शङ्क्यते ॥ १०० ॥ इतः पूर्वं तथाऽभावाद् यदि नो संसृतेर्गतिः । वाक्यानुमादितश्चेत् स्यात् तत्प्रामाण्यं च साक्षितः ॥१०१॥ तत्प्रामाण्यं यथा साक्षी स्थापयत्येवमेव हि । सर्वकालेष्वपि स्थैर्याद् व्यभिचारमपोह्य च ॥१०२॥ एवमक्षजमानत्वसिद्धां विश्वस्य सत्यताम् । किमिति स्थापयेन्नायं निर्दोषज्ञानशक्तितः ॥ ॥१०३॥ एकाज्ञानकृतं विश्वमिति यच्चोच्यते मृषा । बहुज्ञानकृतं विश्वमिति तस्योत्तरं भवेत् ॥१०४॥ परस्य सत्यतां जानन्नपि यः स्वात्मतस्करः । परो नास्तीति वदति किमित्युन्मत्तवद् वदेत् ॥१०५॥ पराभावे हि[2] वाग् व्यर्था यदि नैवोच्यते तदा । कशावेत्रादिकं तस्य तस्करस्योत्तरं वदेत् ॥१०६॥ प्रपञ्चो यदि विद्येत निवर्तेत न संशयः । मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥१०७॥ विकल्पो विनिवर्तेत कल्पितो यदि केनचित् । उपदेशादयं वादो(ऽ)ज्ञाते द्वैतं न विद्यते ॥१०८॥ इत्यत्र यदिशब्दौ च निवर्तेतेति च द्वयम् । विश्वस्य सत्यतामाहुर्विद्यतोत्पत्तिमेव च ॥१०९॥ विदोत्पत्ताविति ह्यस्माद् धातोरुत्पत्तिरेव हि । निवृत्तिव्याप्तियुक् प्रायः प्रपञ्चो भेदपञ्चकः ॥११०॥ जीवेश्वरभिदा चैवं जडेश्वरभिदा तथा । जीवभेदो मिथश्चैव जडजीवभिदा तथा । मिथश्च जडभेदो यः[3] प्रपञ्चो भेदपञ्चकः ॥ ॥१११॥ सोऽयं सत्यो ह्यनादिश्च सादिश्चेन्नाशमाप्नुयात् । द्वैतं न विद्यत इति तस्मादज्ञानिनां मतम् ॥११२॥ इति श्रुतेर्मितं त्रातं मायाख्यहरिविद्यया । उत्तमोऽर्थो हरिस्त्वेकस्तदन्यन्मध्यमाधमम् ॥११३॥ वाचाऽऽरब्धं तु साङ्केत्यं नाम[4] स्याद् विकृतं बहु । नित्यं तु नामधेयं यन्मृत्तिकेत्यादि वैदिकम् ॥११४॥ प्राधान्यात् तत्परिज्ञानात् प्राकृताज्ञोऽपि पूरुषः । विद्वानित्युच्यते सद्भिरेवं नित्यपरात्मवित् ॥११५॥ सदातनं सत्यमिति नित्यमेवोच्यते बुधैः ।

---

१ "वाचिकाः" २ "पराभावेऽपि" ३ "जडभेदोऽयम्" ४ "साङ्केत्यनाम" इति प्र.पाठाः ।

अनुव्याख्यानम्

प्रयोगश्चोत्तरत्रास्ति जरा यद्येनमाप्नुयात् ॥११६॥ देहः प्रध्वंसते वाऽयं किं ततोऽस्यातिशिष्यते । हन्यते न वधेनायं जरया च न जीर्यति ॥११७॥ एतत् सत्यं ब्रह्मपुरमिति नित्यत्व एव हि । वाचारम्भणमित्युक्ते मिथ्येत्यश्रुतकल्पनम् ॥११८॥ पुनरुक्तिर्नामधेयमितीत्यस्य निरर्थता । एकः पिण्डो मणिश्चेति पदवैयर्थ्यमेव च ॥११९॥ विकारत्वविवक्षायां नचैकनखकृन्तनम् । सर्वकार्ष्णायसं च स्यादतः सादृश्य एव च ॥१२०॥ विवक्षाऽत्र तु नित्यत्वे प्राधान्ये चोक्तवर्त्मना । प्राधान्यप्रतिपत्त्यर्थं सृष्ट्यादेश्चैव विस्तरः ॥१२१॥ तस्मात् केनापि मार्गेण न विवर्तमतं भवेत् । तदसङ्ख्यातदोषेतं हेयमेव शुभार्थिभिः ॥१२२॥ असङ्ख्यत्वेन दोषाणां ग्रन्थाधिक्यभयादपि । उपरम्यते ततो विष्णुरिच्छापूर्वकमश्रमः । करोति पितृवद् विश्वं पूर्णाशेषगुणात्मकः ॥१२३॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते

श्रीमद्ब्रह्मसूत्रानुव्याख्याने

प्रथमोऽध्यायः



१ "वायम्" २ "जीर्यते" ३ "विकारित्व-" ४ "सर्वं कार्ष्णायसम्" ५ "सृष्ट्यादेश्चैषः" इति प्र.पाठाः ।

ॐ॥ उक्तेऽर्थेऽविरोधं दर्शयत्यनेनाध्यायेन। प्रथमपादे युक्त्यविरोधम्। प्रथमतः स्मृत्यविरोधं दर्शयति—

॥ स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥१॥

सर्वज्ञा हि रुद्रादयः। अतस्तेषां वचनविरोधेऽप्रामाण्यमेव स्यादिति चेत्, न। अन्यस्मृतीनां विष्णवादिभिर्नितरां सर्वज्ञैरेव कृतत्वात्; श्रुतेराधिक्यं च सिद्ध्यति ॥*॥

॥ इतरेषां चानुपलब्धेः ॥२॥

इतरेषां च तासु स्मृतिषूक्तानां फलानां प्रत्यक्षतोऽनुपलब्धेरप्रामाण्यं तासां युक्तम्। चशब्देन भागोपलब्धिरङ्गीकृता ॥*॥

॥ एतेन योगः प्रत्युक्तः ॥३॥

योगफलं प्रत्यक्षोपलभ्यमिति न मन्तव्यम्। उक्ताभ्यासे तत्काल एव फलादृष्टेः ॥*॥

॥*॥ इति प्रथममधिकरणम् ॥*॥

अनुव्याख्यानम्

ॐ॥ उक्तः समन्वयः साक्षादविरोधोऽत्र साध्यते। चतुर्विधस्य तस्याऽऽदौ यौक्तस्तत्रापि च स्मृतेः ॥१॥ तस्याश्चतुःस्वरूपत्वात् प्रत्येकं चतुरात्मकाः। पादाः सर्वे तदंशाश्च मूर्तीनां वर्णमाऽऽगमात् ॥२॥ आप्तता समताऽदृष्टिश्रुतिसाम्यबलाद्भवाः। सर्वानुसारो लघुता विशेषादर्शनाफले ॥३॥ इष्टासिद्धिश्च नियमः पूर्वपक्षेषु युक्तयः। एता एव त्वतिबला सिद्धान्तस्य

न्यायविवरणम्

ॐ॥ रुद्रादीनां सकाशाद् विष्णवादीनामेवाऽऽप्तत्वम्। श्रुत्यनुसारित्वात् ॥१॥

न श्रुते रुद्रादिस्मृतिसाम्यम्। किन्तु साक्षिप्रत्यक्षसाम्यमेव। निरपेक्षत्वात् ॥२॥

न मृदादीनां वचनाद्यदृष्टिः श्रुत्यप्रामाण्यकारणम्। अपितु वचनादिशक्ताया देवताया मृदादिशब्दवाच्यत्वद्योतिकैव ॥३॥

ईश्वरस्य स्रष्टृत्ववदसतोऽपि स्रष्टृत्वं श्रूयत इति नास्ति। सोऽसच्छब्दो ब्रह्मशब्दवदेव ब्रह्मवाचक इति श्रुतिसाम्यम् ॥४॥

"कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति" इति श्रुतिबलान्नैक्यम्। किन्तु भेदापादकमेवैतत्। "निरञ्जनः परमं साम्यमुपैति", "परात् परं पुरुषमुपैति दिव्यम्" इति सन्निहितवाक्यबलात्। एकीभावशब्दस्तु सामीप्येऽपि भवति। "एकीभूता तु सा सेना पाण्डवानभ्यवर्तत" इतिवत्। "यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति। एवं मुनेर्विजानत आत्मा भवति गौतम" इति वाक्यान्तराच्च ॥५॥

---

१ "इतरेषां तासु" २ "फलादीनाम्" ३ "प्रत्यक्षत उपलभ्यत इति" ४ "बलोद्भवाः" ५ "श्रुतेः साम्यम्" ६ "परात् परं पुरिशयं पुरुषमुपैति" ७ "सान्निध्येऽपि" इति प्र. पाठाः।

## ॥ न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥४॥

नैवं श्रुतेस्तदनुसारिस्मृतेश्च तदुक्तानुपलब्धेरप्रामाण्यम् । विलक्षणत्वात् । नित्यत्वात् । तदनुसारित्वाच्च । नहि नित्ये दोषाः कल्प्याः । स्वतश्च प्रामाण्यम् । अन्यथाऽनवस्थितेः ।

"न चक्षुर्न श्रोत्रं न तर्को न स्मृतिर्वेदा ह्येवैनं वेदयन्ति" इति भाल्लवेयश्रुतेश्च । नित्यत्वं च शब्दादेव प्रतीयते—"वाचा विरूप नित्यया" इत्यादेः । "अनादिनिधना नित्या" इति च स्मृतिः ॥*॥

अनुव्याख्यानम्

निवामिका:[1] ॥४॥*॥ आप्तैः प्रत्यक्षतो दृष्ट्वा प्रोक्तमर्थं कथं श्रुतिः । पिपीलिकालिपिनिभा वारयेत् सर्वगा हि ते ॥५॥ इति चेद् यद्यशेषज्ञा रुद्राद्या हरिपूर्वकाः । किं नाशेषविदो मानं ह्युभयत्र समं भवेत् ॥६॥ नचाऽतिनिश्चयस्तत्र शक्यते व्यभिचारतः। नचास्या व्यभिचारेऽपि हीयते मानता क्वचित् । निर्दोषवाक्यमूलत्वान्नच तद्युक्तिमूलता ॥७॥ वेदोक्तस्याधिकारस्य दुर्निरूपत्वतः सदा । नियमो व्यभिचारो वा नैव ज्ञातुं हि शक्यते ॥८॥ अधिकारो हि सुलभः कथितोऽन्यागमेष्वलम् । वेदोक्तो ह्यधिकारस्तु दुर्लभः सर्वमानुषैः ॥९॥ अन्यागमेषु विप्रत्वमपि चण्डालजन्मनाम् । मण्डलान्तःप्रवेशेन क्रमशः प्रतिपाद्यते ॥१०॥ अधिकारं दुरापाद्यमुक्त्वाऽतिसुलभं पुनः । अशक्यं साधनं चोक्त्वा सुशकं तत्फलाप्तये । उच्यतेऽतस्तदुक्तं हि व्यभिचारि फलेऽपि तु ॥११॥ कथं प्रमाणतां गच्छेन्नित्यत्वात् पुरुषोद्भवैः । उज्झितं सर्वदोषैश्च कथं नो मानतां व्रजेत् ॥१२॥ विरूप नित्यया वाचा नित्ययाऽ-

न्यायविवरणम्

न लौकिकसर्वकार्यानुसारेणाकर्तृतन्त्रत्वं सर्वानुसारः । किन्तर्हि, तद्वैलक्षण्येन सर्वकर्तुर्विलक्षण[2]सर्वशक्तित्वमेवाशेषयुक्तिश्रुत्यनुसारि । "एष सर्वेश्वरः" इत्यादिश्रुतेः । युक्तिमात्राच्छ्रुतियुक्ता हि युक्तिर्बलवती ॥६॥

नचेश्वरत्यागेन जीवस्यैव कर्तृत्वाङ्गीकारे कल्पनालाघवम् । श्रुतिसिद्धत्वेनाकल्पनात् । अश्रुतजीवकर्तृत्वाङ्गीकारेण गौरवमेव[3] तदभावः[4] सिद्धान्ते लघुता । "नान्यः कर्ता स हि स्वतन्त्रः परमात् परमो हरिः" इत्यादेश्च । अभेदपक्षस्तु निराकृतः । श्रुत्यनुभवविरोधाच्च ॥७॥

शब्दैकसमधिगम्यत्वसर्वशक्तित्वादीनां विशेषाणामदर्शनाज्जीवे[5] । न जीवाद् विशेषादर्शनं परमेश्वरे । विशेषश्रुतेरेव ॥८॥

नच प्रयोजनाभावोऽकर्तृत्वे कारणम् । अशेषकर्तृत्वापादकश्च[6] । फलापेक्षिणस्त्वपूर्णत्वादेव न सर्वकर्तृत्वादिशक्तिः । इतरस्य पूर्णत्वादेवानन्तशक्तित्वाल्लीलयैव कर्तृत्वम् ॥९॥

नेशस्य पूर्णत्वासिद्धिः, कर्मसापेक्षत्वेऽनीशत्वमनपेक्षत्वे श्रुतेरप्रामाण्यमिति । कर्मणोऽपि तदधीनत्वम्, तथाऽपि तदनुसारेण फलदानमित्यनङ्गीकार एवेष्टश्रुतिप्रामाण्यासिद्धिः ॥१०॥

---

१"नियामिकाः" २"सर्वकर्तृविलक्षण-" ३"कर्तृत्वाङ्गीकारे गौरवमेव" ४"तदभावे" ५"अदर्शनं जीवे" ६"अशेषकर्तृत्वापवादकश्च" इति प्र. पाठाः ।

भाष्यम्

॥ दृश्यते तु ॥५॥

अधिकारिणां फलम् । भविष्यत्पुराणे च—

"ऋग्यजुस्सामाथर्वाख्या मूलरामायणं तथा। भारतं पञ्चरात्रं च वेदा इत्येव शब्दिताः । पुराणानिच यानीह वैष्णवानि विदो विदुः। स्वतः प्रामाण्यमेतेषां नात्र किञ्चिद् विचार्यते। यद्येषूक्तं न दृश्येत पूर्वकर्मात्र कारणम्। नाप्रामाण्यं भवेदेषां दृश्यते ह्यधिकारतः। इतः प्रामाण्यमन्येषां न स्वतस्तु कथञ्चन। अदृश्योक्तौ ततस्तेषामप्रामाण्यं न संशयः" इति ॥*॥

॥*॥ इति द्वितीयमधिकरणम् ॥*॥

अनुव्याख्यानम्

नित्यया सदा। इत्यादिश्रुतिभिर्वेदो नित्य इत्यवगम्यते ॥ १३ ॥ पिपीलिकालिपिश्चापि प्रमाणमविरोधतः। यथा द्रौणेरुलूकेन कृतमप्यास बोधकम् ॥१४॥ अविरुद्धं विरुद्धं तु विरोधादेव बाधितम्। विरोधादर्शनात् तस्माद् वेदप्रामाण्यमिष्यते ॥१५॥ तन्मूलत्वात् स्मृतीनां च विरोधो यत्र न क्वचित्। विरोधोऽपि स एवोक्तः प्रत्यक्षेणाऽऽगमेन वा॥ ॥१६॥ आगमेनाऽऽगमस्यैव विरोधे युक्तिरिष्यते। उपजीव्यविरोधे तु वेदस्यान्यार्थकल्पना ॥ ॥१७॥ प्रत्यक्षमुपजीव्यं स्यात् प्रायो युक्तिरपि क्वचित्। आगमैकप्रमाणेषु तस्यैव ह्युपजीव्यता ॥१८॥ युक्तोऽयुक्तश्च यद्यर्थ आगमस्य प्रतीयते। स्यात् तत्र युक्त एवार्थो युक्तिश्च त्रिविधा मता ॥१९॥ व्याप्तिः प्रत्यक्षगा यस्या युक्तिगाऽऽगमगा तथा। प्रत्यक्षागममूला तु युक्तिस्तत्र बलीयसी ॥२०॥ याथार्थ्यमेव मानत्वं तन्मुख्यं ज्ञानशब्दयोः। अर्थत्वमर्यतैव स्यान्न क्रियार्थेषु सा मता ॥२१॥ ज्ञानार्थे ज्ञेयता मुख्या शब्दार्थे तदनन्तरम्। यथार्थज्ञानजनका यथार्था युक्तयः स्मृताः ॥२२॥ अनुप्रमाणमेतानि ह्यक्षयुक्तिवचांस्यतः। प्रामाण्यं नानुवादस्य स्मृतेरपि विहीयते ॥२३॥ याथार्थ्यमेव प्रामाण्यशब्दार्थो यद् विवक्षितः। अङ्गीकृतं चेत् प्रामाण्यं स्मृत्यादेः का विरुद्धता ॥२४॥ नचाफलत्वं वक्तव्यं सर्वस्मृत्यनुवादयोः। फलवत्त्वं नचा-

न्यायविवरणम्

सर्वे चेतना अपूर्णगुणा इति नियमो न। स्वतन्त्रस्य पूर्णगुणत्वनियमात्। "अपूर्णोऽयं जीवसङ्घोऽस्वतन्त्रः पूर्णो हरिर्यः स्वतन्त्रः सदैव। नहि स्वतन्त्रोऽपूर्णतां कामयीत पूर्णो, यदि स्यादस्वतन्त्रः कुतः सः" इति श्रुतेः ॥११॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते

श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे

द्वितीयाध्यायस्य प्रथमः पादः

---

१ "ऋग्यजुस्सामाथर्वाश्च" २ "इत्येव गम्यते" ३ "सर्वेचेतनाः" ४ "स्वतन्त्रस्य च पूर्ण-" इति प्र. पाठाः।

साभिः प्रामाण्यं हि विवक्षितम् ॥२५॥ तृणादिदर्शने किं च फलवत्त्वं निगद्यते। सुखदुःखादिकं किञ्चित् स्मृतावपि हि दृश्यते ॥२६॥ न परिच्छेदकार्येव प्रमाणमिति च प्रमा। निर्दोषाक्षोद्भवं ह्यत्र प्रत्यक्षमिति गीयते ॥२७॥ प्राकृतं शुद्धचैतन्यमक्षं तु द्विविधं मतम्। शुद्धमीशरमामुक्तेष्वन्यत्र प्राकृतैर्युतम् ॥२८॥ निर्दोषमेव चैतन्यमन्यत्रोभयमिष्यते। सुखदुःखादिविषयं शुद्धं संसारगेष्वपि ॥२९॥ निर्दोषत्वातिनियमात् तद् बलिष्ठतमं मतम्। पञ्चेन्द्रियमनोभेदात् प्राकृतं षड्विधं स्मृतम्॥३०॥अनुमा युक्तिरेवोक्ता व्याप्तिरेव तु सा स्मृता। प्रतिज्ञातार्थसिद्ध्यर्थं व्याप्तिरेव यदोदिता ॥३१॥ अवशिष्टं किमत्रास्ति लिङ्गं तत्र विजानतः। यदि लिङ्गमसिद्धं स्यात् कुत एवास्य मानता ॥३२॥ यदि स्मारकमात्रं स्यात् स्मर्तुर्नात्र प्रयोजनम्। न पञ्चावयवोक्तौ च विवादावसितिर्भवेत् ॥३३॥ दृष्टान्तादिषु चैवं स्यात् साधनं पुनरेव हि[1]। लिङ्गोक्तावपि चैवं स्यादनुमावसितिर्ध्रुवा ॥३४॥ विरोधोऽसङ्गतिश्चैव साक्षाद् युक्तेस्तु दूषणम्। प्रतिज्ञायामसम्बन्धो युक्तेरुक्ता ह्यसङ्गतिः ॥३५॥ विरोधोऽपि त्रिधैव स्यात् प्रतिज्ञार्थविरुद्धता। लिङ्गराहित्यमव्याप्तिर्न्यूनाधिक्ये तु वाचिके ॥ ३६ ॥ साध्यव्यापकवैलोम्यमव्याप्तिः साधनस्य च। दुर्बलेन विरोधेऽपि न प्रमाणमसाधकम् ॥३७॥ स्ववाक्येन विरोधेऽपि नैव साधकतां व्रजेत्। संवादानुक्तिसंयुक्ता एत एव च निग्रहाः[2] ॥ ॥३८॥ वादो जल्पो वितण्डेति कथास्तिस्रो विजानताम्। स्वार्थं परार्थमपि वा तत्वनिर्णयसाधनी[3] ॥३९॥ केवलं तु कथा वादो जल्पोऽर्थादिव्यपेक्षया। सतामेव कथा ज्ञेया वितण्डा त्वसतां सताम् ॥४०॥ अप्रकाश्य स्वसिद्धान्तमसतां पक्षदूषणम्। उक्ते तैः प्रथमं माने वक्तव्यं तस्य दूषणम् ॥४१॥ विद्यापरीक्षापूर्वैव वितण्डा जल्प एव च। उच्चनीचत्वनिर्णीतिर्यतो जयपराजयौ ॥४२॥ विनैव तत्त्वनिर्णीतिं नहि जल्पादिना क्वचित्। उच्चनीचत्वविज्ञानमिति विद्यापरीक्षणम् ॥४३॥ वादेन चोच्चनीचत्वविज्ञानं भवति स्फुटम्। इति वादस्य पूर्वत्वं तत्सिद्धौ व्यर्थताऽन्ययोः ॥४४॥ बहुविद्यत्वसिद्धौ तु नैव वादोऽपि कारणम्। सभासभापप्राश्नीकपूर्वस्तु स्पर्धिनामपि ॥४५॥ वाद एवोभयार्थः स्यान्निर्णीतिजयकारकः। तत्त्वाप्रकाश एवैको वितण्डाजल्पयोः फलम् ॥४६॥ विना वादेन विद्याया यदि शक्यं परीक्षणम्। स्याज्जल्पादिरपि क्वापि वाद एवान्यथा भवेत् ॥४७॥ जल्प इत्यपि नाम स्याद् वादस्यैतादृशस्य तु। प्रतिज्ञामात्रसाध्यत्वमपि स्याद् याज्ञवल्क्यवत्। संवादे वादिनोः क्वापि विवादे हेतुरिष्यते॥४८॥ सभा सभापतिश्चैव प्राश्निकाश्चैव वैष्णवाः। रागद्वेषविहीनाश्च स्युः सभ्याः सर्ववेदिनः ॥४९॥ प्राश्निकाश्चैतदज्ञाने सभ्याश्चैषां च दूरगाः। प्रमाणं निर्णयाय स्युः पक्षपातविवर्जिताः ॥५०॥ उभाभ्यां साधनं चैव दूषणं वादजल्पयोः। सद्भिरागम एवैकः प्रयोज्योऽभीष्टसाधकः ॥५१॥ स्वसिद्धान्तानुसारेण ह्यसद्भिरनुमोच्यते। प्रत्यक्षागमवैरूप्यमाश्रित्यान्यार्थतैव तु ॥५२॥ आगमे दर्शनीयाऽत्र दोषो लिङ्गविलोमता। लिङ्गानुकूल्यं स्वार्थस्य श्रुत्यादीनामनुग्रहः ॥५३॥ त्रिपञ्चावयवामेव युग्मावयविनीमपि। नियमाद् योऽनुमां ब्रूयाद्

१ "पुनरेव तु" २ "एव तु निग्रहाः" ३ "तत्त्वनिर्णयसाधिनी" इति प्र॰ पाठाः।

भाष्यम्

"मृदब्रवीत्", "आपो ब्रुवन्" इत्यादिवचनाद् युक्तिविरुद्धो वेद इत्यतोऽब्रवीत्—

॥ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥६॥

मृदाद्यभिमानिदेवता तत्र व्यपदिश्यते। तासां चेतरेभ्यो विशिष्टं सामर्थ्यमनुगतिश्च सर्वत्र। अतस्तासां सर्वमुक्तं युज्यते ॥*॥

॥ दृश्यते च ॥७॥

तासां सामर्थ्यं महद्भिः। भविष्यत्पुराणे च—

"पृथिव्याद्यभिमानिन्यो देवताः प्रथितौजसः। अचिन्त्याः शक्तयस्तासां दृश्यन्ते मुनिभिश्च ताः। ताश्च सर्वगता नित्यं वासुदेवैकसंश्रयाः" इति ॥*॥

॥*॥ इति तृतीयमधिकरणम् ॥*॥

"असदेवेदमग्र आसीत्", "असतः सद्जायत" इत्यादिनाऽसतः कारणत्वोक्तेर्विरोध इत्यतो वक्ति—

॥ असदिति चेन्न प्रतिषेधमात्रत्वात् ॥८॥

प्रतिषेधमात्रत्वान्नासतः कारणत्वं युक्तम्। असतः कारणत्वाद्युक्तिविरुद्धं वेदवाक्यमित्येतदत्र निषिध्यते। सर्वशब्दानां ब्रह्मसमन्वयेऽपि[1] "तदधीनत्वादर्थवत्" इत्यादिनाऽमुख्यत्वेनान्यस्यापि

अनुव्याख्यानम्

तं ब्रूयाद् यदि तादृशी। नानुमेति तदा केन साध्याऽवयवकल्पना॥५४॥ नियतावयवासिद्धौ व्याप्तिमात्रेण साधनम्। कर्तव्यमेव तेन स्यात् तस्मात् सैवानुमा मता ॥५७॥ अनुभूतिः प्रमाणं चेत् केन स्मृतिरपोह्यते। पूर्वानुभूते किं मानमित्युक्ते स्यात् किमुत्तरम्॥५८॥ मानसं तद्धि विज्ञानं तच्च साक्षिप्रमाणकम्। अतीतानागतं यद्वद् योगिभिर्दृश्यतेऽञ्जसा। एवं पूर्वानुभूतं च मनसैवावगम्यते ॥५९॥ विज्ञातं मनसा पूर्वं मयैतत् कृतमित्यपि। साक्षादनुभवात् सिद्धं कथमेव ह्यपोह्यते ॥६०॥ एवंलक्षणके मानत्रये ब्रह्मादिवस्तुषु। प्रमाणं वेद एवैकस्तत्प्रामाण्यं च साधितम् ॥६१॥*॥ तथाऽपि मृज्जलादीनां बुद्धिवागादिवाचकः। दृष्टव्याप्तिविरुद्धत्वात् तत्र मानं कथं भवेत् ॥६२॥ ततस्तन्नामकः कश्चित् पुमानन्यो भवेदिति। युक्त्यागमाविरोधेन प्राप्तमत्राभिधीयते ॥६३॥ बालरूढिं विनैवापि विद्वद्रूढिसमाश्रयात्। तत्तन्नामान एवैते तत्तद्वस्त्वभिमानिनः ॥६४॥ सन्ति तेषां विशेषेण शक्तिरन्येभ्य उच्यते। व्याप्तिश्चोक्तानुसारेण दृश्यन्ते चाधिकारिभिः ॥६५॥ शास्त्रोक्तवस्तुनश्चैव व्युत्पत्तिः शास्त्रलिङ्गतः। व्युत्पत्तिः सा बलवती मूर्खव्युत्पत्तितो हि यत् ॥६६॥ दृढयुक्तिविरोधे तु सर्वत्र न्याय ईदृशः ॥*॥ अल्पवाक्ययुता युक्तिर्बहुलैव विरोधिनी ॥६७॥ यत्र तत्र कथं वस्तुनिर्णयः स्यादितीरिते। विरोधियुक्तिबाहुल्यादिति न्यायो विनिश्चितः ॥६८॥ युक्तेस्तु युक्तिबाहुल्यमागमादागमस्य च। कथं न निर्णयं कुर्यादित्यसत् कारणं नहि॥६९॥ श्रुत्यर्थो भवति क्वापि

---

१ "ब्रह्मणि समन्वयेऽपि" इति प्र. पाठः।

भाष्यम्

वाच्यत्वेनाङ्गीकारादसतः प्राप्तिः। तथा श्रुतिप्राप्तमेवासन्मतमत्र निषिद्ध्यते। समयस्योपरि निषेधात्। अर्थाद् युक्तिविरोधो निराक्रियते ॥*॥

॥ अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥९॥

असत उत्पत्तौ प्रळयेऽपि सर्वासत्त्वमेव स्यात् ॥*॥

॥ न तु दृष्टान्तभावात् ॥१०॥

प्रळये सर्वासत्त्वं भावे दृष्टान्तभावादेव न युज्यते। सत उत्पत्तिः सशेषविनाशश्च हि लोके दृष्टः ॥*॥

॥ स्वपक्षदोषाच्च ॥११॥

दृष्टान्ताभावादेव ॥*॥

॥ तर्काप्रतिष्ठानादप्यन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॥१२॥

एतावानेव तर्क इति प्रतिष्ठापकप्रमाणाभावादुक्तादन्यथाऽप्यनुमेयमिति चेत्, न। एवं सति प्रमाणसिद्धेऽपि मोक्षेऽन्यथाऽनुमेयत्वादनिर्मोक्षप्रसङ्गः। अतो यावत् प्रमाणसिद्धं तावदेवाङ्गीकर्तव्यम्। नातोऽन्यच्छङ्क्यम्।

"यावदेव प्रमाणेन सिद्धं तावदहापयन्। स्वीकुर्यान्नैव चान्यत्र शङ्क्यं मानमृते क्वचित्" इति वामने ॥*॥

अनुव्याख्यानम्

श्रुतिप्रायोपपत्तिभिः। अविरोधश्चतुर्थे तु पादे सम्यक् समर्थ्यते ॥६९॥ असत्-कार्यं यथा दृष्टं वस्तुत्वात् कारणं तथा। इति चेन्न निषेधैकस्वरूपस्य न कर्तृता ॥७०॥ बुद्धिपूर्वप्रवृत्तिर्हि कर्तृत्वमिह निश्चितम्। प्रतिषेधात्मकत्वं तु भावस्याभावधर्मतः। धर्मधर्म्यैक्यतश्चैव नतु तन्मात्रता भवेत् ॥७१॥ अभावस्य च भावोऽपि धर्मोऽथापि हि धर्मिणः। तादृक्त्वं मात्रतेहोक्ता बुद्धिराहित्यमेव तत् ॥७२॥ विशेष्यतैव धर्मित्वं प्रथमप्रतिपत्तिषु। निषेधविधिरूपत्वं भावाभावत्वमत्र हि ॥७३॥ सर्वनाशेष्वपि सदा शिष्टत्वाद् यस्य कस्य नुः। नाशोऽयं विमतोऽपि स्यान्नाशत्वात् कर्तृशेषवान् ॥७४॥ नचाशेषनृनाशस्तु दृष्टो दृश्योऽस्ति वा क्वचित्। धर्माधर्माश्रयत्वेन स्वीकार्योऽपि नरो लये ॥७५॥ अनादित्वं विनाऽदृष्टं कथं स्यात् कारणं क्वचित्। पूर्वादृष्टात् परादृष्टं यदि नैवोत्तरं कुतः ॥७६॥ अदृष्टं कारणं नो चेल्लये मानं च किं भवेत्। उत्पत्तिनाशकारी हि बुद्धिमान् दृश्यते क्वचित् ॥७७॥ तद्दृष्टान्तेन सर्वत्र कर्ता किं नानुमीयते। आगमानुगृहीता तु मानमेषाऽनुमाऽपि तु ॥७८॥ आगमानुग्रहाभावे न तर्कः स्यात् प्रतिष्ठितः। अक्षजागममूलस्य स्यादेवास्य प्रतिष्ठितिः। अन्यथाऽस्याप्रतिष्ठा च स्ववाचा

१ "प्रलये सर्वा-" २ "प्रलये" ३ "शक्यम्" ४ "कर्तृत्वमिति" ५ "भावो हि" ६ "कारी च" इति प्र. पाठाः।

भाष्यम्

## ॥ एतेन शिष्टापरिग्रहा[1] अपि व्याख्याताः ॥१२॥

एतेन दृष्टान्तभावेनाभावेन चावशिष्टा अप्यपरिग्रहा विरुद्धसिद्धान्ता अकर्तृकत्वाचेतनकर्तृकत्वजीवकर्तृकत्वादयोऽपि —

"अकस्माद्धीदमाविरासीदकस्मात् तिष्ठत्यकस्माल्लयमभ्युपैति", "प्रधानादिदमुत्पन्नं प्रधानमधि तिष्ठति। प्रधाने लयमभ्येति नह्यन्यत् कारणं मतम्", "जीवाद् भवन्ति भूतानि जीवे तिष्ठन्त्यचञ्चला[2]। जीवे तु लयमृच्छन्ति न जीवात् कारणं परम्" इत्यादिश्रुतिप्राप्ता निराकृताः।

यथा दुःखादिषु जीवस्यास्वतन्त्रत्वमेवमन्येष्वपीति[3] दृष्टान्तः। श्रुतिगतिस्तु ब्रह्मवाचकत्वेन प्रदर्शिता। यत्रान्यवाचकत्वेऽप्यविरोधस्तत्रान्यदप्यमुख्यतयोच्यते, यत्र विरोधस्तत्र ब्रह्मैवोच्यत इति नियमः ॥*॥

॥*॥ इति चतुर्थमसदधिकरणम् ॥*॥

## (1)॥ भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् ॥१४॥

"कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्वे एकीभवन्ति" इति मुक्तजीवस्य परापत्तिरुच्यते। अतस्तयोरविभागः। अतः पूर्वमपि स एव नह्यन्यस्यान्यत्वं युज्यत इति चेत्, न। स्याल्लोकवत्। यथा लोक उदक उदकान्तरस्यैकीभावव्यवहारेऽप्यन्तर्भेदोऽस्त्येव, एवं स्यादत्रापि। तथा च श्रुतिः—

"यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति" इति।

स्कान्दे च—

"उदकं तूदके सिक्तं मिश्रमेव यथा भवेत्। न वै तदेव[4] भवति यतो वृद्धिः प्रदृश्यते। एवमेव हि जीवोऽपि तादात्म्यं परमात्मना। प्राप्तोऽपि नासौ भवति स्वातन्त्र्यादि-

अनुव्याख्यानम्

व्याहतैव हि ॥७९॥ नच शिष्टागृहीतत्वं निरीशादीशवादिनः। अतोऽवशिष्टजीवादिकर्तृताऽत्र निषिद्ध्यते ॥८०॥ तन्मनोऽकुरुतेत्यादेरसतो मनसो जनिः। निवारिता तु पूर्वत्र ह्यकस्मादिति तद्भिना ॥८१॥ असतो विश्वजननमाशङ्क्यात्र निषिद्ध्यते। प्रापकं वाक्यमात्रं तु परिहारो विशेषितः ॥८२॥ क्वचिज्जीवाकृतं दृष्ट्वा चेतनादेव चाकृतम्। तद्वदेवानुमाऽन्यत्र वस्तुत्वात् क्रियते श्रुतेः ॥८३॥*॥ नान्यदन्यत्वमापन्नं क्वचिद् दृष्टं कथञ्चन। अतो जीवस्य न ब्रह्मभावः स्याद्धि कदाचन ॥८४॥ क्वचिद् भिन्नतया दृष्टं तदभिन्नतया कथम्। दृश्येन्नो दृष्टपूर्वं हि तादृशं नच दृश्यते ॥८५॥ भोक्तृत्वापत्तित इति यन्मतं तत् कुतो हरिः। भोक्त्रापत्तेरिति प्राह ॥*॥

---

१ "शिष्टा अपरिग्रहाः" इति प्र. सूत्रपाठः। २ "अचञ्चलाः" [?] इति प्र. पाठः। अचञ्चला भूतानि— अचञ्चलानि भूतानीत्यर्थः। सर्वा भूतानीत्यर्थः। छान्दसत्वात्प्रत्ययलोप आकारश्च। ३ "जीवस्यास्वातन्त्र्यम्" ४ "नचैतदेव" इति प्र. पाठः।

भाष्यम्

विशेषणात्" इति। "ब्रह्मेशानादिभिर्देवैर्यत् प्राप्तुं नैव शक्यते। तद् यत्स्वभावः कैवल्यं स भवान् केवलो हरे" इति च। "न ते महित्वमन्वश्नुवन्ति", "न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप" इत्यादि च।

फलत्वेऽपि युक्तिविरोधेऽन्तर्भावादत्रोक्तम् ॥*॥

॥*॥ इति पञ्चममधिकरणम् ॥*॥

## ॥ तदनन्यत्वमारम्भणशब्दादिभ्यः ॥१५॥

स्वतन्त्रबहुसाधना सृष्टिर्लोके दृष्टा। नैवं ब्रह्मणः। स्वरूपसामर्थ्यादेव तस्य सृष्टिः।

"किं स्विदासीदधिष्ठानमारम्भणं कतमत् स्वित् कथाऽऽसीत्" इति ह्याक्षेपः।

अधिष्ठानाद्यनुक्तेः। आदिशब्दाद् युक्तिभिश्च।

"परतन्त्रो ह्यपेक्षेत स्वतन्त्रः किमपेक्षते। साधनानां साधनत्वं यतः किं तस्य साधनैः" इत्यादिभिः ॥*॥

## ॥ भावे चोपलब्धेः ॥१६॥

स्वतन्त्रसाधनभावे प्रमाणैरुपलभ्येत।

"अनुक्तं पञ्चभिर्वेदैर्न वस्त्वस्ति कुतश्चन। अतो वेदत्वमेतेषां यतस्ते सर्ववेदकाः" इति स्कान्दे ॥*॥

"अद्भ्यः सम्भूतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्तताधि" इत्यादिना साधनान्तरप्रतीतेः कथमनुपलब्धिरित्यत आह—

## ॥ सत्त्वाच्चावरस्य ॥१७॥

अवरस्य तदधीनस्य साधनस्य सत्त्वात्।

"काल आसीत् पुरुष आसीत् परम आसीत् तद् यदासीत् तदावृतमासीदथ ह्येक एव परम आसीद् यस्यैतदासीन्न ह्येतदासीत्" इति हि काषायणश्रुतिः ॥*॥

## ॥ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥१८॥

"नासदासीन्नो सदासीत्" इति सर्वस्यासत्त्वव्यपदेशान्नेति चेत्, न। अव्यक्तत्वपारतन्त्र्यादिधर्मान्तरेण हि तदुच्यते। "तम आसीत्" इत्यादि[3]वाक्यशेषात्। नचान्यत्र प्रमाणमस्ति।

अनुव्याख्यानम्

कथं च तदनन्यता॥८६॥जगतस्त्वविकारत्व उक्तन्यायेन साधिते। स्वतन्त्रकारणान्यत्वं तेन ह्यत्र निषिद्ध्यते ॥८७॥ द्रव्यं कर्म च कालश्च स्वभावश्चेतना धृतिः। यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षया। इति श्रुतेस्तद्वशस्य भावो न पर इत्यतः ॥८८॥ शक्तोऽपि ह्यन्यथाकर्तुं स्वेच्छानियमतो हरिः। कारणैर्नियतैरेव करोतीदं जगत् सदा ॥८९॥ नित्यभेदो निमित्तेन

---

१ "न ते विष्णो जायमानो न जात इति च" २ "अद्भ्यः सम्भूतः पृथिव्यै. रसाच्चेत्यादिना" ३ "इति वाक्यशेषात्" ४"अविकारित्वे" इति प्र. पाठाः।

भाष्यम्

"अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः", "अनाद्यनन्तं जगदेतदीदृक् प्रवर्तते नात्र विचार्थमस्ति। नचान्यथा क्वापि च कस्य चेदमभूत् पुरा नापि तथा भविष्यत्", "असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्", "असत्यमाहुर्जगदेतदज्ञाः शक्तिं हरेर्ये न विदुः परां हि। यः सत्यरूपं जगदेतदीदृक् सृष्ट्वा त्वभूत् सत्यकर्मा महात्मा", "अथ हैनमाहुः सत्यकर्मेति सत्यं ह्येवेदं विश्वमसौ सृजते। अथहैनमाहुर्नित्यकर्मेति नित्यं ह्येवासौ कुरुते" इत्यादिवचनेभ्यश्च। "परस्परविरोधे तु वाक्यानां यत्र युक्तता। तथैवार्थः परिज्ञेयो नावाक्या युक्तिरिष्यते" इति बृहत्संहितायाम्। "विरुद्धवत् प्रतीयन्त आगमा यत्र वै मिथः। तत्र दृष्टानुसारेण तेषामर्थोऽन्ववेक्ष्यते" इति च। "ईशोऽनीशो जगन्मिथ्या न पूज्यो गुरुरित्यपि। इत्यादिवद् विरुद्धानि वचनान्यथ युक्तयः। प्रमाणैर्बहुभिर्ज्ञेया आभासा इति वैदिकैः। वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पना। अन्येषां तु विरुद्धानां विप्रलम्भोऽथवा भ्रमः" इति च भागवततन्त्रे। "शास्त्रार्थयुक्तानुभवः[1] प्रमाणं तूत्तमं मतम्। मध्यमं त्वागमो ज्ञेयः प्रत्यक्षमधमं स्मृतम्। प्रत्यक्षयोरागमयोर्विरोधे निश्चयाय तु। अनुमाद्या न स्वतन्त्राः प्रामाण्यपदवीं ययुः" इति पुरुषोत्तमतन्त्रे[2] ॥*॥

॥ युक्तेः शब्दान्तराच्च ॥१९॥

"साधनानां साधनत्वं यदाऽऽत्माधीनमिष्यते। तदा साधनसम्पत्तिरैश्वर्यद्योतिका भवेत्" इत्यादेः साधनान्तरेण हि सृष्टिर्युक्ता। "अद्भ्यः सम्भूतो हिरण्यगर्भ इत्यष्टौ" इत्यादिशब्दान्तराच्च ॥*॥

॥ पटवच्च ॥२०॥

साधनान्तरेण हि पटादिसृष्टिर्दृष्टा ॥*॥

॥ यथा प्राणादिः ॥२१॥

तच्च साधनजातं तेनानुप्रविष्टमेव। यथा शरीरेन्द्रियादिः।

"प्रकृतिं पुरुषं चैव प्रविश्य पुरुषोत्तमः। क्षोभयामास भगवान् सृष्ट्यर्थं जगतो विभुः" इति च कौर्मे[3] ॥*॥

॥*॥ इति षष्ठमधिकरणम् ॥*॥

अनुव्याख्यानम्

ह्युपादानेन तु द्वयम्। असद् यत् कार्यरूपेण कारणात्मतयाऽस्ति हि ॥९०॥ अनवस्थाऽन्यथा हि स्यात् सर्वत्रोत्पत्तिनाशयोः। शक्तोऽपि भगवान् विष्णुरकर्तुं कर्तुमन्यथा ॥९१॥ स्वभिन्नं कारणाभिन्नभिन्नं[4] विश्वं करोत्यजः। इति श्रुतेरवसित उक्तार्थोऽयमशेषतः ॥९२॥*॥ अनंश-

---

१ "युक्तोऽनुभवः" इति प्र. पाठः। २ "इति च पुरुषोत्तमतन्त्रे" इति क्वचित् पठ्यते। ३ "जगतः प्रभुरिति कौर्मे" ४ "कारणाभिन्नं भिन्नम्" इति प्र. पाठौ।

भाष्यम्

[1]जीवकर्तृपक्षः श्रुतिप्राप्तो विस्तरान्निराक्रियते—

॥ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥२२॥

[2]जीवकर्तृत्वे हिताकरणमहितकरणं च न स्यात् ॥*॥

॥*॥ इति सप्तममधि[3]करणम् ॥*॥

॥ अधिकं तु भेदनिर्देशात् ॥२३॥

नच ब्रह्मणः श्रमचिन्तादिदोषप्रसक्तिः। अधिकशक्तित्वात्।

"श्रोता मन्ता द्रष्टाऽऽदेष्टाऽऽघोष्टा विज्ञाता[4] प्रज्ञाता सर्वेषां भूतानामन्तरपुरुषः", "एष त आत्मा सर्वान्तरः", "योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति" इत्यादिविशेषनिर्देशात् ॥*॥

॥ अश्मादिवच्च तदनुपपत्तिः ॥२४॥

चेतनत्वेऽप्यश्मादिवदस्वतन्त्रत्वात् स्वतः कर्तृत्वानुपपत्तिर्जीवस्य।

"यथा दारुमयीं योषां नरः स्थिरसमाहितः। इङ्गयत्यङ्गमङ्गानि तथा राजन्निमाः प्रजाः" इति च भारते ॥*॥

॥ उपसंहारदर्शनान्नेति चेत् क्षीरवद्धि ॥२५॥

जीवेन कार्योपसंहारदर्शनात् तस्य कर्तृत्वमिति चेत्, न। यथा क्षीरं गोषु [5]दृश्यमानमपि प्राणादेव जायते—"अन्नं रसादिरूपेण प्राणः परिणयत्यसौ" इति वचनात्, एवं जीवे दृश्यमानोऽपि कार्योपसंहारोऽस्वातन्त्र्यात् परकृत एव। "य आत्मानमन्तरो यमयति", "नाहं कर्ता न कर्ता त्वं कर्ता यस्तु सदा प्रभुः" इत्यादेः ॥*॥

॥ देवादिवदपि लोके ॥२६॥

नच कर्तुरीश्वरस्यादृष्टिविरोधः। देवादिवददृश्यत्वशक्तियोगात्। लोकेऽपि पिशाचादीनां तादृशी शक्तिर्दृष्टा। किम्वीश्वरस्य।

अनुव्याख्यानम्

स्यापि जीवस्य किञ्चित् सामर्थ्ययोजनाम्। कार्येषु यः करोत्यद्धा नमस्तस्मै स्वयम्भुवे ॥९३॥ यदि भागेन कार्येषु जीवशक्तिं न योजयेत्। हरिस्तदा हि सर्वत्र कृत्स्नयत्नोंऽशिताऽपि वा ॥९४॥ अंशिनो हि पटाद्या ये भिन्नैरेव परस्परम्। अंशैरंशिन उच्यन्ते नैवमेव हि चेतनाः॥

---

१ "जीवकर्तृत्वपक्षः" २ "जीवकर्तृत्वपक्षे" इति प्र. पाठौ। ३ प्र. पाठेऽत्राधिकरणपूर्तिर्नास्ति। २७ तम-सूत्रपर्यन्तमेकमधिकरणम्। यद्यप्यत्राधिकरणपूर्तिर्न युक्तेति भाति। अनुव्याख्यानन्यायमालायां न्यायविवरणे चास्योत्तरसूत्रैः सहैकाधिकरणतया सिद्धान्तादिव्यपदेशात्। किन्तु हृषीकेशतीर्थीयादिषु स्फुटमधिकरणपूर्तिश्चिह्निता। तेन ज्ञायते—अत्राधिकरणपूर्तिरित्यपि भाष्यसम्मतं पक्षान्तरमिति। तद्यथा—ज्योतिरधिकरणं गायत्र्यधिकरणं च भिन्ने इति टीकाकृतामेकः पक्षः। अन्तर्भेदाधिकरणमेकमिति पद्मनाभतीर्थभट्टारकाणां त्रिविक्रमपण्डिताचार्याणां चेत्यपर इति। ४ "विज्ञाता सर्वेषाम्" ५ "यथा गोषु क्षीरं दृश्यमानमपि" इति प्र. पाठौ।

भाष्यम्

"न युक्तियोगाद् वाक्यानि निराकार्याण्यपि क्वचित्। विरोध एव वाक्यानां युक्तयो नतु युक्तयः" इति बृहत्संहितायाम् ॥*॥

॥*॥ इत्यष्टममधिकरणम्[1] ॥*॥

॥ कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥२७॥

अयं च दोषो जीवकर्तृत्वपक्षे। एकेनाङ्गुलिमात्रेण प्रवर्तमानोऽपि पूर्णप्रवृत्तिः स्यात्। नच तद् युज्यते। सामर्थ्यैकदेशदर्शनात्। नचैकदेशेन। निरवयवत्वात्।

"अथ यः स जीवः स नित्यो निरवयवो ज्ञाताऽज्ञाता सुखी दुःखी शरीरेन्द्रियस्थः" इति हि भाल्लवेयश्रुतिः[2]।

नचोपाधिकृतोंऽशः[3]। स एवांश उपहित इति द्वित्वापेक्षत्वात्। नचान्यत् कल्प्यम्। "यद्धि युक्त्या विरुद्धयेत तदीशकृतमेव हि" इति गत्यन्तरोक्तेः[4] ॥*॥

॥ श्रुतेस्तु शब्दमूलत्वात् ॥२८॥

नचेश्वरपक्षेऽयं विरोधः—

"योऽसौ विरुद्धोऽविरुद्धो मनुरमनुरवाग् वागिन्द्रोऽनिन्द्रः प्रवृत्तिरप्रवृत्तिः स परः परात्मा[5]" इति पैङ्ग्यादिश्रुतेरेव।

शब्दमूलत्वाच्च न युक्तिविरोधः—

"यद् वाक्योक्तं न तद् युक्तिर्विरोद्धुं शक्नुयात् क्वचित्। विरोधे वाक्ययोः क्वापि किञ्चित् साहाय्यकारणम्" इति पुरुषोत्तमतन्त्रे ॥*॥

॥ आत्मनि चैवं विचित्राश्च हि ॥२९॥

परमात्मनो विचित्राश्च शक्तयः सन्ति। नान्येषाम्।

"विचित्रशक्तिः पुरुषः पुराणो नचान्येषां शक्तयस्तादृशाः[6] स्युः। एको वशी सर्वभूतान्तरात्मा सर्वान् देवानेक एवानुविष्टः" इति श्वेताश्वतरश्रुतिः ॥*॥

अनुव्याख्यानम्

॥९५॥ अतोऽनंशिन इत्येव श्रुतिरेतेषु वर्तते। अप्यनेकस्वरूपेषु विशेषादेव केवलम् ॥९६॥ बहुस्वरूपताख्या तु तेष्वस्त्येव हि सांशता। बहुत्वेनाविनाभावाद् भिन्नता नियमाद् भवेत् ॥ ९७ ॥ यदि नैवं नियमकृद् भगवान् पुरुषोत्तमः। तस्य त्वशेषशक्तित्वाद्

---

१ प्र. पाठेऽत्राधिकरणपूर्तिर्नास्ति। सप्तविंशसूत्रात् परं सप्तमाधिकरणपूर्तिः पठ्यते। परन्तु प्राचीनकोशेष्वत्रैवाधिकरणपूर्तिः। अत्र आनन्दमालादिसंवादोऽप्यस्ति। तथाहि सङ्ग्रहभाष्यटीकायां त्रैविक्रमार्यदासवचनम्—"इतरव्यपशाङ्कितकरणादिदोषप्रसक्तिः,कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वेत्यधिकरणे"इति। २"इति भाल्लवेयश्रुतिः" ३ "उपाधिकृतांशः" इति प्र. पाठौ। ४ प्र. पाठेऽत्र सप्तमाधिकरणपूर्तिः। "श्रुतेस्तु" इत्यादिकं सूत्रपञ्चकमेकमधिकरणम्। ५ "परमात्मा" इति प्र. पाठः। ६ "तादृशाः स्युः" इति प्र.पाठः। तादृक्छन्दोऽयम्।

भाष्यम्

॥ स्वपक्षदोषाच्च ॥३॥

"ये दोषा इतरत्रापि ते गुणाः परमे मताः। न दोषः परमे कश्चिद् गुणा एव निरन्तराः" इति वचनाज्जीवपक्ष एव दोषो न परपक्षे। "अथ यः सदोषः साञ्जनः सजनिः स जीवो यः स निर्दोषो निष्कळः सगुणः परः पैरात्मा" इति काषायणश्रुतिः ॥*॥

॥ सर्वोपेता च तद्दर्शनात् ॥३१॥

"सर्वैर्युक्ता शक्तिभिर्देवता सा परेति यां प्राहुरजस्रशक्तिम्। नित्यानन्दा नित्यरूपाऽजरा च या शाश्वतात्मेति च यां वदन्ति" इति च चतुर्वेदशिखायाम्।

अतो न केवलं विचित्रशक्तिः। सर्वशक्तिरेव ॥*॥

॥ विकरणत्वान्नेति चेत् तदुक्तम् ॥३२॥

नच करणाभावादनुपपत्तिरिति युक्तम्।

"अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः। स वेत्ति वेद्यं नच तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम्", "न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इत्यादिश्रुतिभ्यः।

"सर्वोपेता च" इति सामान्यपरिहारेऽपि विशेषयुक्त्यर्थं पुनराशङ्का ॥*॥

॥*॥ इति नवममधिकरणम् ॥*॥

यत्प्रयोजनार्थं सृष्ट्यादिस्तदूनत्वाच्च पूर्णतेत्यत आह—

॥ न प्रयोजनवत्त्वात् ॥३३॥

"अथैष एव परम आनन्दः" इत्यादिना कृतकृत्यत्वान्न प्रयोजनाय सृष्टिः ॥*॥ किन्तु ?—

॥ लोकवत्तु लीलाकैवल्यम् ॥३४॥

यथा लोके मत्तस्य सुखोद्रेकादेव नृत्तगानादिलीला, न प्रयोजनापेक्षया, एवमेवेश्वरस्य।

अनुव्याख्यानम्

युज्यते सर्वमेव च ॥९८॥ विरोधः सर्ववैशिष्ट्ये यो द्वितीये निरस्यते। नारायणस्य त्वध्याये तदन्ये तत्रतत्रगाः ॥९९॥ सृष्टिसंहारवाक्यानां जीवरूपाभिधायिनाम्। अप्यन्योन्याविरोधस्तु द्वितीयाध्यायगोचरः ॥१००॥ मानमेयविशेषेण पुनरुक्तिर्न जायते॥*॥
सदा प्रवृत्तिरीशस्य स्वभावादेव केवलम् ॥१०१॥ अङ्गचेष्टा यथा पुंसः काश्चिदुद्देशवर्जिताः। देवस्यैष स्वभावोऽयमित्याह श्रुतिरञ्जसा॥१०२॥ क्रीडां प्रयोजनं कृत्वा सृष्टिः श्रुतिविरोधिनी। इति केवललीलैव निर्णीता प्रभुणा स्वयम् ॥१०३॥ आत्मप्रयोजनार्थाय स्पृहां श्रुतिरवारयत्।

---

१ "स जीवोऽथ यः" २ "निष्कलः सगुणः परः परमात्मा" ३ "इति चतुर्वेदशिखायाम्" ४ "किन्तु सर्वशक्तिरेव" इति प्र.पाठाः। ५ प्र. पाठेऽत्राष्टममधिकरणम्। ६ "तदूनत्वादपूर्णता" ७ "नतु प्रयोजनापेक्षया" इति प्र. पाठौ।

भाष्यम्

नारायणसंहितायां च—

"सृष्ट्यादिकं हरिर्नैव प्रयोजनमपेक्ष्य तु। कुरुते केवलानन्दाद् यथा मत्तस्य नर्तनम्। पूर्णानन्दस्य तस्येह प्रयोजनमतिः कुतः। मुक्ता अप्याप्तकामाः स्युः किमु तस्याखिलात्मनः" इति। "देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा" इति च श्रुतिः ॥*॥

॥*॥ इति दशममधिकरणम्[1] ॥*॥

सर्वकर्तृत्वे वैषम्यनैर्घृण्ये तस्येत्यतो वक्ति—

॥ वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथा हि दर्शयति ॥३५॥

कर्मापेक्षया फलदातृत्वान्न तस्य वैषम्यनैर्घृण्ये। "पुण्येन पुण्यं लोकं नयति पापेन पापम्" इति हि श्रुतिः ॥*॥

॥ न कर्माविभागादिति चेन्नानादित्वात् ॥३६॥

यदपेक्षयाऽसौ फलं ददाति न तत् कर्म। "एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष उ एवासाधु कर्म कारयति तं यमधो निनीषते" इति श्रुतेः कर्मणोऽपि तन्निमित्तत्वादिति चेत्, न। तस्यापि पूर्वं कर्म[2] कारणमित्यनादित्वात् कर्मणः। भविष्यत्पुराणे च—

"पुण्यपापादिकं विष्णुः कारयेत् पूर्वकर्मणा। अनादित्वात् कर्मणश्च न विरोधः कथञ्चन" इति ॥*॥

॥ उपपद्यते चाप्युपलभ्यते च ॥३७॥

नच कर्मापेक्षत्वेनेश्वरस्यास्वातन्त्र्यम्।

"द्रव्यं कर्म च कालश्च स्वभावो जीव एव च। यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया" इति कर्मादीनां[3] सत्त्वस्यापि तदपेक्षत्वात्[4]।

नच पुनर्वैषम्याद्यापातेन दोषः। तादृशवैषम्यादेरुपलभ्यत्वात्[5]—

"स कारयेत् पुण्यमथापि पापं न तावता दोषवानीशिताऽपि। ईशो यतो गुणदोषा-

अनुव्याख्यानम्

न प्रयोजनवत्त्वेनेत्यत आह जगद्गुरुः ॥१०४॥ इच्छामात्रं प्रभोः सृष्टिरिति सृष्टौ विनिश्चिताः। इति प्रशंसया कामश्रुतिभ्यश्चैव युक्तितः। महातात्पर्ययुक्तेश्च नेच्छामात्रं निषिद्ध्यते ॥१०५॥ मोक्षार्थाः श्रुतयो यस्मात् स च तस्य प्रसादतः। उन्निनीषतिवाक्याच्च लोकदृष्टानुसारतः ॥ ॥१०६॥ इच्छानिमित्तको यस्मात् तदभावे कुतः श्रुतिः। महातात्पर्यरहिता प्रमाणत्वं गमिष्यति ॥१०७॥ याथार्थ्यमेव मानत्वमपि वाक्यं प्रयोजकम्। मानत्वमेति तत्रापि यत् सम्पूर्णप्रयोजनम् ॥१०८॥*॥ वैषम्यं चैव नैर्घृण्यं वेदाप्रामाण्यकारणम्। नाङ्गीकार्यमतोऽन्यत्तु न वैषम्यादिनामकम् ॥१०९॥ यदधीना गुणाश्चैव दोषा अपि हि सर्वशः। गुणास्तस्य कथं

---

१ प्र. पाठेऽत्र नवममधिकरणम्। २ "पूर्वकर्म" ३ "इत्यादिना कर्मादीनाम्" ४ "तदधीनत्वात्" ५ "उपलभ्यमानत्वात्" इति प्र. पाठाः।

भाष्यम्

दिसत्त्वे स्वयं परोऽनादिरादिः प्रजानाम्" इति चतुर्वेदशिखायाम् ॥*॥
अवशिष्टैरुपसंहरति—

॥ सर्वधर्मोपपत्तेश्च ॥३८॥

"गुणाः श्रुताः सुविरुद्धाश्च देवे सन्त्यश्रुता अपि नैवात्र शङ्का। चिन्त्या अचिन्त्याश्च तथैव दोषाः श्रुताश्च नाश्चैर्हि तथा प्रतीताः" इति सर्वगुणोपपत्तिश्रुतेश्च ॥*॥

॥*॥ इत्येकादशमधिकरणम् ॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते

श्रीब्रह्मसूत्रभाष्ये

— द्वितीयाध्यायस्य प्रथमः पादः —

ॐ ॥ "इतरेषां चानुपलब्धेः" इति सामान्यनिराकरणं समयानां कृतम्। विशेषतो निराकरोत्यस्मिन् पादे। अचेतनप्रवृत्तिमतं प्रथमतो निराकरोति—

॥ रचनानुपपत्तेश्च नाऽनुमानम् ॥१॥

अचेतनस्य स्वतः प्रवृत्त्यनुपपत्तेर्नानुमानपरिकल्पितं प्रधानं जगत्कर्तृ। चशब्देन प्रमाणाभावं दर्शयति ॥*॥

अनुव्याख्यानम्

न स्युः स्युर्दोषाश्च कथं पुनः ॥११०॥ सर्वधर्मोपपत्तेस्तद् वाक्यैरपि हि तादृशैः। निर्दोषाशेषगुणको निर्णीतो भगवान् हरिः ॥१११॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते

श्रीब्रह्मसूत्रानुव्याख्याने

— द्वितीयाध्यायस्य प्रथमः पादः —

ॐ॥ स्मृतियुक्तिश्रुतिगुणयुक्तयो बहुयुक्तयः। एवं चतुर्विधा नैव विरुद्ध्यन्तेऽन्वयं प्रति ॥१॥
इति प्रथमपादेन निर्णीतेऽप्यभियोगतः। दर्शनानां प्रवृत्तत्वान्मन्द आशङ्कते पुनः ॥२॥
अनादिकालतो वृत्ताः समया हि प्रवाहतः। नचोच्छेदोऽस्ति कस्यापि समयस्येत्यतो विभुः॥
॥३॥ भ्रान्तिमूलत्वमेतेषां पृथग् दर्शयति स्फुटम्। तर्कैर्दृढतमैरेव वाक्यैश्चाऽऽगमवादिनाम् ॥४॥

---

१ प्र पाठेऽत्र दशमाधिकरणपूर्तिः। यद्यपि न्यायमालान्यायविवरणयोः "नियमः" इति पूर्वपक्षसिद्धान्तयुक्तिसूचनात् "सर्वधर्मोपपत्तेश्च" इति चरमसूत्रमधिकरणान्तरमिति भाति। तथाऽपि भाष्ये पक्षान्तराश्रयेण इदमेकमधिकरणमिति सूक्तम्। अत एव सहङ्कभाष्यटीकायामानन्दमालायामस्याश्चतुःसूत्र्या ऐकाधिकरण्यमुक्तं सङ्गच्छते। पक्षान्तराश्रयेणानुव्याख्यानन्यायविवरणयोः प्रवृत्तिरित्यविरोधः। २ "सर्वधर्मोपपत्तिश्रुतेश्च" इति प्र. पाठः।
३ "सामान्यतो निराकरणम्" इति प्र. पाठः।

भाष्यम्

॥ प्रवृत्तेश्च ॥२॥

चेतनस्य प्रवृत्ति[1]दर्शनाच्च ॥*॥

॥ पयोऽम्बुवच्चेत् तत्रापि ॥३॥

पयोऽम्बुवदचेतनस्यापि प्रवृत्तिर्युज्यत इति न युक्तम् ।

"एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः [2]स्यन्दन्ते", "एतेन ह वाव पयो मण्डं भवति" इत्यादि तत्रापीश्वरनिमित्तप्रवृत्तिश्रुतेः ॥*॥

न्यायविवरणम्

दौर्लभ्याच्छुद्धबुद्धीनां बाहुल्यादल्पवेदिनाम् । तामसत्वाच्च लोकस्य मिथ्याज्ञानप्रसक्तितः । विद्वेषात् परमे तत्त्वे तत्त्ववेदिषु चानिशम् ॥५॥ अनादिवासनायोगादसुराणां बहुत्वतः । दुराग्रहगृहीतत्वाद् वर्तन्ते समयाः सदा ॥६॥ तथाऽपि शुद्धबुद्धीनामीशानुग्रहयोगिनाम् । सुयुक्तयस्तमो हन्युरागमानुगताः सदा ॥७॥ इति विद्यापतिः सम्यक् समयानां निराकृतिम् । चकार निजभक्तानां बुद्धिशाणत्वसिद्धये ॥८॥*॥ चेतनाचेतनं तत्त्वद्वयमेव निरीश्वराः । आहुस्तत् पञ्चपञ्चत्वविभागस्थमचेतनम् । चेतनं तदसङ्ख्यातं भिन्नमन्यद् भिदोज्झितम् ॥९॥ अचेतनस्य कर्तृत्वं स्वातन्त्र्येण निगद्यते । परस्परविभेदश्च कार्याणामालयं भवेत् ॥१०॥ भोक्तृतां चेतनस्याऽहुः केचित् तामपि नापरे । स्वरूपचैतन्यबलात् स्वप्रकाशाच्च भोगिताम् ॥११॥ प्रकृतेश्च स्वरूपस्य विवेकाग्रहमेव तु । अभोगवादिनो भोगमाहुर्भेदग्रहात् तयोः ॥१२॥ भोगिनां मुक्तिरुद्दिष्टा स एवाभोगवादिनाम् । ईशस्यासङ्गहादेव न युक्तौ तावुभावपि ॥१३॥ चेतनेच्छानुसारेण यदा दृष्टः पटोद्भवः । एतादृशत्वमन्यस्य वस्तुत्वात् केन वार्यते ॥१४॥ नच काचित् प्रमोक्तार्थे श्रुतिरेव प्रमा हि नः । आप्तत्वमुक्तमार्गेण वक्तुर्नैवोपपद्यते॥१५॥अप्रामाण्यस्वतस्त्वस्य स्वीकारादपि मायिवत् । स्वोक्ताखिलनिषेधी स्यान्नच किञ्चित् प्रसिद्ध्यति ॥१६॥ इदं नाचेतनवशं वस्तुत्वात् प्रतिपन्नवत् । इत्येव प्रतिषिद्धस्य केन मूलानुमा भवेत् ॥१७॥ स्वतन्त्रवृत्ती रचना सा चैवाचेतने कुतः । अचेतनत्वं स्वातन्त्र्यमिति चाऽत्मप्रमाहतम् ॥१८॥स्वेच्छानुसारितामेव स्वातन्त्र्यं हि विदो विदुः । कुत इच्छाऽचेतनस्य सेच्छं चेत् किमचेतनम् ॥१९॥ इच्छाम्यहमिति ह्येव निजानुभवरोधतः ।

न्यायविवरणम्

ॐ ॥ उक्तविरोधिनस्तत्तत्समयसिद्धाः पूर्वपक्षन्यायाः । तद्विरोधिनोऽन्य इति प्रसिद्धा एव ॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते

श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे

द्वितीयाध्यायस्य द्वितीयः पादः

---

१ "स्वतः प्रवृत्तिदर्शनाच्च" इति प्र. पाठः । अत्र प्राचीनकोशेषु प्रथमसूत्रव्याख्याने "अचेतस्य स्वतः प्रवृत्त्यनुपपत्तेः" इति द्वितीयसूत्रभाष्ये च "चेतस्य प्रवृत्तिदर्शनाच्च" इत्युभयत्रापि नकारविरहितं पठ्यते । प्रमाद एव स्यादिति नात्राऽदृतम् । २ प्र.पाठेऽत्र "याश्च श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योऽन्या यां यां च दिशमनु" इत्यधिकम् ।

भाष्यम्

॥ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥४॥

"न ऋते त्वत् क्रियते किञ्चनाऽरे" इति तद्व्यतिरेकेण कस्यापि कर्मणोऽनवस्थितेरनपेक्षितमेवाचेतनवादिमतम् ॥*॥

॥*॥ इति प्रथममधिकरणम् ॥*॥

सेश्वरसाङ्ख्यमतं निराकरोति। यथा पृथिव्या एव पर्जन्यानुगृहीतं तृणादिकमुत्पद्यते, एवं प्रधानादीश्वरानुगृहीतं जगदित्यतो ब्रवीति—

॥ अन्यत्राभावाच्च न तृणादिवत् ॥५॥

"यच्च किञ्च जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा। अन्तर्बहिश्च तत् सर्वं[1] व्याप्य नारायणः स्थितः", "ब्रह्मण्येवेदमाविरासीद् ब्रह्मणि स्थितं ब्रह्मन् लयं[2]मभ्युपैति", "ब्रह्मैवाधस्ताद् ब्रह्मै[3]ोपरिष्टाद् ब्रह्म मध्यतो ब्रह्म सर्वतो ब्रह्मैवेदं सर्वम्" इत्यादिश्रुतिभ्योऽन्यत्र जगतोऽभावात् तृणादीनां पर्जन्यवन्नानुग्राहकत्वमात्रमीश्वरस्य।

अनुव्याख्यानम्

अचेतनेच्छाऽपगता यदि भेदाग्रहोऽत्र च ॥२०॥ कथं न स घटस्य स्यान्मनो म इति भेदतः। मनसोऽपि गृहीतत्वादुभयात्मकता यतः ॥२१॥ कामस्य तु मनः कामः प्रियाप्रियविभेदतः। द्वैविध्यं दृश्यते चास्य तस्माद् भेदाग्रहः कुतः ॥२२॥ रचनानुपपत्तेस्तन्न सर्वज्ञानुमागतम्। अचेतनं जगत्कर्तृ पयोऽम्ब्वादि च नोपमा ॥२३॥ एतत्प्रशास्तिवचनाच्चेतनाचेतनस्य च। द्वैविध्येऽपितु कामादेः कुतः स्वामित्वमात्मनः ॥२४॥ साक्षादनुभवारूढं शक्यतेऽपोदितुं क्वचित्। इच्छास्वामित्वमेवोक्तमिच्छावत्त्वं नचापरम्॥२५॥ किञ्चित् तद्वशगत्वेऽपि स्वामित्वं लोकवद् भवेत्। सर्वात्मतन्त्रकामादेः किमुतैव परेशितुः ॥२६॥ नचानुभवगं कामस्वामित्वं वेदवागपि। शक्ताऽपवदितुं तस्मात् सा तदन्याभिधायिनी ॥२७॥ मोक्षकामो भवेदन्यो यदि मुक्ताद् भविष्यतः। मोक्षकामस्य किं तेन स्वनाशार्थं च को यतेत् ॥२८॥ कर्तृत्वं यस्य तस्यैव भोक्तृत्वमुपलभ्यते। विभागे च तयोर्मानं नैव किञ्चित् क्वचिद् भवेत् ॥२९॥ सर्वमानविरोधैकदुर्दीक्षादीक्षितस्त्वयम्। मायावाद्युपमां यायात् तच्चशब्दान्निराकृतः ॥३०॥*॥ साङ्ख्यस्तु सेश्वरो ब्रूते क्षेत्रानुग्रहशक्तिमान्। अस्तीश्वरः स्वयम्भातः क्लेशकर्मादिवर्जितः ॥ ॥३१॥ क्षेत्रशक्तिमती सैव प्रकृतिर्बीजशक्तिमान्। जीवः पर्जन्यवद् दैवशक्तिमानीश्वरः स्मृतः ॥३२॥ पृथिवीवत् प्रधानं तज्जीवः सन्निधिमात्रतः। बीजावपनकर्तैवेत्यत्र प्राह प्रभुः स्वयं[4]म् ॥३३॥ अन्यत्र काऽपि शक्तिर्न स्वातन्त्र्येणेश एव हि। शक्तीस्ताः प्रेरयत्यञ्जस्तदधीनाश्च सर्वदा ॥३४॥ सत्ताप्रधानपुरुषशक्तीनां च प्रतीतयः। प्रवृत्तयश्च ताः सर्वा नित्यं नित्यात्मना यतः ॥३५॥ तथाऽनित्यतयाऽनित्यं नित्यशक्त्या स्वयेश्वरः। नियामयति नित्यं

---

१ "यच्च किञ्चिज्जगत् सर्वम्" २ "ब्रह्मणि लयमभ्युपैति" ३ "ब्रह्मैवोपरिष्टात्" ४ "बीजावपनकर्तैवेत्यत्र प्राह स्वयं प्रभुः" इति प्र.पाठाः।

भाष्यम्

"स एव भूयो निजवीर्यचोदितां स्वजीवमायां प्रकृतिं सिसृक्षतीम्। अनामरूपात्मनि रूपनामनी विधित्समानोऽनुससार शास्तिकृत्" इति भागवते। "द्रव्यं कर्म च"[1] इत्यादि च।

चशब्देन प्रकृतिसत्तादिप्रदत्वं चाङ्गीकृतम् ॥*॥

॥*॥ इति द्वितीयमधिकरणम् ॥*॥

लोकायतिकपक्षं निराकरोति—

॥ अभ्युपगमेऽप्यर्थाभावात् ॥६॥

यस्य धर्माधर्मौ न स्तः तत्सिद्धान्ते किं प्रयोजनम्? अतः स्वव्याहतेरेवोपेक्ष्यः ॥*॥

॥*॥ इति तृतीयमधिकरणम् ॥*॥

पुरुषोपसर्जनप्रकृतिकर्तृवादमपाकरोति[2]—

॥ पुरुषाश्मवदिति चेत् तथाऽपि ॥७॥

यथा चेतनसम्बन्धादचेतनमेव शरीरमश्मादिकमादाय गच्छति। एवमचेतनाऽपि प्रकृतिः पुरुषसम्बन्धात् प्रवर्तत इति चेत्, न। "न ऋते त्वत् क्रियते" इति तत्रापि तथात्वे दृष्टान्ताभावात् ॥*॥

॥ अङ्गित्वानुपपत्तेः ॥८॥

शरीरप्रवृत्तौ पुरुषस्याङ्गत्वात्— "अङ्गमङ्गी समादाय यथा कार्यं करोत्यसौ" इत्याद्यङ्गित्वव्यवहारोऽनुपपन्नः ॥*॥

॥*॥ इति चतुर्थमधिकरणम् ॥*॥

अनुव्याख्यानम्

च न ऋते त्वदिति श्रुतेः ॥३६॥ स्वभावजीवकर्माणि द्रव्यं कालः श्रुतिः क्रियाः। यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षया ॥३७॥ इति श्रुतेर्न सत्ताद्या अपि नारायणं विना। तत्पतञ्जलिविन्ध्यादिमतं न पुरुषार्थदम् ॥३८॥*॥ चार्वाकैरुच्यते मानमक्षजं नापरं क्वचित्। देह आत्मा पुमर्थश्च कामार्थाभ्यां विना नहि ॥३९॥ यद्येवं दर्शनेनास्य कोऽर्थः प्रत्यक्षगोचरः। लब्धस्तेनैव हि नरैः शास्त्रात् किं मोहनं विना ॥४०॥ स्वपरार्थविहीनत्वात् स्वमतेनैव निष्फलम्। किमित्युन्मत्तवच्छास्त्रं वृथा प्रलपति स्वयम् ॥४१॥ देहादन्योऽनुभवत आत्मा भाति शरीरिणाम्। मम देह इति व्यक्तं ममार्थ इतिवत् सदा ॥४२॥ प्रत्यक्षस्यैव मानत्वमिति केनावसीयते। यदि तत्साधकं वेदप्रामाण्ये न कथं भवेत् ॥४३॥ नचान्यामानता कापि प्रमाणेनावसीयते। स्वमतेनार्थरहित उपेक्ष्यः पक्ष ईदृशः ॥४४॥*॥ सन्निधानाच्चेतनस्य वर्तते यद्यचेतनम्। तथाऽप्यबुद्धिपूर्वत्वादुक्तदोषः समो भवेत् ॥४५॥ अङ्गित्वं पुरुषस्यैव सर्वैरप्यनुभूयते[3]। तदङ्गत्वोक्तितश्चैव स्यात् सर्वस्यापलापकः। किमु सर्वेश्वरस्यास्य ह्यपला-

---

१ "द्रव्यं कर्म च कालश्च" २ "कर्तृत्ववादमपाकरोति" ३ "सर्वैरेवानुभूयते" इति प्र. पाठाः।

भाष्यम्

प्रकृत्युपसर्जनपुरुषकर्तृवादमपाकरोति[1]—

॥ अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् ॥९॥

शरीरसम्बन्धात् पुरुषः प्रवर्तत इत्यङ्गीकारेऽपि स्वतस्तस्यासामर्थ्याच्छरीरसम्बन्ध एवायुक्तः ॥*॥

॥ विप्रतिषेधाच्चासमञ्जसम् ॥१०॥

सकलश्रुतिस्मृतियुक्तिविरुद्धत्वाच्चानीश्वरं मतमसमञ्जसम्[2]।

"श्रुतयः स्मृतयश्चैव युक्तयश्चेश्वरं परम्। वदन्ति तद्विरुद्धं यो वदेत् तस्मान्नचाधमः"

इति च पाद्मे[3] ॥*॥

॥*॥ इति पञ्चममधिकरणम् ॥*॥

परमाण्वारम्भवादमपाकरोति—

॥ महद्दीर्घवद् वा ह्रस्वपरिमण्डलाभ्याम् ॥११॥

महत्त्वाद् दीर्घत्वाच्च यथा कार्यमुत्पद्यते, एवं ह्रस्वत्वात् पारिमाण्डल्याच्चोत्पद्येत। वाशब्दादन्यथैतयोरपि न स्यात्। विशेषकारणाभावात् ॥*॥

अनुव्याख्यानम्

पाद् यतोऽखिलम् ॥४६॥*॥ अङ्गित्वं यदि तस्यैव स्वातन्त्र्यं चेन्नचाखिलम्। तत्प्रेरणेऽप्यशक्तत्वात् स्वतन्त्रोऽन्यो ह्यपेक्षितः ॥४७॥ नच स्वातन्त्र्यमस्यैव प्रत्यक्षादिविरोधतः। हिताकृत्यादिदोषाच्च[4] भद्रं नानीश्वरं मतम् ॥४८॥ संसारिणोऽन्यं सर्वेशं सर्वशक्तिमनौपमम्। चेतनाचेतनस्यास्य सत्त्वादेस्तदधीनताम्। नाङ्गीकुर्वन्ति ये तेषां सर्वेषां च समा इमे ॥४९॥ तस्माच्छ्रुतिप्रमाणेन युक्तिभिश्च परो हरिः। अङ्गीकार्यतमो नित्यः सर्वैरपि सुनिश्चितम्॥५०॥*॥ नित्यज्ञानप्रयत्नेच्छं सङ्ख्याद्यैरपि पञ्चभिः। युक्तमीशं वदन्त्यन्ये[5] तदिच्छादृष्टचोदिताः। परमाणवश्चतुर्वर्गाः संयुज्यन्ते द्विशोऽखिलाः ॥५१॥ परमाणुद्वयेनैव द्व्यणुकं नाम जायते। द्व्यणुकत्रयेण त्र्यणुकं तैश्चतुर्भिस्तदात्मकम् ॥५२॥ ततस्त्वनियमेनैव खण्डावयविनां भवः। ततश्चानियमेनैव सर्वावयविसम्भवः ॥५३॥ कारणं समवाय्याख्यं परमाण्वादि तत्र हि[6]। ईशेच्छादृष्टकालास्तु निमित्तं कारणं मतम् ॥५४॥ सामान्यान्त्यविशेषौ च समवायश्च तत्त्रयम्। नित्यं क्रिया अनित्यास्तु[7] गुणद्रव्ये द्विरूपके ॥५५॥ कार्ये गुणक्रियाणां तु समवाय्यन्यकारणम्। कारणस्था गुणाद्यास्तु संयोगो द्रव्यकारणम्॥ ॥५६॥ एवं स्थितेऽपि सिद्धान्ते विशेषस्तत्र कल्पितः। द्व्यणुके परमाणौ च ह्रस्वत्वं परिमण्डलम् ॥५७॥ न कारणं कार्यगुणे वैरूप्यं तत्र कारणम्। इत्याहुस्तानथोवाच विद्याधीशः स्वयं प्रभुः॥५८॥महत्त्वं चैव दीर्घत्वं त्र्यणुकाद्येषु कल्पितम्। तस्माच्च सदृशं कार्यं तत्कार्येषूपजायते ॥ ॥५९॥ यथा तथैव ह्रस्वत्वात् पारिमाण्डल्यतोऽपि हि। जायेत सदृशं कार्ये परिमाणं समत्वतः ॥६०॥ न चेन्महत्त्वतश्चैव दीर्घत्वादपि नो भवेत्। सदृशस्य हि कार्यस्य नैव योगः

---

१ "कर्तृत्ववादमपाकरोति" २ "अनीश्वरमतमसमञ्जसम्" ३ इति पाद्मे" ४"हिताक्रियादिदोषाच्च"
५ "वदन्तोऽन्ये" ६"परमाण्वादिरत्र हि" ७"अनित्याश्च" इति प्र. पाठाः।

भाष्यम्

## ॥ उभयथाऽपि न कर्मातस्तदभावः ॥१२॥

ईश्वरेच्छाया नित्यत्वे तद्भावेऽपि परमाणुकर्माभावान्नेदानीमपि स्यात्[1]। अनित्यत्वे तत्कारणाभावात्। अतः परमाणुचेष्टाभावात् तत्कार्याभावः। वैदिकेश्वरस्य तु वेदेनैव सर्वशक्तित्वोक्तेः सर्वमुपपद्यते। स्वत एव काले विभेदाङ्गीकृतेश्च[2] ॥*॥

अनुव्याख्यानम्

कथञ्चन ॥६१॥ अप्रत्यक्षत्वमेवं[3] स्याद् यतः कार्येष्वणुत्वतः। इति चेन्न महत्त्वं च परमाणावणावपि। कथं त्र्यणुकपूर्वेषु[4] नाणुत्वमपि कथ्यते ॥६२॥ प्रत्यक्षत्वतदन्यत्वे पुरुषापेक्षयाऽखिले। अणुत्वं च महत्त्वं च यतो वस्त्वन्यपेक्षया ॥६३॥ तारतम्यस्थिता यस्मात् पदार्थाः सर्व एव च। यथा महत्त्वविश्रान्तिस्तथाऽणुत्वस्य चेष्यते॥६४॥परिमाणत्वतश्चेन्न महत्त्वस्यापि विश्रमः। दृश्यतेऽनन्त इत्येव तथाऽनन्त्यमणावपि ॥६५॥ न महत्तत्त्वगुणत एतावानिति हीश्वरः। परिच्छिन्नस्तथाऽणोश्च नैतावद्भागता क्वचित् ॥६६॥ विश्रान्तो यद्यनन्तांशः कश्चिदस्तीति गम्यते। नावसाययितुं शक्यो विरोधादेव केवलम् ॥६७॥ केवलं साक्षिमानेन कालो देशोऽपि नान्तवान्। अपर्यवसितिश्चाणोर्दृश्यते साक्षिणा द्वयोः ॥६८॥ यदि नो साक्षिगम्यं तन्महत्त्वं केन गम्यते। विश्रान्तिस्तारतम्येन दृश्यते ह्यनुमानतः ॥६९॥ यद्यागमादनन्तं तन्महत्त्वमवगम्यते। अनन्तमेव चाणुत्वं कुतो नैवावसीयते॥७०॥ महत्त्वाणुत्वयोर्नैव विश्रान्तिरुपलभ्यते। अन्यदेव ह्यनन्तत्वं महत्त्वाणुत्वयोः समम् ॥७१॥ बहुत्वाल्पत्वयोर्यद्वत् सङ्ख्यायामुपलभ्यते। आनन्त्यमेकभागानां तावत्त्वं ह्येव गण्यते ॥७२॥ अणीयांश्च महीयांश्च भगवानागमोदितः। आनन्त्यवाचकः शब्दो द्विधाऽनन्त्येऽपि मानताम् ॥७३॥ याति नैव गुणाल्पत्वं कालाल्पत्वं च मानगम्। सर्वकालगतस्याल्पकालेऽपि स्यादवस्थितिः ॥७४॥ महागुणस्य चाल्पोऽपि गुणः स्यादिति चेद् भवेत्। तावत्त्वमेव नैव स्याद् देशेऽप्येतन्न नो मतम् ॥७५॥ महतोऽल्पत्वमपि हि व्योमवत् प्राह वेदवित्। यद्यल्पदेशसंस्थानं न सर्वत्रापि नो भवेत् ॥७६॥ स्थितस्य ह्यल्पदेशेषु सर्वगत्वं भवेद् ध्रुवम्। एकत्राप्यनवस्थस्य कुत एवाखिलस्थता ॥७७॥ शून्यत्वमेव तस्य स्याद् यस्यैकत्रापि न स्थितिः। अतो नाणुत्वविश्रान्तिर्न महत्त्वस्य च क्वचित् ॥ ॥७८॥ उभयानन्त्ययुक् तस्माद् यदि मुख्यमहद्[5] भवेत्। तच्च ब्रह्म परं साक्षात् सर्वानन्त्ययुतं सदा ॥७९॥ यदि साक्षी स्वयम्भातो न मानं केन गम्यते। अक्षजादेश्च मानत्वमनवस्थाऽथवा[6] भवेत्॥८०॥ अतः सर्वपदार्थानां भागाः सन्त्येव सर्वदा। सर्वदिक्ष्वपि सम्बन्धादविभागः पराणुता ॥८१॥ तत्संयोगादनियतात् पदार्थानां जनिर्भवेत्। द्वयोरेव तु संयोग इति केनावसीयते ॥८२॥ कारणस्य गुणास्तेन भवेयुः कार्यगा अपि। तारतम्येन सर्वेऽपि महान्तश्चाणवो यतः ॥८३॥ नच तत्प्रोक्तसृष्टौ तु मानं केवलकल्पना। कथं साक्षिमितस्यास्य शक्नुयाद् वारणे क्वचित् ॥८४॥ यदि साक्षिमितं नैतन्नानुमा तत्र वर्तते। पक्षीकर्तुमशक्य-

---

१ "नेदानीमपि तत् स्यात्" २ "विशेषाङ्गीकृतेश्च" ३ "अप्रत्यक्षत्वमेव" ४ "द्व्यणुकपूर्वेषु" ५ "मुख्यं महत्" ६ "अनवस्थाऽन्यथा" इति प्र. पाठाः।

भाष्यम्

॥ समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥१३॥

कार्यकारणादीनां समवायसम्बन्धाङ्गीकारात् तस्य च भिन्नत्वसाम्यात् समवायापेक्षयाऽनवस्थितिः। नच तत्प्रमाणम्। प्रथमसम्बन्धासिद्ध्यैव च तदसिद्धिः। स्वनिर्वाहकत्वे समवाय एव न स्यात् ॥*॥

अनुव्याख्यानम्

त्वात् कुत एवानुमा भवेत् ॥८५॥ यत्र नास्ति पदन्यासः कस्तं विषयमाप्नुयात्। देशान्तरादिशब्दाश्च शशशृङ्गादिशब्दवत् ॥८६॥ सदृशं च सजातीयं नास्मत्पक्षे किमेव हि। येनैव च प्रकारेणात्यसिद्धमनुमीयते। तेनैव शशशृङ्गादेः शक्यमस्तित्वकल्पनम्॥८७॥ प्रत्यक्षमागमो वाऽपि भवेद् यत्र नियामकः। सैव व्याप्तिर्भवेन्मानं नान्या सन्दिग्धमूलतः ॥८८॥ सहदर्शनमात्रेण न व्याप्तिरवसीयते। यदैवाव्यतिरेकस्य[२] ह्यक्षजं वाऽगमो भवेत्। तन्निर्धारितयुक्तिर्वा व्याप्तिः सैवापरा नहि ॥८९॥ अन्यथा सप्तमरसभावोऽप्यनुमयाऽऽपतेत्। अनिष्टानि च सर्वाणि ह्यनुमा कामचारिणी ॥९०॥ कार्यकाणयोश्चैव गुणादेः पञ्चकस्य च। भिन्नस्यैव तु सम्बन्धः समवायोऽन्य ईर्यते ॥९१॥ भिन्नत्वसाम्यतस्तस्य ताभ्यां योगो भवेद् ध्रुवम्। स स्वनिर्वाहकश्चेत् स्याद् द्रव्यमेव तथा न किम् ॥९२॥ विशेषस्तद्गतत्वादिर्यद्यभिन्नेऽवसीयते। गुणक्रियादिरूपस्य निषेधः केन हेतुना॥९३॥ द्रव्यमेव ततोऽनन्तविशेषात्मतया सदा। नानाव्यवहृतेर्हेतुरनन्तत्वं विशेषतः ॥९४॥ विशेषश्च विशेषी सः स्वेनैव[३] समवायवत्। कल्पनागुरुतादोषात् पदार्थान्तरता नहि ॥९५॥ कल्पयित्वा षट् पदार्थान् साभावानपि केवलम्। एकस्मिन् स विशेषश्चेत् किं पूर्वं तस्य विस्मृतिः॥९६॥ येन प्रत्यक्षसिद्धेन व्यवहारोऽखिलो भवेत्। भावाभावविभागेन यं विना न कथञ्चन। एतादृशे विशेषेऽस्मिन् को द्वेषो वादिनां भवेत् ॥९७॥ अभेदेन प्रतीतिश्च कार्यकारणपूर्वके। अभावान्ते पदार्थेऽस्मिन् सविशेषाऽवसीयते ॥९८॥ सामान्यादिपदार्थेषु तन्निष्ठत्वादयोऽखिलाः। कथं धर्मा निवार्यन्ते वस्त्वैक्येऽपि हि वादिभिः ॥९९॥ कार्यस्य तत्तन्निष्ठत्वं गुणादेर्व्यापितादिकः। कथं विशेषो नैवास्ति स च धर्मोऽपरो यदि ॥१००॥ षट्पदार्थातिरेकः स्यात् पदार्थानियमेऽपि हि। धर्मस्य धर्मसन्तानादनवस्थाकरो[४] भवेत् ॥१०१॥ सामान्यस्यापि सामान्यं गुणस्यापि गुणो ह्यतः। नाङ्गीकृतः स च यदि नानवस्था क्वचिद् भवेत् ॥१०२॥ अस्मत्पक्षे गुणाद्याश्च तद्वन्तो हि विशेषतः। अनन्यत्वान्नानवस्था भेदो नाशे भवेत् तथा॥१०३॥ विशेषमेव संश्रित्य विशेषो बलवान् यतः। दृष्टिप्रमाणतश्चैव विरोधो दर्शने कथम् ॥१०४॥ विरोधो ह्यविरोधश्च यतो दर्शनमानगौ[५]। ततो दृष्टे विरोधस्तु सद्भिरापाद्यते कथम् ॥१०५॥ अभिन्नो भगवान् स्वेन तदन्येन विभेदवान्। नित्या धर्मास्तदीयास्तु सर्वेऽस्मान्नैव भेदिनः ॥१०६॥ सामस्त्योच्छे-

---

१ "समवायान्तरापेक्षायाम्" २ "यदैवाव्यतिरेकेऽस्य" इति प्र. पाठौ। ३ प्राचीनकोशेषु "सस्स्वेनैव" इति पठ्यते। बहुत्रैवंविधरूपदर्शनान्नेदमाकस्मिकं प्रामादिकं वा। किन्तु ? व्याकरणान्तरादवसीयेत। ४ "अनवस्थाखनिः" ५ "दर्शनमानकौ" इति प्र. पाठौ।

## ॥ नित्यमेव च भावात् ॥१४॥

नित्यत्वाच्च परमाणूनां नित्यमेव कार्यं [1]स्यात् । अन्यथा न कदाचित् ॥*॥

अनुव्याख्यानम्

दिनोऽन्यत्र धर्मा उभयरूप[2]काः। भावे त एव चोच्छेदात् तदन्ये च समस्तशः॥१०७॥ अंशांशिनोरभेदेन त्वंशसंयोग एव हि। अंशिनो नानवस्थाऽतो यद्यप्यंशेष्वविश्रमः॥१०८॥ एकस्मिन् जात एवान्यः संयोगो जायते यदि। अनवस्था तदैव स्यात् संयोगैक्ये भवेत् क्व सा॥१०९॥ अंशे संयोगदृष्टेश्च दृष्टे का साऽनवस्थितिः। यद्यंशगो न संयोगः कार्येषु प्रथिमा कथम् ॥ ॥११०॥ परमाणोरणोर्नास्ति महत्त्वेत्यद्भुतं वचः। अणूनां प्रथिमापेक्षां विनैव त्र्यणुकेऽपि सः। परमाणोर्महत्त्वं च विनेत्येतद् वचः कथम्॥१११॥ अंशिनोंऽशैरभेदोऽयमंशेन तु भिदाभिदा। सर्वप्रत्यक्षविषयः कथमेव ह्यपोह्यते॥११२॥ संयोगश्च विभागश्च भेदश्चैव पृथक् पृथक्। अन्योन्यप्रतियोगेन ह्युभयोरपि दृश्यते॥११३॥ भिन्ना इति तु भेदानां समुदायो हि दृश्यते। यथैव च पदार्थानामनयोर्भेद इत्यपि॥११४॥ इतोऽमुष्यामुतोऽप्यस्[3]य भेदो दृष्टो द्विधर्मिकः। तत्रैकवचनं यत्तद् विप्राणां भोजनं यथा॥११५॥ नरत्वादिकमप्येवं तत्तद्धर्मतयेयते। न सर्वधर्म एकोऽस्ति समुदायस्तु भिन्नगः॥११६॥ एतादृशं च सादृश्यं पदार्थेषु पृथक् पृथक्। एकस्मिन् स विनष्टेऽपि यतोऽन्यत्रैव दृश्यते॥११७॥ कुतो भसत्वमातस्य नरत्वं पुनरिष्यते। एकत्वे नास्ति मानं च श्रुतिरप्याह सादरम्॥११८॥ भिन्नाश्च भिन्नधर्माश्च पदार्था अखिला [4]अपि। स्वैः स्वैर्धर्मैरभिन्नाश्च स्वरूपैरपि सर्वशः॥११९॥ अनिवृत्तविनाशास्तु धर्मा उभयरूपकाः। न केनचिदभिन्नोऽतो भगवान् स्वगुणैर्विना॥१२०॥ इति व्युत्पत्तिरपि हि सादृश्येनैव गम्यते। सर्वेषु युगपच्छब्दः सदृशेषु प्रवर्तते॥१२१॥ तथाऽपि प्रातितस्त्वेकवचनाच्च विशेषतः। अभीष्टावगतिश्च स्याच्छक्तिः सादृश्यगा यतः॥१२२॥ तादृशोऽयं च तच्छब्द इति ज्ञापयति स्फुटम्। जातितश्चेत् कथं तासु तत्र चेदनवस्थितिः॥ ॥१२३॥ तथैव व्यक्तिविज्ञानं व्यक्तित्वाभावदूषितम्। यदि तच्चास्ति तस्यापि विशेषेष्वनवस्थितिः॥१२४॥ कथं स्वरूपत्वमपि ज्ञायतेऽनुगतं यदि। एकव्युत्पत्तिपर्यन्तमनवस्थादिदूषितम्। कल्पनागौरवात् तेन युक्ता नानुगकल्पना॥१२५॥ औपाधिकविशिष्टाद्यमपि तद्वस्तु किं ततः। अन्यत् तदेव चेदग्निमत्त्वं किं तत्र भण्यते॥१२६॥ अग्निसंयोगमात्रं चेद् भवेत् तत् सिद्धसाधनम्। भूधरस्याग्निसंयोगो यदि षष्ठ्यर्थ एव कः॥१२७॥ समवायो यदि ह्यस्य चैकत्वात् सिद्धसाधनम्। यद्यस्यौपाधिको भेदः कुत एकत्वमिष्यते॥१२८॥ नानिर्वाच्यं हि तेनेष्टमत औपाधिकान्ययोः। सत्यत्वात् को विशेषः स्यान्मायावाद्यन्यथा भवेत्॥१२९॥ उपाधिजन्यं तद्रम्यमिति वौपाधि[5]कं भवेत्। उभयत्राप्यनन्ताः स्युः समवाया इतस्ततः।

---

१ "नित्यत्वाच्च परमाणूनां समवायस्य च, तस्यैव जनित्वाङ्गीकारान्नित्यमेव कार्यं स्यात्" २ "उभयरूपिणः" ३ "इतोऽमुष्यामुतोऽमुष्य" ४ "निखिला अपि" ५ चौपाधिकम्" इति प्र.पाठाः।

अनुव्याख्यानम्

भिन्नत्वं चैव तेष्वस्ति को विशेष उपाधिगे॥१३०॥अविद्यमान एवान्यः समवायोऽधिगम्यते। उपाधिना तद्गमकमनुमानं न मा भवेत्॥ १३१ ॥ एवमेवासतः सत्तासमवायो जनिर्मता। तत्रापि ह्युक्तदोषाणां नैव किञ्चिन्निवारकम्॥१३२॥ अस्मत्पक्षे विशेषस्य सर्वत्राङ्गीकृतत्वतः। नास्ति दोषः क्वचिद् भावो ह्यभावश्च स एव हि॥१३३॥ अभावस्य च धर्माः स्युर्भावास्तेषां च तेऽखिलाः। प्रत्यक्षमानतः सर्वमेतन्नो वारणक्षमम्। सर्वे भावा अभावाश्च पदार्थास्तेन सर्वदा॥१३४॥ तथाऽपि प्रथमं बुद्धेर्यो निषेधस्य गोचरः। सोऽभावो विधिबुद्धेस्तु गोचरः प्रथमं परः॥१३५॥ तस्मात् प्रध्वस्तभेदादि सदित्येवावगम्यते। अस्त्यभावोऽस्ति च ध्वंसो देहाभावश्च भस्मता॥१३६॥ इत्यादि युज्यते सर्वं प्रत्यक्षादिप्रमाणतः। अन्योन्याभावभेदौ च पृथक्त्वं च पृथक् पृथक्॥१३७॥ यत् कल्पयन्ति तच्चैव कल्पनागौरवाद् गतम्। पर्यायत्वेन ते शब्दा ज्ञायन्ते सर्वे एव हि॥१३८॥ भेदस्य तु स्वरूपत्वे ये वदन्ति च शून्यताम्। अद्भुतास्ते यतोऽन्यस्य प्रतियोगित्वमिष्यते॥१३९॥ प्रतियोगिनो हि भेदोऽयं नतु स्वस्मात् कथञ्चन। विभागेनाल्पतैत्र स्यात् कुत एव च शून्यता[1]॥१४०॥ न शून्यानां हि संयोगाद् भावो वस्तुन इष्यते। विदारणार्थो धातुश्च विभागगुणवाचकः॥१४१॥ अविदारणेऽपि ह्यास्यस्य भिन्नावोष्ठौ तु तस्य च। अत उन्मत्तवाक्यत्वान्मायावादोऽभ्युपेक्षितः[2]॥१४२॥ नचामन्दसदानन्दस्यन्यनन्तगुणार्णवः। ईश्वरोऽष्टगुणत्वेन प्रमेयोऽप्रमितत्वतः॥१४३॥ मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे। अनन्तगुणमाहात्म्यशक्तिज्ञानमहार्णवः॥१४४॥ नारायणः परोऽशेषचेतनेभ्यः परं पदम्। इत्यादिवेदतद्वाक्यैरनन्तैश्चावसीयते॥१४५॥ अनन्तगुणता विष्णोः कथमेव ह्यपोद्यते। यद्यनन्तविशेषाश्च तज्ज्ञानादेर्निवारिताः॥१४६॥ कथं तत्तद्विषयता सार्वज्ञ्यार्थं विधीयते। औपाधिकविशेषस्तु पूर्वमेव निराकृतः॥१४७॥ स्वप्रकाशत्वमपि तु यैर्ज्ञानस्य निवारितम्। कथं सर्वज्ञता तस्य स्वज्ञानाधिगमं विना॥१४८॥ ज्ञानं विश्वाधिगं त्वेकं तज्ज्ञानविषयं परम्। इति ज्ञानद्वयेनैव सर्ववित् परमेश्वरः॥१४८॥ इति चेदेष एवार्थस्तज्ज्ञानावसितो यदि। स्वप्रकाशत्वमेव स्याज्ज्ञानं ह्येतद् विशेषणम्॥१४९॥ ज्ञानान्तरेण चेदत्र भवेदेवानवस्थितिः। स्वप्रकाशत्वमेतस्माद् दुर्निवार्यं[3] समापतेत्॥१५०॥ सुखवान् दुःखवांश्च स्यादिति व्याप्तिश्च नो भवेत्। निर्दुःखत्वं महानन्दः श्रुत्यैवेशस्य भण्यते॥१५१॥ योऽशनायापिपासे च शोकादींश्चातिवर्तते। आनन्दं ब्रह्मणो विद्वान् विपाप्मेत्यादिका च सा॥१५२॥ ईश्वरस्य तथेष्टत्वं दुःखित्वोपाधिरित्यपि। उक्ते किमुत्तरं ब्रूयाच्छ्रुत्यनादरतत्परः॥१५३॥ नचाऽत्मदुःखितेच्छा स्यादत एतन्निवार्यते। सहदर्शनमात्रेण श्रुतीनामपलापकः॥१५४॥ यज्ञादेरपि पापस्य हेतुत्वं हिंसया श्रुतेः। नानुमाति कथं तत्र यद्युपाधिर्निषिद्धता॥१५५॥ अदुःखित्वेन चानुक्तिः कथं नोपाधितां व्रजेत्। अदुःखमितरत् सर्वं जीवा एव तु दुःखिनः। तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तते॥१५६॥

---

१ "कुत एव तु शून्यता" २ "मायावादो ह्युपेक्षितः" ३ "दुर्निवारम्" इति प्र.पाठाः।

भाष्यम्

॥ रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥१५॥

रूपादिमत्त्वाच्च परमाणूनामनित्यत्वम्। तथा दृष्टत्वाल्लोके ॥*॥

॥ उभयथा च दोषात् ॥१६॥

नित्यत्वे परमाणूनां तद्वत् सर्वनित्यत्वं स्यात्। विशेषप्रमाणाभावात्। अनित्यत्वे कारणाभावात् तदुत्पत्त्यभावः ॥*॥

॥ अपरिग्रहाच्चात्यन्तमनपेक्षा ॥१७॥

श्रुतिस्मृत्यपरिगृहीतत्वाच्चातिशयेनानपेक्ष्यता[1]।

"आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकाम्[2]" इति च मोक्षधर्मे[3] ॥*॥

॥*॥ इति षष्ठमधिकरणम् ॥*॥

परमाणुपुञ्जवादिमतं निराकरोति—

॥ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥१८॥

अनुव्याख्यानम्

इति श्रुतिर्हि परमा श्रुत्युक्तिर्यदि कारणम्। किं कार्यमनुमानेन गॅळस्तनसमेन[4] हि ॥१५७॥ अनुमानेन यद्यर्थः श्रुतिदृष्टो व्यपोह्यते[5]। पूर्वोक्तेन प्रकारेण नेश्वरो धर्म एव च। स्यात् तत्फलं च तेनात्र श्रुतिरेव प्रमा भवेत् ॥१५८॥ ईशस्यानुमया सिद्धेः श्रुतिर्धर्मिप्रमा भवेत्। तया सर्वगुणैः पूर्ण उक्त ईशो यतस्ततः[6] ॥१५९॥ अनानन्दानुमा तस्य[7] धर्मिग्राहिविरोधतः। न प्रमाणं भवेत् तस्मान्नानुमाऽत्रोपयोगिनी ॥१६०॥ नित्येच्छत्वात् परेशस्य परमाणुसदात्वतः। अदृष्टकालयोश्चैव भावात् कार्यं सदा भवेत् ॥१६१॥ नहि कालविभेदोऽस्ति तत्पक्षेऽसम्मते हरेः। विशेषकाल एवैतत्सृष्ट्यादीच्छा सदातना ॥१६२॥ विशेषाश्चैव कालस्य हरेरिच्छावशाः सदा। सर्वे निमेषा इति हि श्रुतिरेवाऽह सादरम् ॥१६३॥ उदीरयति कालाख्यशक्तिमित्यस्य[8] वागपि। कालस्य कालगत्वेन न विरोधोऽपि कश्चन ॥१६४॥ असङ्ख्यातविशेषत्वादिच्छाया अपि सर्वदा। ईशो देशश्च कालश्च स्वगता एव सर्वदा ॥ ॥१६५॥ ईशाधीनौ च तौ नित्यं तदाधारौ च तद्गतौ। इति श्रुतिरपि प्राह काले स्वोद्दिष्ट एव तु ॥१६६॥ तत्कालसृष्टिमेवातो वाञ्छतीशः सदैव हि। स्यात् कालः स तदैवेति कालस्य स्वगतत्वतः ॥१६७॥ स्वभावादेव हीच्छैषा देवस्यैष इति श्रुतेः। स्वभावोऽपि परेशेच्छावश इत्युदितः पुरा ॥१६८॥ नित्या अनित्याश्च ततस्तदधीना इति श्रुतिः। रूपस्पर्शादिहेतुभ्यः परमाणोरनित्यता ॥१६९॥ अनुमेया श्रुतीनां च विरुद्धत्वान्न तन्मतम्। उपादेयमतश्चायमविरुद्धः समन्वयः ॥१७०॥*॥ वैभाषिकाश्च सौत्रान्ताः स्वरसक्षणिकं जगत्। अणूनां समुदायं च कालकर्मनिमित्ततः ॥१७१॥ उत्पत्तिकाले युक्ताना-

---

१ "अनपेक्षता" २ "निरर्थकाम्" ३ "इति मोक्षधर्मे" ४ "गलस्तन-" ५ "श्रुतिदृष्टोऽप्यपोह्यते" ६ "ईश उक्तो यतस्ततः" ७ "अनानन्दानुमानस्य" ८ "कालाख्यां शक्तिम्" इति प्र. पाठः।

भाष्यम्

**समुदायस्यैकहेतुकत्वं न युज्यते। उभयहेतुकेऽप्यन्योन्याश्रयात्[1] तदप्राप्तिः। अन्यथा सर्वदा समुदायत्वं[2] स्यात् ॥*॥**

॥ इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॥१९॥

**सर्वदा विद्यमानोऽपि समुदायः परस्परापेक्षया व्यवह्रियत इति चेत्, न। एकं कार्यमुत्पाद्य तस्य विनष्टत्वात् परस्परप्रत्ययस्तदपेक्षया व्यवहार इति न युज्यते। कारणे सति कार्यं भवत्येवेति हि तस्य नियमः ॥*॥**

॥ उत्तरोत्पादे च पूर्वनिरोधात् ॥२०॥

**कार्योत्पत्तावेव कारणस्य विनाशाच्च न विशेषकार्योत्पत्तिः ॥*॥**

अनुव्याख्यानम्

**मात्मानं च क्षणस्थितिम्[3]। नित्यं सन्तानमेतेषां पञ्चस्कन्धात्मना स्थितम् ॥१७२॥ संस्काररूपविज्ञानसञ्ज्ञादुःखात्मना स्थितिः। दुःखाभावं सुखं चाऽहुररूपज्ञानसन्ततिम् ॥१७३॥ मोक्षं स समुदायो हि नैकस्मादेव युज्यते। नोभयोश्चोभयत्वं यत् समुदायव्यपेक्षया ॥ ॥१७४॥अतोऽन्योन्याश्रयत्वेन समुदायो न युज्यते। अन्योन्यापेक्षया पुंसः समुदायस्ववेदनम् ॥ ॥१७५॥स्यात् तत्सदातनत्वेऽपि तच्च सामीप्यहेतुकम्। इति चेत् कार्यसम्भूतिमात्रव्यापृतिकारणम् ॥१७६॥ नतु कार्यविशेषेषु व्यापृतं कारणं भवेत्। अतोऽर्थेन्द्रियसंयोगिरूपकारणतात्मनः। संयोगिरूपराहित्यान्नैव तज्ज्ञानताऽपि हि ॥१७७॥ विशेषकार्यजनकं यदि कारणमिष्यते। कुतः समानरूपत्वं कार्याणामपि सर्वशः ॥१७८॥ अतोऽनियत्या यत्किञ्चिद् यस्यकस्यापि कारणम्। अदृष्टमपि तस्यैव विशेषापादकं कुतः ॥१७९॥ यस्यकस्यापि यत्किञ्चिद् विशेषमुपपादयेत्। कार्यं च कारणं चैव यत्किञ्चिद् यस्यकस्यचित् ॥१८०॥ भवेन्नियामकाभावादिदमस्यैव कारणम्। इति नित्यविनाशित्वे केन मानेन गम्यते ॥१८१॥ इदं न जायतेऽमुष्मादित्यत्रापि न कारणम्। विनाशोत्पत्तयश्चैव न दृश्यन्ते सदातनाः ॥१८२॥ दृश्यते प्रत्यभिज्ञातः स्थिरत्वं सर्ववस्तुषु। फलादीनां विशेषेण सर्वत्राप्यनुमीयते ॥ १८३ ॥ सत्त्वेन क्षणिकत्वं चेदाकाशस्याविशेषतः। अविशेषोऽखिलस्यापि सत्त्वात् किं नानुमीयते ॥१८४॥ यद्याकाशस्य सत्त्वं न कुत एव नरादिषु। सधर्मिप्रतियोगित्वमभावस्य नियामकम् ॥१८५॥ तौ विना नह्यभावश्च कश्चिद् दृष्टः कदाचन। अधर्मिप्रतियोगित्वमाकाशस्यावगम्यते ॥१८६॥ स्वीकारत्यागतोऽदृष्टदृष्टयोः सर्ववस्तुषु। गुणानुन्मत्त एवासौ विदधात्यधिकं पुनः ॥१८७॥ उत्तरोत्पत्तिमात्रेण विनाशात् पूर्ववस्तुनः। न संस्कारापेक्षत्वं च युज्यते कस्यचित् क्वचित् ॥१८८॥ अतो ज्ञातं मयेत्यादि न ज्ञेयमनुमा कुतः। एकत्वमनुभूतिस्थं त्यक्त्वा निर्मानैका[4] भिदा। कुत आत्मादिकेषु स्याद् बल्येवानुभवो यतः ॥१८९॥.**

१ "अन्योन्याश्रयत्वात्" २ "समुदायसत्त्वम्" इति प्र. पाठौ। ३ "क्षणस्थितम्" इति प्र. पाठः। क्षणपरिमिता स्थितिर्यस्य स आत्मा क्षणस्थितिरिति प्राचीनपाठे बहुव्रीहिः। ४ "निर्मानिका" इति प्र. पाठः।

भाष्यम्

॥ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥२१॥

कारणे विनष्टे कार्यमुत्पद्यते चेत् तत्कार्यमिति प्रतिज्ञाहानिः। तत्काले कारणमस्ति चेद् विनाशकारणाभावाद् यौगपद्यं सर्वकार्याणाम् ॥*॥

॥ प्रतिसङ्ख्याप्रतिसङ्ख्यानिरोधाप्राप्तिरविच्छेदात् ॥२२॥

कारणे सति कार्यं भवत्येवेति नियमान्निस्सन्तानः ससन्तानश्च विनाशो न युज्यते ॥*॥

॥ उभयथा च दोषात् ॥२३॥

कारणे सति कार्यं भवत्येवेति नियमे सर्वदा कार्यभावान्न कार्यकारणविशेषः। अनियमे कार्यानुत्पत्तिः ॥*॥

॥ आकाशे चाविशेषात् ॥२५॥

दीपादिषु विशेषदर्शनात् क्षणिकत्वेनान्यत्र[१] क्षणिकत्वमनुमीयते चेदाकाशादिष्वविशेषदर्शनादन्यत्रापि तदनुमीयेत ॥*॥

॥ अनुस्मृतेश्च ॥२५॥

तदेवेदमिति प्रत्यभिज्ञानाच्च। प्रत्यभिज्ञाया भ्रान्तित्वे विशेषदर्शनस्यापि भ्रान्तित्वम् ॥*॥

॥*॥ इति सप्तममधिकरणम् ॥*॥

अनुव्याख्यानम्

कार्यकारणयोश्चैककालीनत्वं विना कथम्। पूर्वसंस्कारयोगी स्यादुत्तरो नियमेन च ॥१९०॥ सम्बद्धा एव संस्कारमन्यत्राऽदधतेऽखिलाः। असम्बद्धः कथं पूर्व उत्तरे वासनाकरः ॥१९१॥ एककालतया योगं विना संस्कारतः कथम्। क्षणमात्रमवस्थानं स्वीकृतं सर्ववस्तुषु ॥१९२॥ पूर्वमध्यापरकलारहितैः[२] क्षण इष्यते। पूर्वभावभवं कार्यमुत तन्नाशसम्भवम् ॥१९३॥ यौगपद्यं सति भवेदुत्पाद्यानामशेषतः। विनाशे चेन्न तत्कार्यं कार्योत्पत्तौ च का प्रमा ॥१९४॥ अभेदेन[३] विशेषेण देहदीपफलादिषु। विशेषदर्शनं युक्तमस्माकमनुभूतितः ॥१९५॥ विशेषदर्शनं मानं यदि न स्थैर्यदृक् कुतः। दिक्सुखे च खदृष्टान्ताद् भावौ सच्चेत् क्वचिद् भवेत् ॥ ॥१९६॥ विश्वं प्रत्यक्षगं त्यक्त्वा तयोर्योऽनुमितं वदेत्। मायावादिवदेवासावुपेक्ष्यो भूतिमिच्छता ॥१९७॥ सर्वप्रमाणसिद्धं यद् बुद्धेर्भेदेन सर्वदा। कथं नु तस्य बुद्धित्वं विश्वमन्यच्च किम्प्रमम् ॥१९८॥ सर्वलोको बिभेत्यज्ञो यस्मादनुभवात् सदा। तस्यापलापिनः किं न निष्प्रमाणकवादिनः ॥१९९॥ सोऽहं तदिदमेवाहं सुखी सद् गगनं दिशः। सत्या इत्याद्यनुभवाः सदा तत्प्रतिपक्षगाः ॥२००॥ अतो निर्मानमखिलप्रमाणप्रतिपक्षगम्। दुर्मतं को नु

---

१ "अन्यत्रापि" २ "कलाविकलः" इति प्र.पाठौ। ३ "अभेदेऽपि" इति प्र. पाठः। अयमेव पाठः स्वरस इति भाति। प्राचीनटीकायां नयचन्द्रिकायां चायमेव पाठः स्वीकृत इति च भाति। परन्तु सर्वत्र प्राचीनकोशेषु "अभेदेन" इति पठ्यते। अस्य पाठस्यायमर्थः—देहादिषु विशेषदर्शनं न भेदाविनाभावि। अभेदेन सहैव विशेषदर्शनमपि सूपपादम्, अवस्थितस्यैवोपचयादिविक्रियाविशेषेणेति।

भाष्यम्

शून्यवादमपाकरोति—

॥ नासतोऽदृष्टत्वात् ॥२६॥

अदृष्टत्वादसतः कारणत्वं न युज्यते ॥*॥

॥ उदासीनानामपि चैवं सिद्धिः ॥२७॥

असतः कारणत्व उदासीनानां हेयोपादेयबुद्धिवर्जितानां खपुष्पादीनामपि सकाशात् कार्यसिद्धिः। चशब्दान्न चेदन्यत्रापि न स्यात्, अविशेषात् ॥*॥

॥ नाभाव उपलब्धेः ॥२८॥

नच जगदेव शून्यमिति वाच्यम्। दृष्टत्वात् ॥*॥

॥ वैधर्म्याच्च न स्वप्नादिवत् ॥२९॥

नच दृष्टस्यापि स्वप्नादिवदभावः। तस्योत्तरकाले स्वप्नोऽयं नायं सर्प इत्याद्यनुभवात्। नचात्र तादृशप्रमाणमस्ति[1] ॥ * ॥

॥*॥ इत्यष्टममधिकरणम् ॥*॥

अनुव्याख्यानम्

गृह्णीयाद् विनाऽसुरततिं क्वचित् ॥२०१॥*॥ अपरः शून्यमखिलं मनोवाचामगोचरम्। निर्विशेषं स्वयम्भातं निर्लेपमजरामरम्॥२०२॥अशेषदोषरहितमनन्तं देशकालतः। वस्तुतश्च तदस्मीति नित्योपासापरोक्षितम्। रागादिदोषरहितं तद्भावं योगिनं नयेत् ॥२०३॥तस्यैवानादिसंवृत्या नानाभेदात्मकं जगत्। सदिवाऽभाति सत्यत्वं सांवृतं तस्य चेष्यते ॥२०४॥ पारमार्थिकसत्त्वं[2] तु शून्यादन्यस्य न क्वचित्। सांवृतेनैव सत्येन[3] व्यवहारोऽखिलो भवेत् ॥२०५॥ शून्यात् संवृतियोगेन विश्वमेतत् प्रवर्तते। सृष्टिकाले पुनश्चान्ते स्तिमितं शून्यतां व्रजेत्। इति ब्रूते तमुद्दिश्य जगाद जगतां गुरुः ॥२०६॥ नासतो जगतो भावो नहि दृष्टाऽसतो जनिः। सतः क्वचित् प्रमाणं च दृष्टिरेवाखिलाद् वरम् ॥२०७॥ यद्येवं सत्तमरसान्मधुरादिव पीनता। भवेज्जनस्य मार्जारशृङ्गं गोरिव घातकम् ॥२०८॥ कार्यार्थी कारणं सच्च नोपादद्यात् कथञ्चन। न प्रवर्तेत चेष्टाय शून्यादेवेष्टसम्भवात् ॥२०९॥ देशकालादिनियमो नहि शून्यात् सतो भवेत्। पुरुषेच्छानुसारेण यदि किञ्चित् प्रजायते ॥२१०॥ किं नानुमीयते तद्वद् वस्तुत्वात् पुरुषाद् भवः[4]। सर्वस्यापि नचाभवो विश्वं सदिति गम्यते ॥२११॥ यतोऽनुभवरोधे तु वचनं वादिनः कुतः। स्वप्नभ्रान्तिवदेवेदं संवृत्यैवोपलभ्यते ॥२१२॥ यदि सत्त्वेन किञ्चात्र भ्रमो नैव निवर्तते। अनादेरस्य विश्वस्य निवृत्तिर्यदि चेष्यते। निवृत्तिश्च निवर्तेत तस्या भ्रान्तित्वसम्भवात् ॥२१३॥ दृष्टस्य भ्रान्तिता चेत् स्याददृष्टे न भ्रमः कुतः। गवामशृङ्गिभावेन नहि स्याच्छशशृङ्गिता ॥२१४॥ अस्माकं तु प्रमाणेन प्रसादादीश्वरस्य च। उक्तभङ्ग्याऽऽगमानां च प्रामाण्याद् युज्यतेऽखिलम् ॥२१५॥ दृश्यत्वाद् विमतं मिथ्या स्वप्नवच्चेदियं

---

१ "तादृशं प्रमाणमस्ति" २ "पारमार्थिकसत्यत्वम्" ३ "सत्त्वेन" ४ "पुरुषोद्भवः" इति प्र.पाठाः।

भाष्यम्

विज्ञानवादमपाकरोति—

॥ न भावोऽनुपलब्धेः ॥३०॥

न विज्ञानमात्रं जगत् । तथाऽनुभवाभावात् ॥*॥

॥ क्षणिकत्वाच्च ॥३१॥

ज्ञानं क्षणिकम् । अर्थानां च स्थायित्वमुक्तम् । अतश्च नैक्यम् ॥*॥

॥ सर्वथाऽनुपपत्तेश्च ॥३२॥

प्रमाणाभावात् सर्वश्रुतिस्मृतियुक्तिविरुद्धत्वाच्च नैते पक्षा ग्राह्याः ॥*॥

॥*॥ इति नवममधिकरणम् ॥*॥

अनुव्याख्यानम्

च मा । मिथ्या चेत् साध्यसिद्धिर्न व्यभिचारो न चेद् भवेत् ॥२१६॥ साधकत्वमसत्यस्य साध्यं विप्रतिपत्तितः । तस्य चेत्यनवस्था स्यात् सत्त्वं चास्यानुभूतितः ॥२१७॥ अनुभूति-विरोधेन मिथ्यात्वे मा न काचन । अतीतानागतौ कालावपि नः साक्षिगोचरौ । तत्सम्बन्धि-तया सत्त्वमपि दृष्टस्य साक्षिगम् ॥२१८॥ दृढदृष्टं तु यद् दृष्टं दृष्टाभासस्ततोऽपरम् । भ्रान्तेः संवृतिसत्यस्य विशेषोऽव्यभिचारवान् । तेनाप्यङ्गीकृतः सम्यक् स नः सत्यत्वमेव हि ॥ ॥२१९॥ विज्ञानाद् व्यभिचारोऽस्य कदाचित् स्यादिति प्रमा । नैव दृष्टा प्रमा सा च न भवेत् स्वविरोधतः ॥२२०॥ भेदो विशेष्यधर्म्यादिग्रहणापेक्षया यदि । अन्योन्याश्रयताहेतो-र्दुर्ग्राह्य इति यन्न तत् ॥२२१॥ स्वरूपं वस्तुनो भेदो यन्न तस्य ग्रहे ग्रहः । अन्यथाऽस्यामुना भेद इति वक्तुं न युज्यते[1] ॥२२२॥ अगृहीतो यदा भेदस्तदा स्वस्मादिति ग्रहः । स्यात् प्रतीति-विरोधाच्च नहि कश्चित् तथा वदेत् ॥२२३॥ धर्मित्वप्रतियोगित्वतद्भेदा युगपद् यदि । विशेषणं विशेष्यं च तद्भावश्चैव गृह्यते ॥२२४॥ को विरोधः स्वरूपेण गृहीतो भेद एव तु । अस्यामुष्मादिति पुनर्विशेषेणैव गृह्यते ॥२२५॥ किञ्च भेदः कथं ग्राह्य इति यः परिपृच्छति । धर्म्यादिभेदग्रहणात् तेनोक्तोऽन्योन्यसंश्रयः॥२२६॥अन्यत्वाग्रहणे प्रोक्तः कथमन्योन्यसंश्रयः। अन्यत्वं यदि सिद्धं स्यात् कथमन्योन्यसंश्रयः ॥२२७॥ एतादृशस्य वक्तारावुभौ जात्युत्तरा-करौ । मायी माध्यमिकश्चैव तदुपेक्ष्यौ बुभूषुभिः ॥२२८॥ यच्छून्यवादिनः शून्यं तदेव ब्रह्म मायिनः । नहि लक्षणभेदोऽस्ति निर्विशेषत्वतस्तयोः ॥२२९॥ अनृतादिविरोधित्वमुभयोश्च स्वलक्षणम् । स्ववाक्याभावसंवादान्न कृत्यं प्रतिवादिनः ॥२३०॥ तत्पक्ष इति वैधर्म्यान्न स्वप्नादिवदित्यजः । अप्रयत्नान्निराचक्रे चेति दृष्टिविरुद्धताम् । निष्प्रमाणत्वमप्यस्य सूचया-मास विश्वकृत् ॥२३१॥*॥ ज्ञानमेवैकमखिलज्ञेयाकारं प्रभासते । तत्र सन्ततिभेदश्च स्वभेदो भेद एव च । कल्पिताः प्रतिभासन्ते नानासंवृतिभूमिषु ॥२३२॥ इत्येतदपि नो युक्तं नहि ज्ञानतया जगत् । भासतेऽनुभवस्यैव विरुद्धत्वादपेशलम् ॥२३३॥ तन्मतं क्षणिकत्वाच्च ज्ञानस्य स्थिररूपतः । ज्ञेयस्योक्तप्रकारेण सर्वश्रुतिविरोधतः । अनुभूतिविरुद्धत्वादपि पक्षा

[1] "न शक्यते" इति प्र. पाठः ।

भाष्यम्

स्याद्वादिमतं दूषयति—

॥ नैकस्मिन्नसम्भवात् ॥३३॥

सत् स्यादसत् स्यात् सदसत् स्यात् ततोऽन्यच्च स्यादित्येतन्नैकस्मिन् युज्यते। अदृष्टत्वेनासम्भवात् ॥*॥

॥ एवञ्चाऽत्माकार्त्स्न्यम् ॥३४॥

जीवस्य शरीरपरिमितत्वाङ्गीकारेऽण्वादिशरीरस्थस्य हस्त्यादिशरीरेऽकार्त्स्न्यं स्यात् ॥*॥

॥ नच पर्यायादप्यविरोधो विकारादिभ्यः ॥३५॥

तत्तच्छरीरस्थस्य तत्तत्परिमाणत्वमिति न वाच्यम्। विकारित्वादनित्यत्वप्रसक्तेः ॥*॥

॥ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषात् ॥३६॥

परिमाणाभावे स्वरूपाभावप्राप्त्याऽन्त्यपरिमाणस्थितेस्तदर्थत्वेन शरीरस्थितेरुभयनित्यत्वादविशेषेण सर्वशरीरनित्यत्वं स्यात् ॥*॥

॥*॥ इति दशममधिकरणम् ॥*॥

अनुव्याख्यानम्

इमेऽशिवाः ॥२३४॥*॥ आह क्षपणको विश्वं सदसद् द्वयमद्वयम्। द्वयाद्वयमतत्सर्वं सप्तभङ्गि सदातनम् ॥२३५॥ नैतत् पदार्थ एकस्मिन् युक्तं दृष्टिविरोधतः। भावाभावतया विश्वं येन रूपेण मीयते। तद्रूपमेव तदिति नियमः केन वार्यते ॥२३६॥ तत्तद्दोषनिवृत्त्यर्थं स्वीकृता तत्तदात्मता। यदि तैरखिलैर्दोषैर्लिप्यते चलदर्शनः ॥२३७॥ अतिहाय प्रमाणाप्तं नियमं सदसत्तया। अशेषमाविरुद्धं च निर्मानं व्याहतं सदा ॥२३८॥ सर्वप्रकारं वदतो दृष्टहानिरमग्रहः। स्वव्याहतत्वमित्याद्या दोषाः सर्वे भवन्ति हि ॥२३९॥ वक्ति स्वप्रभमात्मानं देहमानं तदन्यलम्। दुष्टं नानाशरीरेषु प्रवेशादन्यथाभवात् ॥२४०॥ अन्यथाभावि यद् वस्तु तदनित्यमिति स्थितिः। तन्मते तदनित्यत्वं पुद्गलस्यानिवारितम् ॥२४१॥ नानित्यताऽस्मत्पक्षे तु चैतन्यादेर्विशेषिणः। लक्षणस्य निवृत्तौ तु स्यान्न तच्चेतने क्वचित् ॥२४२॥ ओतप्रोतात्मकत्वं तु पटे देहेऽङ्गसंस्थितिः। इत्यादिलक्षणस्यैव निवृत्तौ स्यादनित्यता ॥२४३॥ भौतिकं त्वेव रूपादि व्याप्तं नाशेन नो मते। नैवं तस्यान्यथाभावो यस्यानित्यत्वमीरितम् ॥२४४॥ रूपादियुक्तस्य तथा जगन्नाशित्वसिद्धये। व्याप्त्या तयाऽन्यथाभावदात्मनोऽनित्यता भवेत् ॥२४५॥ नित्योर्ध्वगतिरप्येषा या मुक्तिरिति कथ्यते। अलोकाकाशमातस्य कथं न विकृतिश्च सा ॥ ॥२४६॥ कीदृशश्चान्यथाभावो नाशहेतुतयेष्यते। संस्थानापगमश्चेत् स नहि भूसागरादिषु ॥२४७॥ यःकश्चिदन्यथाभावो यदि मुक्तिश्च तादृशी। देहमाने विकारः स्यादिति स्थास्नूननात्मनः ॥२४८॥ आह हस्त्यादिदेहेषु ह्यपि स्यादन्यथाभवः। अणुदेहस्य जीवस्य गजत्वे विकृतिर्हि या। देहव्याप्त्यै[3] विशेषः कस्तस्याः स्थास्नुतनौ च नुः ॥२४९॥ गीतात् पुष्पफलावाप्तिः स्पर्शात् कार्श्यं रसात् स्थितिः। अपि वृक्षस्य दृश्यन्त इति नानात्मता भवेत्।

१ "न मन्तव्यम्" २ "प्रमाणाप्तनियमम्" ३ "देहव्याप्तौ" इति प्र. पाठाः।

भाष्यम्

पाशुपतपक्षमपाकरोति—

॥ पत्युरसामञ्जस्यात् ॥३७॥

"यं कामये तं तमुग्रं कृणोमि"[1],"अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्तवा उ", "अस्य देवस्य मीळ्हुषो[2] वया विष्णोरेषस्य प्रभृथे हविर्भिः। विदे हि रुद्रो रुद्रियं महित्वं यासिष्टं वर्तिरश्विनाविरावत्", "एको नारायण आसीन्न ब्रह्मा नेशानः" इत्यादिना[3] पारतन्त्र्येणासमञ्जसत्वान्न पतिरीश्वरनामा जगत्कर्ता[4] ॥*॥

॥ सम्बन्धानुपपत्तेश्च ॥३८॥

अशरीरत्वात् तस्य जगता सम्बन्धो न युज्यते कर्तृत्वेन मृतपुरुषवत् ॥*॥

॥ अधिष्ठानानुपपत्तेश्च ॥३९॥

पृथिव्याद्यधिष्ठाने स्थितो हि कुलालादिः कार्यं करोति। नचास्य तदस्ति ॥*॥

॥ करणवच्चेन्न भोगादिभ्यः ॥४०॥

इदमेव जगत् तस्य करणवदधिष्ठानादिरूपं नित्यस्यापि कस्यचिद् भावाद् युज्यत इति चेत्, न। भोगादिप्राप्तेः। उत्पत्तिविनाशौ सुखदुःखभोगश्च[5] प्राप्यन्ते तद्गताः ॥*॥

अनुव्याख्यानम्

एवञ्चाऽत्माकात्स्न्र्यमिति तत एवाऽह वेदवित् ॥२५०॥*॥ सर्वज्ञत्वादिकैः सर्वैर्गुणैर्युक्तं सदाशिवम्। जगद्विचित्ररचनाकर्तारं दोषवर्जितम् ॥२५१॥ आहुः पाशुपतास्तच्च बहुश्रुति-विरोधतः। नोपादेयं मतं ह्यस्य देवस्य स्तुहि गर्तगम् ॥२५२॥ उत्पिपेष शिरस्तस्य गृणीषे सत्पतिं पदम्। यद् विष्णोरुपमं हन्तुं रुद्रमाकृष्यते मया ॥ २५३ ॥ धनुर्यं कामये तं तमुग्रं मा शिश्नदेवताः। प्रच्छिन्नदेवानेकोऽसावासीन्नारायणः परः ॥२५४॥ तस्माद् रुद्रः सम्प्रसादश्चाभूतां वैष्णवं मखम्। यज्ञेन यज्ञमयजन्ताबध्नन् पुरुषं पशुम् ॥२५५॥ यो भूतानामधिपती रुद्रस्तन्तिचरो वृषा। इत्यादिश्रुतिसामर्थ्यात् पारतन्त्र्यं जनिर्मृतिः ॥२५६॥ पराधीनपरंप्राप्तिरज्ञत्वं प्रळये[6]ऽभवः। प्रतीयन्ते सदोषत्वान्नेशः पशुपतिस्ततः ॥२५७॥ अशरीरत्वतस्तस्य सम्बन्धो जगता क्वचित्। कर्तृत्वेन न युज्येत देहिनो ज्ञानदर्शितः ॥२५८॥ नच देहादिवद् विश्वमस्य स्याद् भोगसम्भवात्। अधिष्ठाने स्थितः कर्ता कार्यं कुर्वन् प्रतीयते। नास्याधिष्ठानयोगोऽस्ति भूतानां प्रळये[7] तदा ॥२५९॥ अदेहश्चेद्-सावज्ञः[8] शिलाकाष्ठादिवत् सदा। देही चेदन्तवानेव यज्ञदत्तनिदर्शनात् ॥२६०॥ नचैतदखिलं विष्णौ श्रुतिप्रामाण्यगौरवात्। मनोबुद्ध्यङ्गितां विष्णोर्लक्षयामो य एव सः ॥२६१॥ स एव

---

१ इतः परं प्र. पाठे "तं ब्रह्माणं तमृषिं तं सुमेधाम्" इत्यधिकम्। २ "मीळ्हुषः" इति प्र. पाठः। वस्तुतस्तु हकारढकारयोः समीकरणेनेदं श्रौतमुच्चारणं भवति। द्राविडव्यवहारेषु चैतादृशः प्रयोगः प्रचुरमुपलभ्यते। ३ "नेशानो नाग्निषोमावित्यादिश्रुतेः" ४"न पशुपतिरीश्वरो जगत्कर्ता" इति प्र.पाठौ। ५"भोगाश्च" इति क्वचित् पठ्यते। ६ "प्रलये" ७ "प्रलये" ८ "अदेहश्चेदसर्वज्ञः" इति प्र. पाठाः।

भाष्यम्

॥ अन्तवत्त्वमसर्वज्ञता वा ॥४१॥

देहवत्त्वेऽन्तवत्त्वम् । अन्यथा ज्ञानाभावः । शरीरिण एव ज्ञानदृष्टेः[1] । विष्णोस्तु श्रुत्यैव विरोधाः परिहृताः—

"यदात्मको भगवांस्तदात्मिका[3] व्यक्तिः किमात्मको भगवान् । ज्ञानात्मक ऐश्वर्यात्मकः शक्त्यात्मक इति", "बुद्धिमनोऽङ्गप्रत्यङ्गवत्तां भगवतो लक्षयामहे । बुद्धिमान् मनोवानङ्गप्रत्यङ्गवानिति[4]", "सद्देहः सुखगन्धश्च ज्ञानभाः सत्पराक्रमः । ज्ञानज्ञानः सुखसुखः स विष्णुः परमाक्षरः[5]" इत्यादिकया ॥*॥

॥*॥ इत्येकादशमधिकरणम् ॥*॥

शक्तिपक्षं दूषयति—

॥ उत्पत्त्यसम्भवात् ॥४२॥

नच पुरुषाननुगृहीतस्त्रीभ्य उत्पत्तिर्दृश्यते ॥*॥

अनुव्याख्यानम्

देहो विज्ञानमैश्वर्यं शक्तिरूर्जिता । देहो विष्णोर्न ते विष्णो वासुदेवोऽग्रतोऽभवत् ॥२६२॥ एको नारायणस्त्वासीन्न ब्रह्मा[6] नच शङ्करः । अजस्य नाभावध्येकमर्पितं मात्रया परः ॥२६३॥ सद्देहः सुखगन्धश्च ज्ञानभाः सत्पराक्रमः । ज्ञानज्ञानः सुखसुखः स विष्णुः परमाक्षरः[7] ॥ ॥२६४॥ आनन्द एक एवाग्र आसीन्नारायणः प्रभुः । प्रियं तस्य शिरो मोदप्रमोदौ च भुजौ हरेः ॥२६५॥ आनन्दो मध्यतो ब्रह्म पुच्छं नान्यदभूत् क्वचित् । मनसोऽस्याभवद् ब्रह्मा ललाटादपि शङ्करः ॥ २६६ ॥ पक्षयोर्गरुडः शेषो मुखादास[8] सरस्वती । सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ॥ २६७ ॥ इत्यादिश्रुतिसन्दर्भबलान्नित्यगुणात्मनः । विष्णोर्देहाज्जगत् सर्वमाविरासीदितीयते ॥ २६८ ॥ मानवत्त्वाद् विरोधः को नामानं क्वचिदिष्यते । अविरोधो विरोधश्च मानेनैव हि गम्यते ॥ २६९ ॥ अत उक्तं समस्तं च वासुदेवस्य युज्यते । शिवादिनामयुक्ताश्च श्रुतयो विष्णुवाचकाः ॥२७० ॥ नामानि सर्वाणि च यमेको यो देवनामधाः । विष्णुनामानि नान्यस्य सर्वनामा हरिः स्वयम् ॥ ॥२७१॥ न नारायणनामानि तदन्येष्वपरे हरौ । इत्यादिश्रुतयस्तत्र मानं चोक्तः समन्वयः ॥ ॥२७२॥ पुराणानि पुराणाद्यैर्विरुद्धत्वान्न तत् प्रमा । तद्विरुद्धेषु नो मानं पूर्वापरविरोधतः ॥ ॥२७३॥ समग्राह्यविरोधाच्च नियमाद् वैष्णवेष्वपि । मोहार्थमुक्तितश्चैव विष्णुरेको गुणार्णवः ॥ ॥२७४॥ स्कन्दसूर्यगणेशादिमतानि न्यायतोऽमुतः । निराकृतान्यशेषेण सिद्धान्तस्याविशेषतः ॥ ॥२७५॥*॥ निराकृतौ विशेषस्य भावाच्छक्तिमतं पृथक् । दूष्यते महती देवी ह्रीङ्कारी सर्वका-

---

१ "शरीरिण एव हि ज्ञानोत्पत्तिर्दृष्टा" २ "श्रुत्यैव सर्वे विरोधाः" ३ "तदात्मिका" ४ "अङ्गवान् प्रत्यङ्गवानिति" ५ "परमोऽक्षरः" ६ "नारायण आसीन्न ब्रह्मा" ७ "परमोऽक्षरः" ८ "मुखादासीत्" इति प्र. पाठाः ।

भाष्यम्

॥ नच कर्तुः करणम् ॥४३॥

यदि पुरुषोऽङ्गीक्रियेत[1] तस्यापि करणाभावादनुपपत्तिः ॥*॥

॥ विज्ञानादिभावे वा तदप्रतिषेधः ॥४४॥

यदि विज्ञानादिकरणं तस्याङ्गीक्रियते तदा तत एव सृष्ट्याद्युपपत्तेरीश्वरवादान्तर्भावः ॥*॥

॥ विप्रतिषेधाच्च ॥४५॥

सकलश्रुत्यादिविरुद्धत्वाच्चासमञ्जसम् ॥*॥

॥*॥ इति द्वादशमधिकरणम् ॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते

श्रीमद्ब्रह्मसूत्रभाष्ये

— द्वितीयाध्यायस्य द्वितीयः पादः —

अनुव्याख्यानम्

रणम् । त्रिपुराभैरवीत्यादिनामभिः साऽभिधीयते ॥२७६॥ तस्याः सदाशिवाद्याश्च जायन्ते देवमानुषाः । भूतभौतिकमप्येतदिति तन्नोपपद्यते ॥२७७॥ दृष्टा पुम्भ्यः सदा सृष्टिः स्त्रीपुम्भ्यो वा विशेषतः । केवलाभ्यो नहि स्त्रीभ्यस्तत उत्पत्त्यसम्भवात् ॥२७८॥ नाच्यं महावाममतं वामैरन्यदुदीर्यते[2] । शिवोपसर्जना शक्तिः ससर्जेदं समन्ततः ॥२७९॥ इति तच्चोपपन्नं न शिवस्याकरणत्वतः । अदेहत्वादपि ह्यन्ये ब्रूयुः सर्वज्ञमीश्वरम् ॥२८०॥ अणुवामा न तद्युक्तमीशवादप्रवेशनात् सार्वज्ञ्यादिगुणैर्युक्तं गुरुकल्पनया द्वयम् ॥२८१॥ न युज्यते ह्यतस्त्वीशः[3] एक एव प्रयोजकः । उक्तदोषश्च तत्पक्ष इति नैवात्र दूष्यते ॥२८२॥ श्रुतिस्मृतीतिहासानां सामस्त्येन विरोधतः । सतां जुगुप्सितत्वाच्च नाङ्गीकार्यं हि तन्मतम् ॥२८३॥*॥ पञ्चरात्रनिषेधार्थमेतान्याचक्षते यदि । सूत्राण्यतिविरुद्धं तद् यत आह स भारते ॥२८४॥ पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् । ज्ञानेष्वेतेषु राजेन्द्र सर्वेष्वेतद् विशिष्यते ॥ ॥२८५॥ पञ्चरात्रविदो ये तु यथाक्रमपरा नृप । एकान्तभावोपगता वासुदेवं विशन्ति ते ॥ ॥२८६॥ इति गीता च तच्छास्त्रसङ्क्षेप इति हीरितम् । वेदेन पञ्चरात्रेण भक्त्या यज्ञेन चैव हि ॥२८७॥ दृश्योऽहं नान्यथा दृश्यो वर्षकोटिशतैरपि । इति वाराहवचनं श्लोका इति वचः श्रुतौ ॥२८८॥ वेदैश्च पञ्चरात्रैश्च ध्येयो नारायणः परः । पञ्चरात्रं च वेदाश्च विद्यैकैव द्विधेयते ॥२८९॥ इत्यादिवेदवचनैः पञ्चरात्रमपोद्यते । कथमेवात्र दोषः क उत्पत्तिर्जीऽत इत्यपि ॥२९०॥ इहैवोक्ता नचाभूतभावस्तत्रापि कथ्यते । अनादिकर्मणा बद्धो जीवः संसारमण्डले ॥२९१॥ वासुदेवेच्छया नित्यं भ्रमतीति हि तद्वचः । नहि संसारसादित्वं पञ्चरात्रोदितं क्वचित् ॥२९२॥ जीवाभिमानिशेषस्य नाम्ना सङ्कर्षणस्य तु । वासुदेवाजनिः प्रोक्ता

१ "अङ्गीक्रियते" २ "वामैरन्यैरुदीर्यते" ३ "ततस्त्वीशः" इति प्र० पाठाः ।

भाष्यम्

ॐ॥ जीवपरमात्माधिभूताधिदैवेषु श्रुतीनां परस्परविरोधमपाकरोत्यनेन पादेन—

## ॥ न वियदश्रुतेः ॥१॥

न वियदनुत्पत्तिमत् । तथाऽश्रुतेः ॥*॥

अनुव्याख्यानम्

प्रद्युम्नस्य ततस्तथा ॥२९३॥ मनोऽभिमानिनः कामस्यैवं साक्षाद्धरेः क्वचित् । सङ्कर्षणादिनाम्नैव नित्याचिन्त्योरुशक्तितः । व्यूह उक्तोऽन्यथाऽनूद्य कथं दुष्टत्वमुच्यते ॥२९४॥ यदि विद्याच्चतुर्वेदानितिवद् वेदपूरणम् । पञ्चरात्रादिति कुतो द्वेषः शाण्डिल्यवर्तने ॥२९५॥ अतः परमशास्त्रोरुद्वेषादुदितमासुरैः । दूषणं पञ्चरात्रस्य वीक्षायामपि न क्षमम् ॥२९६॥ अतोऽशेषजगद्धाता निर्दोषोरुगुणार्णवः । नारायणः श्रुतिगणतात्पर्यादवसीयते ॥२९७॥ अन्धं तमः प्रविशन्ति ये त्वविद्यामुपासते । ततो भूय इवा[१]ऽऽयन्ति ये तस्या नैव निन्दकाः ॥२९८॥ ततो विद्यामविद्यां च यो जानात्युभयं सह । दोषज्ञानादतीत्यैतान्[२] विद्यया‌ऽमृतमश्नुते ॥२९९॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते

श्रीमद्ब्रह्मसूत्रानुव्याख्याने

— द्वितीयाध्यायस्य द्वितीयः पादः—

---

ॐ॥ अथाशेषसमाम्नायविरोधापाकृतिं प्रभुः । करिष्यन्नधिदैवाधिभूतजीवपरात्मनाम् ॥ १ ॥ स्वरूपनिर्णयायैव वचनानां परस्परम् । पादेनानेनाविरोधं दर्शयत्यमितद्युतिः ॥२॥ अनुभूतियुक्तिबहुवाग्वैलोम्यं च ततोऽधिकम् । एतत् सर्वं स[३]तः साम्यं द्वारवैयर्थ्यमेव च ॥३॥ दृष्टयुक्त्यनुसारित्वमुक्तान्यार्थाविरोधतः । प्रसिद्धनामस्वीकारे बहुवाक्यानुवर्तिता ॥४॥ लोकदृष्टानुसारित्वं जीवसाम्यमनादिता । तत्र तत्र परिज्ञानं गुणसाम्यश्रुती तथा ॥५॥ उत्पत्तिमत्त्वं स्वगुणाननुभूत्यल्पकल्पने । नानाश्रुतिश्च वैचित्र्यं युक्तयः पूर्वपक्षगाः ॥६॥ व्यवस्थाऽनुपपत्तिश्च स्वातन्त्र्यमनुसारिता । मुख्यता शक्तिमत्त्वं च वैरूप्यं सर्वसङ्ग्रहः ॥७॥

न्यायविवरणम्

ॐ॥ नच वियत उत्पत्तिमत्त्वेऽनुभूतियुक्तिबहुवाग्विरोधोऽस्ति । व्यवस्थायोगात् । अ[४]वकाशमात्रस्याव्याकृतात्मकत्वादनुत्पत्तिवचनानां तद्विषयत्वम् । उत्पत्तिवचनानामसितवर्णभूततदभिमानिशरीरविषयत्वम्, पराधीनविशेषवत्त्वमात्रविषयत्वं चेति व्यवस्था । "आकाशो नीलिमोदेति न प्रदेशः कथञ्चन । अभावो हि प्रदेशस्य नह्यत्राभाव इत्यपि " इति पैङ्गिश्रुतेः[५] ॥१॥

---

१ "इवाऽयान्ति" इति प्र.पाठः । २ "अतीत्यैताम्" इति प्र.पाठः । एतामविद्याम् । प्राचीनपाठे दोषज्ञानादेतान् दोषानतीत्य । ३ "ततः" इति प्र. पाठः । ४"अवकाशमात्रस्याव्याकृतात्मकत्वादनुत्पत्तेरनुत्पत्तिवचनानां तद्विषयत्वम् " इति क्वचित् पठ्यते । ५ "पैङ्गिश्रुतिः" इति प्र.पाठः ।

अनुव्याख्यानम्

गत्यादिरीशशक्तिश्च सर्वमानविरोधिता। अभीष्टासिद्धिसुव्यक्ती शास्त्रसिद्धिर्विपर्ययः। विशेषकारणं चेति सिद्धान्तस्यैव साधकाः[1]॥८॥*॥ प्रकृतिः पुरुषः कालो देवास्तद[2]भिमानिनः।

न्यायविवरणम्

ततोऽधिकमेतत् सर्वमनुभूत्यादिविरुद्धत्वं वायूत्पत्ताविति न। वायोरेवानुत्पत्त्यनु[3]पपत्तेः। पराधीनविशेषवत्त्व[4]मात्रं ह्युत्पत्तिः। तदभाव उभयोः स्वातन्त्र्यं विरुद्धमेव। सर्वोत्तमत्वानुपपत्तेः। उभयोरपि पराधीनत्वप्राप्तेश्चान्योन्यानुरोधे। अननुरोधे तु न सर्वैश्वर्यम्। ज्ञानाविस्मृत्या वायावपि व्यवस्थेत्यतिदेशः। अनुपपत्तिस्तु तत्प्रापिका। पराधीनविशेषवत्त्वमात्रं त्वव्याकृताकाशस्य तदभिमानिप्रकृतेश्च सममेव ॥२॥

नच सतः पराधीनविशेषवत्त्वम्। स्वातन्त्र्यात् ॥३॥

नच विष्णो[5]स्तेजस उत्पत्तौ द्वारकारणवैयर्थ्यमेवं[6]। द्वारमनुसृत्यैव विष्णोः प्रवृत्तेः ॥४॥

नच तेजस एवापामुत्पत्त्यङ्गीकारे घर्मात् स्वेदादिदृष्ट्यनुसार इति गुणाधिक्यम्। मुख्यार्थपरित्यागप्राप्तेः ॥५॥

नच "अद्भयो वा अन्नमुत्पद्यते" इत्याद्युक्तप्रसिद्धाम्नाख्यान्यार्थविरोधेन प्रसिद्धान्ननामस्वीकारे बहुवाक्यानुवर्तितेति गुणः। अन्नशब्दस्य प्रयोगबाहुल्यात् पृथिव्यामपि शक्तिमत्त्वात्। अधिकारादीनां निरवकाशत्वाच्च। बहुवाक्यानुरोधोऽप्यत्रैवं[7] ॥६॥

नच रुद्रादीनां लयकारित्वाङ्गीकारे पितु[8]रन्यस्य मारकत्वदृष्टे[9]र्लोकदृष्टानुसारित्वमिति गुणः। लोकपितृवैरूप्याद् विष्णोर्यथावाक्यमङ्गीकारोपपत्तेः। अन्यथा— "न विष्णोरन्यो विलयकृन्न विष्णोरन्यो विमुक्तिदः" इत्यादिश्रुतिविरोधात्। रुद्रस्य तु क्वचित् संहारद्वारत्वेनैव तद्वाक्यानां सावकाशत्वात् ॥७॥

नच लोकानुसारित्वम्, "क्रमादुत्पद्यते क्रमाद् विलीयते", "क्रमेणैवोत्पत्तिर्विलयश्च","क्रमेणैव ह्यस्योत्पत्तिलयौ" इत्यादिबहुश्रुत्यनुरोधश्च य[10]थोत्पत्तिलये। "द्विविधः क्रम उद्दिष्टो व्युत्क्रमोऽनुक्रमस्तथा। सृष्टावन्यो लये चान्य इति वेदविदो विदुः" इति श्रुतेः क्रमवाक्यस्य सावकाशत्वाद् वैरूप्यं बहुप्रकारत्वं क्रमस्य ॥८॥

नच केषाञ्चित् क्रमाल्लयः केषाञ्चिद् व्युत्क्रमाल्लय इत्यङ्गीकारे लोकदृ[11]ष्टानुसारादन्तरा विज्ञानमनसी व्युत्क्रमः। "सर्वं वा एतत् क्रमादुत्पद्यते क्रमाद् वि[12]लीयते" इति श्रुतौ सर्वस्यापि व्युत्क्रमाल्लये सङ्ग्र[13]हात्। तल्लिङ्गस्य तु चराचरव्यपाश्रयविज्ञानादिविषयत्वेनैव सावकाशत्वात् ॥९॥

नच चेतनत्वेन साम्याद् विष्णोरपि देहलयः। "सर्वे वा एते चिदात्मानो ब्रह्मन् लयमनुप्राप्य

---

१ "साधिकाः" २ "वेदास्तदभिमानिनः" ३ "मुख्यानुत्पत्त्यनुपपत्तेः" ४ "पराधीनविशेषमात्रं" ५ "विष्णोरेव तेजसः" ६ "द्वारकारणवैयर्थ्यम्। द्वारमनुसृत्य" ७ "बहुवाक्यानुरोधोऽप्यत्रैवेति" ८ "पितुरन्यस्यैव" ९ "लोकदृष्ट्यनुसारित्वमिति" १० "क्रमणैव ह्यस्योत्पत्तिविलयावित्यादिलोकानुसारिबहुवाक्यानुरोधश्च यथोत्पत्तिविलये" ११ "लोकदृष्ट्यनुसारात्" १२ "व्युत्क्रमाल्लीयते" १३ "लयसङ्ग्रहात्" इति प्र. पाठाः।

भाष्यम्

## ॥ अस्ति तु ॥२॥

अस्त्येव चोत्पत्तिश्रुतिः—" आत्मन आकाशः सम्भूतः " इत्यादि ॥*॥

अनुव्याख्यानम्

महदाद्याश्च जायन्ते पराधीनविशेषिता। इदं सर्वं ससर्जेति जनिमत्त्वमिहोदितम् ॥९॥
अवकाशमात्रमाकाशः कथमुत्पद्यतेऽन्यथा। यद्यनाकाशता पूर्वं किं मूर्तनिबिडं जगत् ॥१०॥
मूर्तसम्पूर्णता चैव यद्यनाकाशता भवेत्। मूर्तद्रव्याणि चाऽकाशे स्थितान्येव हि सर्वदा॥११॥

न्यायविवरणम्

विष्णोरुदरे संविशन्ति " इति तस्योदरे सर्वसङ्ग्रहादिश्रुतिभ्यो[1] नित्यत्वावगमात् तद्देहस्य। अश्रुतत्वाच्चान्यथा ॥१०॥

नचानादित्वाज्जीवस्य पराधीनविशेषाप्राप्तिः। " इदं सर्वमसृजत " इति सर्वस्मिन् गृहीतत्वात्। पराधीनविशेषवत्त्वेऽप्यनादित्वस्याविरोधात् ॥११॥

नच सर्वदेहे स्पर्शज्ञानाद्[2] रसादीनां च तत्रतत्र परिज्ञानाज्जीवस्यानणुत्वम्। उत्क्रान्तिगत्यादेः। आदिशब्देन सूक्ष्मतेजोरूपेण व्याप्त्या स्पर्शादिज्ञानोपपत्तिः। अतोऽणुत्वमनणुत्वं चेति भावः ॥१२॥

नच जीवस्य बहुरूपत्वशक्तावीशेन गुणसाम्यम्। ईशशक्त्यैव बहुरूपत्वादेः ॥१३॥

नच श्रुत्या जीवेश्वरैक्यम्। सर्वमानविरोधात्। श्रुतेः सादृश्यैक्यादिना सावकाशत्वात्। बहुमानविरोध एकस्य दौर्बल्याच्च। धर्मिग्राहिविरोधाच्च[3] ॥१४॥

नचोत्पत्तिमत्त्वाद् विनाशित्वं जीवस्य। अनित्यत्वेऽभीष्टमोक्षाद्यसिद्धेः। नहि पराधीनविशेषवत्त्वमात्रेण विनाशित्वम्। तादृशानामेव नित्यत्वश्रुतिविरोधात् ॥१५॥

नच स्वगुणाननुभूत्यनुपपत्तेः पूर्वं ज्ञानादीनां[4] सामस्त्येनाभावः। पूर्वमव्यक्तानां पश्चात् सुव्यक्त्युपपत्तेः ॥१६॥

नचेश्वरस्यैव कर्तृत्वे कल्पनालाघवम्। जीवस्याकर्तृत्वे शास्त्रवैयर्थ्यात्। तस्यापि कर्तृत्वे शास्त्रार्थसिद्धेश्च ॥१७॥

नच नानाश्रुतेरप्रामाण्यम्। दृष्टभेदानुसारेण तेषामर्थोपपत्तेः[5]। अप्रामाण्यकल्पनस्य विपरीतज्ञानमूलत्वात् ॥१८॥

नच वैचित्र्यमनाभासत्वे कारणम्। जीवानां सामान्यत आभासत्वे[6] विशेषादृष्टाद् वैचित्र्योपपत्तेः ॥ १९ ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे
द्वितीयाध्यायस्य तृतीयः पादः.

---

१ "सर्वसङ्ग्रहणादिश्रुतिभ्यः" २ "सर्वदेहस्पर्शज्ञानात्" ३ "धर्मिग्राहकविरोधाच्च" ४ "पूर्वज्ञानादीनाम्" ५ "तासामर्थोपपत्तेः" ६ "आभासत्वेऽपि" इति प्र. पाठाः।

भाष्यम्

॥ गौण्यसम्भवात् ॥३॥

"अनादिर्वा अयमाकाशः शून्योऽलौकिकः" इत्यादिश्रुतिर्गौणी। अन्यथोत्पत्तिश्रुतिबाहुल्यासम्भवात् ॥*॥

॥ शब्दाच्च ॥४॥

"अथ ह वाव नित्यानि पुरुषः प्रकृतिरात्मा काल इति। अथ यान्यनित्यानि प्राणः श्रद्धा भूतानि भौतिकानीति। यानि ह वा उत्पत्तिमन्ति तान्यनित्यानि। यानि ह वा अनुत्पत्तिमन्ति तानि नित्यानि। नह्येतानि कदाचनोत्पद्यन्ते न लीयन्ते पुरुषः प्रकृतिरात्मा काल इति। अथैतान्युत्पत्तिमन्ति चानुत्पत्तिमन्ति च प्राणः श्रद्धाऽऽकाश इति भागशो ह्युत्पद्यन्ते" इति भाल्लवेयश्रुतेः ॥*॥

॥ स्याच्चैकस्य ब्रह्मशब्दवत् ॥५॥

स्यादेवैकस्योत्पत्तिमत्त्वमनुत्पत्तिमत्त्वं च गौणमुख्यत्वापेक्षया। यथा ब्रह्मशब्दः— "अथ कस्मादुच्यते परं ब्रह्म बृहति बृंहयति चेति" इति श्रुतेः परे ब्रह्मणि मुख्योऽपि गौणत्वेन विरिञ्चादिष्वपि वर्तते। अत एवाब्रह्मत्वं च तेषाम्। एवमत्राप्यनुत्पत्तिमच्छब्दः ॥*॥

॥ प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॥६॥

ब्रह्मणोऽन्यस्य नित्यत्वे "इदं सर्वमसृजत" इत्यादिप्रतिज्ञाहानिः। आकाशस्यापि सर्वस्मादव्यतिरेकात्।

"आत्मा वा इदमेक एवाग्र आसीत्", "सदेव सोम्येदमग्र आसीत्। एकमेवाद्वितीयम्", "इदं वा अग्रे नैव किञ्चनाऽसीत्" इत्यादिश्रुतिभ्यः ॥*॥

॥ यावद्विकारं तु विभागो लोकवत् ॥७॥

विभक्तत्वाच्च विकारित्वं युक्तम्। विकारिण एव हि विभक्ता लोके दृश्यन्ते।

अनुव्याख्यानम्

अत आकाशशब्दोक्तस्तद्देवोऽत्र विनायकः। देहोत्पत्त्या समुत्पन्न इति श्रुत्याऽभिधीयते ॥
॥१२॥ भूतमप्यसितं दिव्यदृष्टिगोचरमेव तु। उत्पद्यतेऽव्याकृतं हि गगनं साक्षिगोचरम्।
प्रदेश इति विज्ञेयं नित्यं नोत्पद्यते हि तत् ॥१३॥ तथाऽपि पूर्तसम्बन्धपरतन्त्रविशेषयुक्।
खमेवोत्पत्तिमन्नाम श्रुतिशब्दविवक्षितम् ॥१४॥ प्रकृतिः पुरुषः काल इत्येते च समस्तशः।
ईशाधीनविशेषेण जन्या इत्येव कीर्तिताः ॥१५॥ कालप्रवाह एवैको नित्यो नतु विशेषवान्।
पुरुषाव्यक्तकालानां रमैवैकाऽभिमानिनी॥१६॥सिसृक्षुत्वविशेषं तत् साक्षाद् भगवदिच्छया।

---

१ "यानि ह वाव" २ "न विलीयन्ते" ३ "भाल्लवेयश्रुतेश्च" ४"परं ब्रह्मेति" ५ "बृंहयति चेति श्रुतेः" ६ "एवमन्यत्राप्यनुत्पत्तिमच्छब्दः" ७ "स इदं सर्वमसृजत" ८ "शब्दिताः" इति प्र.पाठाः।

भाष्यम्

"एकोऽविभक्तः परमः पुरुषो विष्णुरुच्यते। प्रकृतिः पुरुषः कालस्त्रय एते विभागतः। चतुर्थस्तु महान् प्रोक्तः पञ्चमाऽहङ्कृतिर्मता। तद् विभागेन जायन्त आकाशाद्याः पृथक् पृथक्। यो विभागी विकारः स सोऽविकारः परो हरिः। अविभागात् परानन्दो नित्यो नित्यगुणात्मकः। विभागो ह्यल्पशक्तित्वं[1] नहि तत् परमात्मनः" इति च बृहत्संहितायाम् ॥*॥

॥*॥ इति प्रथममधिकरणम् ॥*॥

"अथ ह नित्याश्चानित्याश्च। तेजोऽबन्नान्यकाश इति तान्यनित्यानि। वायुर्वाव नित्यो वायुना हि सर्वाणि भूतानि नेनीयन्ते। अथ ह चेतनाश्चाचेतनाश्च। तेजोऽबन्नान्याकाश इति तान्यचेतनानि। वायुर्वाव चेतनो वायुना हि सर्वाणि भूतानि विश्वायन्ते", "कुविदङ्ग नमसा ये वृधासः पुरा देवा अनवद्यास आसन्। ते वायवे मनवे बाधितायाऽवासयन्नुषसं सूर्येण", "सा वा एषा देवताऽनादिर्योऽयं पवत इति। यस्या[2] नाऽदिर्न मध्यं नान्तो नोदयो न निम्लोचः" इत्यादिश्रुतिभ्यो वायोरनुत्पत्तिरित्यतो ब्रवीति—

॥ एतेन मातरिश्वा व्याख्यातः ॥८॥

एतेन मुख्यामुख्यानुत्पत्तिवचनेन विभक्तत्वाच्च वाय्वनुत्पत्तिश्रुतिरपि व्याख्याता।

"नित्यः परमनित्यश्च तथाऽनित्यः परस्तथा चतुर्धैतज्जगत् सर्वं परानित्यं तु पार्थिवम्। अनित्यानि तु भूतानि नित्यो वायुरुदाहृतः। परस्तु नित्यः पुरुषः प्रकृतिः काल एव च। एतच्चतुष्टयं विष्णुः स्वयं नित्यः परात्परः। प्रतिव्यूह्य व्यूह्य चासावतीत्य च जनार्दनः। धारयत्यनिशं देवो नित्यानन्दैकलक्षणः" इति कौर्मे ॥*॥

॥*॥ इति द्वितीयमधिकरणम् ॥*॥

॥ असम्भवस्तु सतोऽनुपपत्तेः ॥९॥

"असद् वा इदमग्र आसीत् ततो वै सदजायत", "असतः सदजायत" इत्यादिश्रुतिभ्यः

अनुव्याख्यानम्

प्रात्तैव सृष्टेत्युदिता प्रधानं विकृतेरपि ॥१७॥ पुमांसो देहसम्बन्धात् सृष्टिमन्त इतीरिताः ॥*॥ एवं प्रळयकाले[3]ऽपि प्रतिभातपरावरः ॥१८॥ मुख्यवायुर्नित्यसमः शरीरोत्पत्तिकारणात्। पराधीनविशेषेण जनिमानेव शब्दितः ॥१९॥ नैव किञ्चित् ततो जन्मवर्जितं परमादृते। पराधीनविशेषत्वे जन्मनः स्थूलताभवः ॥२०॥ पूर्वशब्दविलोपश्च यदि जन्मेति कीर्त्यते। रमाया नैव जन्मास्ति चैतन्यस्यापि केवलम् ॥२१॥ प्रधानस्य च वेदस्य वेदस्यापीश्वरेच्छया। व्यक्तिर्नाम विशेषोऽस्ति तस्मात् तद्वशतैव हि ॥२२॥ उत्पत्तिरत्र कथिता ॥*॥ स्वतन्त्रत्वात् परात्मनः। नैवोत्पत्तिः कथमपि न स्वतन्त्रं ततोऽपरम् ॥२३॥*॥

---

१ "विभागो ह्यल्पशक्तिः स्यान्न तदस्ति जनार्दन इति बृहत्संहितायाम्" २ "यस्य" ३ "प्रलयकालेऽपि" इति प्र. पाठः।

भाष्यम्

सतोऽप्युत्पत्तिरिति चेत्, न। अनुत्पत्तिरेव सतः। तुशब्देनोक्तव्यवस्थामपाकरोति। नह्यसतः सदुत्पद्यते। अदृष्टत्वादनुपपत्तेः।

"तद् वा एतद् ब्रह्माऽहुर्बृंहति बृंहयति चेति। तद् वा एतदसदाहुर्नह्यासादयति कश्चन[1]। तद् वा एतत् परमाहुः परतो हि तदुदीक्ष्यते" इति श्रुतेरसच्छब्दो ब्रह्मवाची। "देवानां पूर्व्ये युगेऽसतः सदजायतेति। ब्रह्म वा असत् सद् वाव प्राणः। प्राणं वाव महान् सह ओजो बलमित्याचक्षते" इति च पैङ्गिश्रुतिः[2]। "त्वं देवशक्त्यां गुणकर्मयोनौ रेतस्त्वजायां कविरादधेऽजः। ततो वयं सत्प्रमुखा यदर्थे बभूविमाऽत्मन् करवाम किं ते" इति च भागवते[3]। "अजायमानो बहुधा विजायते" इति च। प्रत्यक्षत्वं हरेर्जन्म न विकारः कथञ्चन। पुरुषः प्रकृतिः कालो महानित्यादिषु क्रमात्। विकार एव जननं पुरुषे तद्विशेषणम्। परतन्त्रविशेषो हि विकार इति कीर्तितः" इति च पाद्मे। "अविकारोऽपि भगवान् सर्वशक्तित्वहेतुतः। विकारहेतुकं सर्वं कुरुते निर्विकारवान्। शक्तिशक्तिमतोश्चापि न विभागः[4] कथञ्चन। अविभिन्नाऽपि सेच्छादिभेदैरपि[5] विभाव्यते" इति भागवततन्त्रे ॥*॥

॥*॥ इति तृतीयमधिकरणम् ॥*॥

## ॥ तेजोऽतस्तथा ह्याह ॥१०॥

"वायोरग्निः" इत्यादेर्नान्यत उत्पत्तिर्ग्राह्या। अत एव परात् तदपि जायते। "तत् तेजोऽसृजत" इति ह्याह। "कारणत्वेन" इत्युक्तेऽप्यमुख्यतयाऽन्येषामपि शब्दोक्तत्वात् पुनरुक्तिरुभयकारणत्वनिवृत्त्यर्थम् ॥*॥

॥*॥ इति चतुर्थमधिकरणम् ॥*॥

## ॥ आपः ॥११॥

"ब्रह्मैवेदमग्र आसीत् तदपोऽसृजत तदिदं सर्वम्" इति श्रुतेः "अग्नेरापः" इत्युक्तेऽपि ब्रह्मण एवाबादिसृष्टिः।

"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" इत्यादि च। "कर्ता सर्वस्य वै विष्णुरेक एव न संशयः। इतरेषां तु सत्ताद्या यत एव तदाज्ञया" इति च भविष्यत्पुराणे[6]।

वामने च—

"तत्र तत्र स्थितो विष्णुस्तत्तच्छक्तीः प्रबोधयन्। एक एव महाशक्तिः कुरुते सर्वमञ्जसा" इति।

---

१ "कश्चनेति। तद् वा" २ "इति पैङ्गिश्रुतिः" ३ "इति भागवते" ४ "विभेदः" ५ "सेच्छादिभेदैरपि" ६ "इति भविष्यत्पुराणे" इति प्र. पाठाः।

भाष्यम्

प्रत्यक्षत एव घर्मात् स्वेदादिदृष्टेराप इति पृथग्वचनम् ॥*॥

॥*॥ इति पञ्चममधिकरणम् ॥*॥

"ता आप ऐक्षन्त बह्व्यः स्यामः प्रजायेमहीति । ता अन्नमसृजन्त" इत्यद्भ्योऽन्नसृष्टिः श्रूयते । "अद्भ्यः पृथिवी" इति कुत्रचित् पृथिवीसृष्टिः । अतो विरुद्धत्वादप्रामाण्यमित्यतो वक्ति—

॥ पृथिव्यधिकाररूपशब्दान्तरादिभ्यः ॥१२॥

पृथिवी तत्रान्नशब्देनोच्यते । भूताधिकारत्वात् । कार्ष्ण्यप्रचुरा च पृथिवी । नान्नस्य तथा विशेषः। "आपश्च पृथिवी चान्नम्", "पृथिवी वा अन्नम्", "ता आपोऽन्नमसृजन्त पृथिवी वा अन्नम्" इत्यादिशब्दान्तराच्च । आदिशब्दाद् युक्तिरपौरुषेयत्वेनादोषस्य वाक्यस्य नाप्रामाण्यमित्यादि । कौर्मे च—

"विरोधो वाक्ययोर्यत्र नाप्रामाण्यं तदिष्यते । यथाऽविरुद्धता च स्यात् तथाऽर्थः कल्प्य एतयोः" इति । "रक्तोऽग्निरुदकं शुक्लं कृष्णैव पृथिवी स्वतः। नाभिपद्माभिसम्बन्धात् पीता सेत्यभिधीयते । क्षत्ररक्ताभिसम्बधाद् रक्तोदकबहुत्वतः। शुक्लत्वमेत्येवमेव वर्णान्तरगतिर्भवेत् । विष्णुवीर्याभियोगाच्च पीतत्वं भुव इष्यते । स्वर्णवीर्यो हि भगवाननादिः परमेश्वरः" इति च व्योमसंहितायाम् ॥*॥

॥*॥ इति षष्ठमधिकरणम् ॥*॥

"प्राणानां ग्रन्थिरसि रुद्रो माऽऽविशान्तकस्तेनान्नेनाऽऽप्यायस्व" इत्यादिनाऽन्यः संहर्ता प्रतीयत इत्यतो ब्रूते—

॥ तदभिध्यानादेव तु तल्लिङ्गात् सः ॥१३॥

"तस्याभिध्यानाद् योजनात् तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्तिः" इति बन्धलयस्य तदभिध्याननिमित्तत्वलिङ्गात् तत्कर्तृत्वं प्रतीयते, किमु सादेर्जगत इत्येतस्मादेव संहारकर्ता विष्णुरिति प्रतीयते; किमु—"यमभ्येति भुवनं साम्पराये स नो हरिर्घृतमिहाऽऽयुषेऽस्तु देवः", "य इदं सर्वं विलापयति स हरिः परः परात्मा" इत्यादिश्रुतिभ्य इत्येवशब्दः ।

"स्रष्टा पाता च संहर्ता स एको हरिरीश्वरः । स्रष्टृत्वादिकमन्येषां दारुयोषावदुच्यते । एकदेशक्रिया चात्र नतु सर्वात्मनेरितम् । सृष्ट्यादिकं समस्तं तु विष्णोरेव पराद् भवेत्" इति च स्कान्दे । "निमित्तमात्रमीशस्य विश्वसर्गनिरोधयोः । हिरण्यगर्भः सर्वश्च कालाख्यारूपिणस्तव" इति च भागवते । "स ब्रह्मणा विसृजति स रुद्रेण

---

१ "घर्मात् स्वेदादिदृष्टेः पुनः प्रतिषेधः" इतीयानेव प्र. पाठः । २ "स्याम" इति प्र. पाठः । 'स्यामः' इति छान्दसं रूपम् । यत्र विसर्गबिन्द्वादीनामाधिक्यं तत्राऽधिक्यमर्थे इति हि श्रुतिसम्प्रदायः । अवश्यं चैतदेवं वक्तव्यम् । हृषीकेशतीर्थादिभिः सर्वैरपि प्रतनैर्नियत्या "स्यामः" इत्येव प्रयोगात् । ३ "यथा विरुद्धता न स्यात्" ४ "इति व्योमसंहितायाम्" ५ "सर्वसंहारकर्ता" ६ "बिलापयति" ७ "परमात्मा" ८ "इति स्कान्दे" ९ "इति भागवते" इति प्र. पाठाः ।

भाष्यम्

विला[1]यति सोऽनुत्पत्तिरलय एक एव हरिः परः परानन्दः" इति च महोपनिषदि ॥*॥

॥*॥ इति सप्तममधिकरणम् ॥*॥

"अत एव हि परा[2]दिदं क्रमादुत्पद्यते क्रमाद् विलीयते नासावुदेति नास्तमेति" इति भाल्लवेयश्रुतौ क्रमाल्लयः प्रतीयते। "अक्षरात् परमादेव सर्वमुत्पद्यते क्रमात्। व्युत्क्रमाद् विलयश्चैव तस्मिन्नेव परात्मनि" इति चतुर्वेदशिखायां व्युत्क्रमाल्लयः प्रतीयते। अत आह—

॥ विपर्ययेण तु क्रमोऽत उपपद्यते च ॥१४॥

क्रमवचनमपि विपरीतक्रमापेक्षया।

"कर्ता प्राणादिकस्यास्य हन्ता भूम्यादिकस्य च। यः क्रमाद् व्युत्क्रमाच्चैव स हरिः पर उच्यते" इत्यत एव भाल्लवेयश्रुतिवचनात्। "अनुरूपः क्रमः सृष्टौ प्रतिरूपो लये क्रमः। इति क्रमेण भगवान् सृष्टिसंहा[3]रकृद्धरिः" इति च पाद्मे।

पूर्वेषां पूर्वेषां सामर्थ्याधिक्यादुपपद्यते च। वामने च—

"पूर्वे पूर्वे यतो विष्णोः सन्निधानं क्रमाधिकम्। सामर्थ्याधिक्यमेतेषां पश्चादेव लयस्तथा। व्याप्तिश्चाभ्यधिका तेषामत एव न संशयः" इ[4]ति ॥*॥

॥ अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥१५॥

"प्राणान्मनो मनसश्च विज्ञानम्", "यच्छेद् वाङ् मनसी प्राज्ञस्तद् यच्छेज्ज्ञान आत्मनि" इति लिङ्गाद् विज्ञानमनसी अन्तरा विपरीतक्रम इति चेत्, न। विशेषप्रमाणाभावात् ॥*॥

॥ चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥१६॥

"मनसश्च विज्ञानम्" इति व्यपदेशश्चराचरेष्वालोचनाद् विज्ञानं भवतीति भागापेक्षया स्यात्। न विज्ञानतत्त्वापेक्षया। स्कान्दे च—

"परादव्यक्तमुत्पन्नमव्यक्तात्तु महांस्तथा। विज्ञानतत्त्वं महतः समुत्पन्नं चतुर्मुखात्। विज्ञानतत्त्वात्तु मनो मनस्तत्त्वाच्च खादिकम्। एवं बाह्या परा सृष्टिरन्तस्तद्व्यक्त्यपेक्षया। विपरीतक्रमो ज्ञेयो यस्मादन्ते हरेर्दृशिः" इति ॥*॥

॥*॥ इत्यष्टमम[5]धिकरणम् ॥*॥

॥ नाऽऽत्मा[ऽ]श्रुतेर्नित्यत्वाच्च ताभ्यः ॥१७॥

"स इदं सर्वं विलाप्यान्तस्तमसि निलीनस्तद् विलाप्य व्युत्तिष्ठते स इदं सर्वं विसृजति

---

१ "विलापयति" २ "हीदं परात्" ३ "विभुः" इति प्र. पाठः। ४ "इति च" इति प्र. पाठाः। प्र. पाठे अत्राधिकरणपूर्तिः। इतः परं पञ्चदशषोडशे सूत्रे नवममधिकरणम्। न्यायविवरणे चैवम्। ५ प्र. पाठेऽत्र नवममधिकरणम्।

भाष्यम्

विस्थापयति प्रस्थापयत्याच्छादयति प्रकाशयति विमोचयत्येक एव" इति श्रुतेः परमात्माऽपि न लीयते।

अश्रुतत्वाद् ब्रह्मलयस्य। निलीनशब्देनापिहितत्वमुच्यते—

"तुच्छयेनाऽभ्वपिहितं यदासीत्" इति श्रुतेः। "स एतस्मिंस्तमसि निलीनः प्रकृतिं पुरुषं कालं चानुपश्यति नैनं पश्यति कश्चन" इति च पैङ्गिश्रुतिः।[2] "नित्यो नित्यानां चेतनश्चेतनानाम्", "स नित्यो निर्गुणो विभुः परमः परात्मा"[3], "नित्यो विभुः कारणो लोकसाक्षी परो गुणैः सर्वदृक्छाश्वतश्च" इत्यादिश्रुतिभ्यो नित्यत्वाच्च ॥*॥

॥*॥ इति नवममधिकरणम्[4] ॥*॥

"नित्यो नित्यानाम्" इति जीवस्यापि नित्यत्वमुक्तम्। "सर्वे एत आत्मानो व्युच्चरन्ति" इत्युत्पत्तिरुच्यते। अतो विरोध इत्यत आह—

॥ ज्ञोऽत एव ॥१८॥

जीवोऽप्यत एव परमेश्वरादुत्पद्यते। शब्दादेव।

"ते वा एते चिदात्मानोऽविनष्टाः परं ज्योतिर्निविशन्त्यविनष्टा एवोत्पद्यन्ते न विनश्यन्ति कदाचन" इति च काषायणश्रुतिः।[5]

युक्तेश्च[6]। नित्यस्यापि हि जीवस्योपाध्यपेक्षयोत्पत्तिर्युज्यते।

"उत्पद्यन्ते चिदात्मानो नित्यान्नित्याः परात्मनः। उपाध्यपेक्षया तेषामुत्पत्तिरपि गीयते" इति च व्योमसंहितायाम् ॥*॥

॥*॥ इति दशममधिकरणम्[7] ॥*॥

"व्याप्ता ह्यात्मानश्चेतना निर्गुणाश्च सर्वात्मानः सर्वरूपा अनन्ताः" इति काषायणश्रुतौ व्याप्तत्वं प्रतीयते। "अणुर्ह्येष आत्मा यं वा एते सिनीतः पुण्यं चापुण्यं च" इति गौतमश्रुतावणुत्वमित्यतो[8] विरोध इत्यतो ब्रवीति—

॥ उत्क्रान्तिगत्यागतीनाम् ॥१९॥

हेतूनां सकाशादणुरेव।

"सोऽस्माच्छरीरादुत्क्रम्यामुं लोकमभिगच्छति। अमुष्मादिमं लोकमागच्छति। स गर्भीभवति स प्रसूयते स कर्म कुरुते" इति पौष्यायणश्रुतेः ॥*॥

तत्र स्वातन्त्र्यप्रतीतेः, "एकः प्रसूयते जन्तुरेक एव प्रमीयते। एकोऽनुभुङ्क्ते सुकृतमेक एव च

---

१ "विसृजति विलापयति विस्थापयति" २ "इति पैङ्गिश्रुतिः" ३ "परः परमात्मा" इति प्र. पाठाः। ४ प्र. पाठेऽत्र दशममधिकरणम्। ५ "इति काषायणश्रुतिः" इति प्र. पाठः। ६ प्र. पाठे "युक्तेश्च" इत्येतदेकोनविंशं सूत्रम्। परन्तु हृषीकेशतीर्थादिभिः प्राचीनकोशलेखकैरिदं भाष्यवचनत्वेनैवोल्लिखितम्। तत्त्वदीपिका चात्र बहुलं संवदते। "नित्यस्यापि" इत्यादिभाष्यवचनस्य "उत्तरभाष्येण" इत्यवतरणात्। ७ प्र. पाठेऽत्रैकादशमधिकरणम्। ८ "पुण्यं च पापं चेति गौपवनश्रुतौ" इति प्र.पाठः।

भाष्यम्

दुष्कृतम्" इत्यादेश्च स्वयमेवेत्यतो वक्ति—

॥ स्वात्मना चोत्तरयोः ॥२०॥

"स एतेनैव स्वात्मना परेणेमं गर्भमनुप्रविशति परेण जायते परेण कर्म कुरुते परेण नीयते परेणोन्नीयते तं वा एतमभिवदन्ति स्वात्मेत्येष ह्यानन्दमादत्ते[1]। एष ह्येनं जीवमभिजीवयत्येष उद्गमयत्येष गमयत्येष आगमयेति[2]" इत्युत्तरयोर्वाक्ययोः परमात्मनैवोत्क्रान्त्यादयः ॥*॥

॥ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥२१॥

"व्याप्ता ह्यात्मानश्चेतना निर्गुणाश्च" इति व्याप्तिश्रुतेर्नाणुर्जीव इति चेत्, न। "स आत्मेदं सृजति स द्विधेदं बिभर्त्यन्तर्बहिश्च स बहुधेदमनुप्रविश्याऽत्मनोऽभिनयति स आत्मा स आत्मानः स ईशः स विष्णुः स परः परोवरीयान्" इति परमात्माधिकारत्वात्।

"एकशब्दैर्द्विशब्दैश्च बहुशब्दैश्च केशवः। एक एवोच्यते वेदैस्तावता नास्य भिन्नता" इति च भविष्यत्पुराणे[3]। "तदयं प्राणोऽधितिष्ठति। तदुक्तमृषिणाऽऽ तेन यातम्[4]" इत्यादि च ॥*॥

॥ स्वशब्दोन्मानाभ्यां च ॥२२॥

"एषो ह्यात्माऽप्युद्गतो मानशक्तेस्तथाऽप्यसौ प्रमितिं याति वेदैः। पूर्णोऽचिन्त्यः सर्ववेदैकयोनिः सर्वाधीशः सर्ववित् सर्वकर्ता" इति वाक्यशेष आत्मशब्दोन्मानाभ्यां च। "आत्माऽमेयः परं ब्रह्म परानन्दादिकाभिधाः। वदन्ति विष्णुमेवैकं नान्यत्राऽसां गतिः क्वचित्" इति च कौर्मे ॥*॥

॥ अविरोधश्चन्दनवत् ॥२३॥

अणोरपि जीवस्य सर्वशरीरव्याप्तिर्युज्यते। यथा हरिचन्दनविप्लुष एकदेशपतितायाः सर्वशरीरव्याप्तिः।

"अणुमात्रोऽप्ययं जीवः स्वदेहं व्याप्य तिष्ठति। यथा व्याप्यशरीराणि हरिचन्दनविप्लुषः" इति च ब्रह्माण्डपुराणे ॥*॥

॥ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥२४॥

सम्यगसम्यगवस्थानविशेषाद् युज्यते चन्दनस्येति चेत्, न। "हृदि ह्येष आत्मा" इति जीवस्यापि तथाऽभ्युपगमात् ॥*॥

---

१ प्र. पाठे "स्वात्मेति।" इति वाक्यपूर्तिः। ततः परं "एष ह्यानन्दमादत्ते" इत्यादि द्वितीयवाक्यम्। २ "उद्गमयत्येष आगमयति" इति प्र. श्रुतिपाठः "गमयत्येषः" इतीयन्तं भागं प्रजहाति। ३ "इति भविष्यत्पुराणे" ४ "तदुक्तमृषिणा आ तेन यातम्" इति प्र. पाठौ।

भाष्यम्

॥ गुणाद् वाऽऽलोकवत् ॥२५॥

यथाऽऽलोकस्य प्रकाशगुणेन व्याप्तिर्ज्योतीरूपेणाव्याप्तिरेवं चिद्गुणेन व्याप्तिर्जीवरूपेणाव्याप्तिरिति वा। स्कान्दे च—

"असम्यक् सम्यगिति च ह्यवस्थाभेदतः सुराः। व्याप्त्यव्याप्तियुतास्त्वन्ये चिद्गुणेनैव नान्यथा। चिद्गुणस्य स्वरूपत्वात् तद्व्याप्तिश्चेति युज्यते। शक्तियोगात् सुराणां तु विविधा च व्यवस्थितिः" इति ॥*॥

॥*॥ इत्येकादशमधिकरणम्[1] ॥*॥

"स नित्यो निरवयवः पुण्ययुक् पापयुक् च स इमं लोकममुं चाऽवर्तते स विमुच्यते स एकधा न सप्तधा न दशधा[2]" इति गौपवनश्रुतावेकस्याबहुत्वं प्रतीयते। "स पञ्चधा सप्तधा दशधा भवति शतधा च सहस्रधा[3] स गच्छति स मुच्यते" इति पाराशर्यायणश्रुतौ बहुरूपत्वं प्रतीयते।

अतो विरोधं परिहरति—

॥ व्यतिरेको गन्धवत् तथाच दर्शयति ॥२६॥

यथा पुष्पाद् गन्धः पृथग् गच्छति, एवमंशिनो जीवादंशाः पृथग् गच्छन्ति।

"अथैक एव सन् गन्धवद् व्यतिरिच्यतेऽथैकीभवत्यथ बद्धीभवति तं यथा यथेश्वरः प्रकुरुते तथा भवति[4] सोऽचिन्त्यः परमो गरीयान्" इति शाण्डिल्यश्रुतिः। "अचिन्त्येशशक्त्यैव ह्येकोऽवयववर्जितः। आत्मानं बहुधा कृत्वा क्रीडते योगसम्पदा" इति च पाद्मे ॥*॥

॥*॥ इति द्वादशमधिकरणम्[5] ॥*॥

"तत्त्वमसि", "अहं ब्रह्मास्मि" इत्यादिषु जीवस्य परेणाभेदः प्रतीयते। "नित्यो नित्यानां चेतनश्चेतनानाम्", "द्वा सुपर्णा" इत्यादिषु भेदः। अत उच्यते—

॥ पृथगुपदेशात् ॥२७॥

"भिन्नोऽचिन्त्यः परमो जीवसङ्घात् पूर्णः परो जीवसङ्घो ह्यपूर्णः। यतस्त्वसौ नित्यमुक्तो ह्ययं च बन्धान्मोक्षं तत एवाभिवाञ्छेत्" इति सोपपत्तिककौशिकश्रुतेर्भिन्न एव जीवः ॥*॥

अनुव्याख्यानम्

अच्छेद्यस्यापि जीवस्य विभागं बहुधा हरिः। कृत्वा भोगान् प्रदायैव चैक्यमापादयेत् पुनः ॥ ॥२४॥ अत ईशवशं सर्वं चेतनाचेतनं जगत्। अविभागं विभागाय यदा नयति केशवः। किमशक्यं परेशस्य तदेति ह्यभिधीयते ॥२५॥*॥ एवं स्थितेऽपि जीवैक्यं केचिदाहुः परा-

---

१ प्र. पाठेऽत्र द्वादशमधिकरणम्। २ "न दशधा न शतधा" ३ "स पञ्चधा स सप्तधा स दशधा भवति स शतधा च सहस्रधा" ४ "तथा तथा भवति" इति प्र. पाठाः। ५ प्र. पाठे त्रयोदशमधिकरणम्।

त्मना। तद् योऽहमितिपूर्वाभिः श्रुतिभिश्चानुमाबलात् ॥२६॥ न तद् युक्तं यतो विष्णुः पृथगेवाभिधीयते। प्रज्ञानेत्रोऽलोक इति मुक्तौ भेदोऽभिधीयते। एतमानन्दमित्यन्या परमं साम्यमित्यपि ॥२७॥ इदं ज्ञानमपाश्रित्य मम साधर्म्यमागताः। सर्गेऽपि नोपजायन्ते प्रळये[1] न व्यथन्ति च ॥२८॥ उपसम्पद्य तज्ज्योतिः[2] स्वरूपेणाभिपद्यते। तत्र पर्येति जक्षंश्च क्रीडन्नपि सदा सुखी ॥२९॥ आचक्ष्व मे परं मोक्षं धीरा यं प्रवदन्ति तम्। इत्युक्त आह वाग्देवी परं मोक्षं प्रजापतेः ॥३०॥ शाखां शाखां महानद्यः संयान्ति परितःस्रवाः। धानापूपा मांसकामाः सदा पायसकर्दमाः ॥३१॥ यस्मिन्नग्निमुखा देवाः सेन्द्राः सहमरुद्गणाः। ईजिरे क्रतुभिः श्रेष्ठैस्तदक्षरमुपासते ॥३२॥ प्रविशन्ति परं देवं मुक्तास्तत्रैव भोगिनः। निर्गच्छन्ति यथाकामं परेशेनैव चोदिताः ॥३३॥ भेददृष्ट्याऽभिमानेन निःसङ्गेनापि कर्मणा। कर्तृत्वात् सगुणं ब्रह्म पुरुषं पुरुषर्षभम् ॥३४॥ स सङ्कल्प्य पुनः काले कालेनेश्वरमूर्तिना। जातेऽगुणव्यतिकरे यथापूर्वं प्रजायते ॥३५॥ ऋचां त्वः पोषमास्ते च परेण प्रेरिताः सदा। यत्कामस्तत् सृजत्यद्धैवाऽत्मना तत् सृजत्यपि ॥३६॥ सहैव ब्रह्मणा कामान् भुङ्क्ते निस्तीर्णतद्गुणः। दुःखादींश्च परित्यज्य जगद्व्यापारवर्जितः॥३७॥ भुङ्क्ते भोगान् सहैवोच्चानित्याद्यागममानतः। मुक्तस्य भेदावगतेः कथमेव ह्यभिन्नता ॥३८॥ जीवेशयोर्नानुमा च तदभेदं प्रमापयेत्। मिथ्यैव भेदो विमतो भेदत्वाच्चन्द्रभेदवत्। इति चेत् साध्यधर्मोऽयं सन्नसन् वा नवोभयम्॥ ॥३९॥ यदि सन्नपसिद्धान्तः स एवासन्निर्तीरिते। नोभयं चेन्न सिद्धं तदिति मानस्य दूषणम्॥ ॥४०॥ नच मानान्तरेणैतच्छक्यं साधयितुं क्वचित्। अनुमानेन चेत् सैव ह्यनवस्था भविष्यति ॥४१॥ नचाऽगमस्तदर्थोऽस्ति नासदासीन्न तद् वदेत्। परिशेषादनिर्वाच्यं यदि सिद्ध्येत् परात्मनः ॥४२॥ अनिर्वाच्यत्वमेव स्यात् परिशिष्टो ह्यसौ तदा। नचान्य आगमस्तत्र सदसत्प्रतियोगिनि ॥४३॥ नच प्रत्यक्षमत्रास्ति नचार्थापत्तिरिष्यते। बाधायोगात् सत इति बाधाभावत एव हि। इष्टापत्तिर्नहि भ्रान्तावपि बाधोऽधिगम्यते[3] ॥४४॥ विषयस्य कुतो बाधो विद्यमानं हि बाध्यते। नहि वन्ध्यासुतो वध्यो यज्ञदत्तो हि वध्यते[4] ॥४५॥ बाधायोगः[5] सत इति व्यतिरेषा क्व दृश्यते। कश्चायं बाध उद्दिष्टो नहि नाशोऽसतो भवेत्। निवृत्तिश्चाप्रवृत्तस्य कथमेवोपपद्यते ॥४६॥ नासीदस्ति भविष्यच्च तदिति ज्ञानमेयता। यदि बाधस्तदाऽसत्त्वं तेनैवाङ्गीकृतं पुनः ॥४७॥ प्रतीतिर्नासत इति वदन्नङ्गीकरोति ताम्। निषेधो ह्यप्रतीतस्य कथञ्चिन्नोपपद्यते ॥४८॥ नचोपमा भवेदत्र प्रत्यक्षात् सत्त्वमेव च। शास्त्रगम्यपरेशानाद् भेदः स्वात्मन ईयते ॥४९॥ अनुभूतिविरोधेन कथमेकत्वमुच्यते। किञ्चित्कर्ता च दुःखीति सर्वैरेवानुभूयते ॥५०॥ सर्वज्ञो भगवान् विष्णुः सर्वशक्तिरिति श्रुतः। अनुभूताद्धि भेदेन श्रुतिरेषा वदत्यमुम्॥५१॥उपजीव्यविरुद्धं तु कथमैक्यं श्रुतिर्वदेत्। अप्रामाण्यं यदा भेदवाचकस्य भविष्यति ॥५२॥ स एव धर्मिणो ग्राही तदभेदः कथं भवेत्। यत् स्वरूपग्रहे मानं

---

१ "प्रलये" २ "उपसम्पद्यते ज्योतिः" ३ "बाधोऽवगम्यते" ४ "बाध्यो यज्ञदत्तो हि बाध्यते"
५ "बाधायोगात्" इति प्र.पाठाः।

भाष्यम्

## ॥ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥२८॥

ज्ञानानन्दादिब्रह्मगुणा एवास्य यतः सार[1]स्वरूपमतोऽभेदव्यपदेशः। यथा सर्वगुणात्मकत्वात् सर्वात्मि[2]त्वं ब्रह्मण उच्यते—"सर्वं खल्विदं ब्रह्म" इति। भविष्यत्पर्वणि च—

"भिन्ना जीवाः परो भिन्नस्तथाऽपि ज्ञानरूपतः। प्रोच्यन्ते ब्रह्मरूपेण वेदवादेषु सर्वशः" इति ॥*॥

॥*॥ इति त्रयोदशमधिकरणम्[3] ॥*॥

अनुव्याख्यानम्

तद्धर्मे न कथं भवेत् ॥५५॥ एकविज्ञानविज्ञप्त्या द्वयं मानं भविष्यति। न चेदेकम[4]मानं तद् द्वयमप्यत्र नो भवेत्॥५४॥ धर्मिग्राहिविरोधस्तु तस्मान्मानस्य दूषणम्। नोपजीव्यो ह्यभेदोऽत्र क्वचिद् भेदश्रुतेर्बलात् ॥५५॥ नच मानान्तरोपेयं ब्रह्म तद् भवति क्वचित्। येन मानेन चोपेयं भेदस्तेनावगम्यते ॥५६॥ सर्वज्ञानमयैवेशो यद्युपेयः कथञ्चन। सर्वज्ञत्वगुणेनैव तया भेदोऽवगम्यते ॥५७॥ न दुःखानुभवः क्वापि मिथ्यानुभवतां व्रजेत्। नहि बाधः क्वचिद् दृष्टो दुःखाद्यनुभवस्य तु ॥५८॥ यदि दुःखानुभूतिश्च भ्रान्तिरित्यवसीयते। अदुःखिताश्रुतिः केन न भ्रान्तिरिति गम्यते ॥५९॥ श्रुतिस्वरूपमर्थश्च मानेनैवावसीयते। तच्चेन्मानं गृहीतं ते किं दुःखानुभवे भ्रमः ॥६०॥ नच बाधविशेषोऽस्ति यदबाधितमेव तत्। बाधो यद्यनुभूतेऽर्थे कथं निर्णय ईयते ॥६१॥ कोऽपि ह्यर्थो न निश्चेतुं शक्यते भ्रमवादिना। भ्रमत्वमभ्रमत्वं च यदैवानुभवोपगम्। एकस्य भ्रमता तत्र परस्याभ्रमता कुतः॥६२॥ भ्रमत्वमभ्रमत्वं च सर्वं वेद्यं हि साक्षिणा। स चेत् साक्षी क्वचिद् दुष्टः कथं निर्णय ईयते ॥६३॥ विशेषाः सर्व एवैते साक्षिप्रत्यय[5]गोचराः। ऊरीकृत्य च तान् सर्वान् व्यवहारः प्रवर्तते। साक्षिणो व्यवसायी तु व्यवहारोऽभिधीयते ॥६४॥ तस्मात् सर्वप्रसिद्धस्य व्यवहारस्य सिद्धये। साक्षी निर्दोष एवैकः सदाऽङ्गीकार्य एव नः ॥६५॥ शुद्धः साक्षी यदा सिद्धो दुःखित्वं वार्यते कथम्। उपजीव्यप्रमाणं तद् भेदग्राहकमेव हि। अतो जीवेशयोर्भेदः श्रुतिसामर्थ्यसुस्थिरः ॥६६॥ तथाऽपि तु चिदानन्दपूर्वास्तत्सदृशा गुणाः। सारस्वरू[6]पमस्यापि मुक्तावप्यवशिष्यते ॥६७॥ अतोऽभेद वदेवैताः श्रुतयः प्रवदन्ति हि। पौराणानि च वाक्यानि सादृश्याभेदसंश्रयात्॥६८॥सादृश्याच्च प्रधानत्वात् स्वातन्त्र्यादपिचाभिदाम्। आहुरीशेन जीवस्य न स्वरूपाभिदां क्वचित् ॥६९॥

---

१ "सारः स्वरूपम्" इति प्र. पाठः। "सारस्वरूपं मुक्तौ यदवशिष्यते" इति प्राचीनटीका। २ "सर्वात्मकत्वम्" इति प्र. पाठः। ३ प्र. पाठे चतुर्दशमधिकरणम्। ४ "न चेदकं प्रमाणम्" इति प्र. पाठः। प्राचीनपाठस्यायमर्थः—अत्र धर्मधर्मिग्राहकयोर्मध्ये धर्मावबोधकं यदेकं ज्ञानं तत् न चेत्, मानं न चेत्, मानमिति पूर्ववाक्यादावर्तते, तत् तर्हि द्वयमपि अमानमिति नोऽस्माकमापादनीयं भवेत्। अथच, न चेत्, द्वयं मानं न चेत्, किन्तु तत्रैकममानमिति यदि तत् तर्हि तद् द्वयमपि मानं नो भवेदित्यापाद्यते चेत् किमुत्तरम् इत्यादि। ५ "साक्षिप्रत्यक्षगोचराः" ६ "सारः स्वरूपमस्यापि" इति प्र. पाठौ।

भाष्यम्

जीवस्याप्युत्पत्तिरुक्ता। अतस्तस्य "सोऽनादिना पुण्येन पापेन चानुबद्धः परेण निर्मुक्त आनन्त्याय कल्प्यते[1]" इत्यनादिकर्मसम्बन्ध आनन्त्याप्तिश्च[2] न युज्यत इत्यत आह —

॥ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥२९॥

यावत् परमात्मा तिष्ठत्यनाद्यनन्तत्वेनैवं जीवोऽपि।

"नित्यः परो नित्यो जीवोऽनित्यास्तस्य धातवोऽत उत्पद्यते च म्रियते च विमुच्यते च" इति चाऽग्निवेश्यश्रुतिः। आत्मा नित्यः सुखदुःखे त्वनित्ये जीवो नित्यो धातुरस्य त्वनित्यः" इति च भारते ॥*॥

॥*॥ इति चतुर्दशमधिकरणम्[3] ॥*॥

"विज्ञानात्मा सह देवैश्च सर्वैः", "स आनन्दः स बलः स ओजः स परेणामुं लोकं नीयते स विमुच्यते" इति जीवस्य ज्ञानानन्दादिरूपत्वमुच्यते। "स दुःखाद् विमुक्त आनन्दीभवति सोऽज्ञानाद् विमुक्तो ज्ञानीभवति सोऽबलाद् विमुक्तो बलीभवति स नित्यो निरातङ्कोऽवतिष्ठते" इति पैङ्गिश्रुतावनानन्दादिरूपत्वं प्रतीयते।

अत आह —

॥ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥३०॥

यथा बालस्य सदेव पुंस्त्वं यौवनेऽभिव्यज्यते, एवं सतामेवाऽनन्दादीनां व्यक्त्यपेक्षया तदुक्तिः।

"बलमानन्द ओजश्च सहो ज्ञानमनाकुलम्। स्वरूपाण्येव जीवस्य व्यज्यन्ते परमाद् विभोः" इति च गौपवनश्रुतिः ॥*॥

॥ नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॥३१॥

व्यक्त्यनङ्गीकारे देवानां नित्योपलब्धिरानन्दादीनाम्, असुराणां नित्यानुपलब्धिर्मनुष्याणां नित्योपलब्ध्यनुपलब्धी च प्रसज्यन्ते[4]।

"नित्यानन्दो नित्यज्ञानो नित्यबलः परात्मा[5] नैवमसुरा एवमनेवं च मनुष्याः" इत्याग्निवेश्यश्रुतिः[6]।

अनुव्याख्यानम्

स्थानैक्यमैकमत्यं च मुक्तस्य तु विशिष्यते। सादृश्यं च विशेषेण जडानां द्वयमेव तु।
भवेत् सादृश्यमत्यल्पं तृतीयं परमात्मना ॥७०॥ ईशरूपक्रियाणां च गुणानामपि सर्वशः।
तथैवावयवानां तत्स्वरूपैक्यं तु मुख्यतः ॥७१॥ यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति। एवं
धर्मान् पृथक् पश्यंस्तानेवानुविधावति। इति श्रुतेर्नोभयं च भेदाभेदाख्यमिष्यते ॥७२॥
एकमेवाद्वितीयं नेह नानास्ति किञ्चन[7]। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥७३॥
इति श्रुतावविवेत्यस्माद् भेदाभेदनिराकृतिः। इवोभये च सादृश्य इति वाक् शब्दनिर्णये ॥७४॥*॥

---

१ "कल्पते" २ "आनन्त्यावाप्तिश्च" इति प्र. पाठौ। ३ प्र. पाठे पञ्चदशमधिकरणम्। ४ "मनुष्याणां च नित्योपलब्ध्यनुपलब्धी प्रसज्येते" ५ "परमात्मा" ६ "इति ह्याग्निवेश्यश्रुतिः" ७ "एकमेवाद्वितीयं तन्नेह नानाऽस्ति" इति प्र. पाठाः।

भाष्यम्

भविष्यत्पर्वणि च—

"नित्यानन्दज्ञानबला देवा नैवं तु दानवाः। दुःखोपलब्धिमात्रास्ते मानुषास्तूभयात्मकाः। तेषां यदन्यथा दृश्यं तदुपाधिकृतं मतम्। विज्ञानेनाऽत्मयोग्येन निजरूपे व्यवस्थितिः सम्यग्ज्ञानं तु देवानां मनुष्याणां विमिश्रितम्। विपरीतं च[१] दैत्यानां ज्ञानस्यैवं व्यवस्थितिः" इति ॥*॥

॥*॥ इति पञ्चदशमधिकरणम् ॥*॥

ईश्वरस्यैव कर्तृत्वमुक्तम्। "यत् कर्म कुरुते तदभिसम्पद्यते" इति जीवस्योपलभ्यते[२]। अत आह—

॥ कर्ता शास्त्रार्थवत्त्वात् ॥३२॥

जीवस्य कर्तृत्वाभावे शास्त्रस्याप्रयोजकत्वप्राप्तेर्जीवोऽपि कर्ता ॥*॥

॥ विहारोपदेशात् ॥३३॥

"स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वाऽज्ञातिभिर्वा" इत्यादि[३] ॥*॥

॥ उपादानात् ॥३४॥

साधनाद्युपादानप्रतीतेश्च ॥*॥

॥ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥३५॥

"आत्मानमेव लोकमुपासीत" इति क्रियायां व्यपदेशाच्च। अन्यथा 'आत्मैव लोकम्' इति निर्देशः स्यात् ॥*॥

तर्हि कथमीश्वरस्यैव कर्तृत्वमित्यतो वक्ति—

॥ उपलब्धिवदनियमः ॥३६॥

यथा ज्ञान इदं ज्ञास्यामीत्यनियमः प्रतीयते, एवं कर्मणि[४]। "य आत्मानमन्तरो यमयति" इति च श्रुतिः ॥*॥

कुतः?—

॥ शक्तिविपर्ययात् ॥३७॥

अल्पशक्तित्वाज्जीवस्य ॥*॥

॥ समाध्यभावाच्च ॥३८॥

समाधानाभावाच्चास्वातन्त्र्यं प्रतीयते ॥*॥

अतः—

॥ यथा च तक्षोभयथा ॥३९॥

यथा तक्ष्णः कारयितृनियतत्वं कर्तृत्वं च विद्यते, एवं जीवस्यापि ॥*॥

---

१ "विपरीतं तु" २ "जीवस्याप्युपलभ्यते" ३ "इत्यादि मोक्षेऽपि" ४ "एवं कर्मण्यपि जीवस्य" इति प्र. पाठाः।

भाष्यम्

॥ परात्तु तच्छ्रुतेः ॥४०॥

सा च कर्तृत्वशक्तिः परादेव ।

"कर्तृत्वं करणत्वं च स्वभावश्चेतना धृतिः। यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षया"
इति हि पैङ्गिश्रुतिः ॥*॥

॥ कृतप्रयत्नापेक्षस्तु विहितप्रतिषेधावैयर्थ्यादिभ्यः ॥४१॥

ततोऽप्रयोजकत्वं शास्त्रस्य नाऽपद्यते । कृतप्रयत्नापेक्षत्वात् तत्प्रेरकत्वस्य । आदिशब्देना-वैषम्यादि[1] ।

"पूर्वकर्म प्रयत्नं च संस्कारं चाप्यपेक्ष्य तु । ईश्वरः कारयेत् सर्वं तच्चेश्वरकृतं स्वयम्[2] । अनादित्वाददोषश्च पूर्णशक्तित्वतो हरेः" इति भविष्यत्पर्वणि । "एतदेवं नचाप्ये-वमेतदस्ति च नास्ति च" इति च मोक्षधर्मे[3] ॥*॥

॥*॥ इति षोडशमधिकरणम्[4] ॥*॥

"अंशा एव हीमे जीवा अंशी हि परमेश्वरः । स्वयमंशैरिदं सर्वं कारयत्यचलो हरिः" इति गौपवनश्रुतावंशत्वं जीवस्योपलभ्यते। "नैवांशो न सम्बद्धो[5] नापेक्ष्यो जीवः परस्य। तथाऽपि तु यथायोगं फलदः प्रभुरेकराट्। न नियम्यः स कस्यापि स सर्वस्य नियामकः" इति च भाल्लवेयश्रुतौ ।

अतो ब्रवीति—

॥ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥४२॥

"मां रक्षतु विभुर्नित्यं पुत्रोऽहं परमात्मनः", "अवः परेण पितरं यो अस्यानुवेद[6]", "यस्तद् वेद स पितुष्पिताऽसत्", "यस्ता विजानात् स पितुष्पिताऽसत्", "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्य-नश्नन्नन्यो अभिचाकशीति" इत्यादिना[7] नानाव्यपदेशादंशो जीवः ।

अनुव्याख्यानम्

भेदस्य मुक्तौ वचनादपि तत्पक्षनिग्रहः। चेतनत्वादिसादृश्यं यद्यभेद इतीष्यते। अङ्गीकृतं तदस्माभिर्न स्वरूपैकता क्वचित् ॥७५॥ न केनचिदभेदोऽस्ति भेदाभेदोऽपिवा क्वचित्। समुदायमृते विष्णोः स्वगुणादीन् विनाऽपि वा ॥७६॥ इति श्रुतेर्न तस्यास्ति भेदाभेदोऽपि केनचित्। अभेदश्रुतयोंऽशत्वात् सादृश्यं चांशताऽस्य तु ॥७७॥ अंशस्तु द्विविधो ज्ञेयः

---

१ "आदिशब्देन वैषम्यादि" इति प्राचीनकोशेषु पठ्यते। मात्रास्खलनं स्यादिति सम्भाव्यते। २ "मतम्" ३ "एतदस्ति नचास्ति चेति मोक्षधर्मे" इति प्र.पाठौ। ४ प्र. पाठे सप्तदशमधिकरणम्। ५ "न सम्बन्धः" इति प्र. पाठः। ६ प्र. पाठे इतः परम्—"पर एनाऽवरेण" इत्यधिकं पठ्यते। ७ "द्वा सुपर्णा सयुजा सखायेत्यादिना" इति प्र. पाठः।

भाष्यम्

तथाच पाराशर्यायणश्रुतिः—

"अंशो ह्येष परस्य योऽयं पुमानुत्पद्यते च म्रियते च नाना ह्येनं व्यपदिशन्ति पितेति पुत्रेति भ्रातेति च सखेति च[1]" इति। "अन्यः परोऽन्यो जीवो नासावस्य कुतश्चन नायं तस्यापि कश्चन" इत्यन्यथा च काषायणश्रुतिः। "ब्रह्म दाशा ब्रह्म कितवा ब्रह्मैवेमे दासाः" इत्यभेदेनाप्येकेऽधीयते।

तथाचाऽग्निवेश्यश्रुतिः—

"अंशो ह्येष परस्य भिन्नं ह्येनमधीयिरे[2]ऽभिन्नं ह्येनमधीयिरे" इति।

वाराहे च—

"पुत्रभ्रातृसखित्वेन स्वामित्वेन यतो हरिः। बहुधा गीयते वेदैर्जीवोंऽशस्तस्य तेन तु। यतो भेदेन तस्यायमभेदेन च गीयते। अतश्चांशत्वमुद्दिष्टं भेदाभेदौ न मुख्यतः" इति ॥*॥

॥ मन्त्रवर्णात् ॥४३॥

"पादोऽस्य विश्वा भूतानि" इति ॥*॥

॥ अपि स्मर्यते ॥४४॥

"ममैवांशो जीवलोके जीवभूतः सनातनः" इति ॥*॥

अनंशत्वश्रुतेर्गतिं चाऽह—

॥ प्रकाशादिवन्नैवं परः ॥४५॥

अंशत्वेऽपि न मत्स्यादिरूपी पर एवंविधः। यथा तेजोंऽशस्यैव कालाग्नेः खद्योतस्य च नैकप्रकारता। यथा जलांशस्यामृतसमुद्रस्य मूत्रादेश्च। यथा च पृथिव्यंशस्य मेरोर्विष्ठादेश्च। अभिमानिदेवतापेक्षयैतत् ॥*॥

॥ स्मरन्ति च ॥४६॥

"एते स्वांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्[3]", "अतः परं यदव्यक्तमव्यूढगुणबृंहितम्। अदृष्टाश्रुतवस्तुत्वात् स जीवो यः पुनर्भवः", "स्वांशश्चाथो विभिन्नांश इति द्वेधांऽश इष्यते। अंशिनो यत्तु सामर्थ्यं यत् स्वरूपं यथा स्थितिः। तदेव नाणुमात्रोऽपि भेदः स्वांशांशिनोः क्वचित्। विभिन्नांशोऽल्पशक्तिः स्यात् किञ्चित्सादृश्य-

अनुव्याख्यानम्

स्वरूपांशोऽन्य एव च। विभिन्नांशोऽल्पशक्तिः स्यात् किञ्चित्सादृश्यमात्रयुक् ॥ ७८ ॥ अंशिनो यत्तु सामर्थ्यं यत् स्वरूपं यथा स्थितिः। स एव चेत् स्वरूपांशः प्रादुर्भावा हरेर्यथा॥७९॥ सूर्यमण्डलमान्येकस्तत्प्रकाशाभिमानवान्। सूर्योऽथ सप्तमाब्धेश्च बाह्योदस्य च वारिपः॥८०॥ कठिनत्वेन मेर्वादेः पृथिव्या अपि देवता। धरादेव्येवमेवैको भगवान्

---

१ "भ्रातेति सखेति च" २ "ह्येतमधीयिरे" इति प्र.पाठौ। ३ इतः परम् "इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे" इति प्र.पाठेऽधिकम्।

भाष्यम्

मात्रयुक्[1]", "न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः" इत्यादि[2] ॥*॥

॥ अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॥४७॥

परानुज्ञया प्रवृत्तिः परतो बन्धनिवृत्तिश्च जीवस्य प्रतीयेते[3], अंशत्वेऽपि देहसम्बन्धात्— "य आत्मानमन्तरो यमयति", "तमेवं विद्वानमृत इह भवति" इत्यादिना[4]। नतु परस्य।

"वासुदेवः सङ्कर्षणः प्रद्युम्नोऽनिरुद्धोऽहं मत्स्यः कूर्मो वराहो नारसिंहो वामनो रामो रामः कृष्णो बुद्धः कल्किरहं शतधाऽहं सहस्रधाऽहममितोऽहमनन्तोऽहं नैवैते जायन्ते न म्रियन्ते नैषामनुज्ञा न बन्धो न मुक्तिः सर्व एव ह्येते पूर्णा अजरा अमृताः परमाः[5] परानन्दाः" इति हि चतुर्वेदशिखायाम्[6]।

युज्यते च ज्योतिरादिवत्। यथाऽऽदित्यो वियद्गतस्तत्प्रकाशश्चैकप्रकारः। "शुक्लं कृष्णं कनीनिका" इति तदंशस्याप्यक्ष्णो देहसम्बन्धान्न तादृशी शक्तिस्तदनुग्राह्यत्वं तेनैवाऽवृतिपरिहारश्च। यथा बाह्यामृतजलस्यामृतसमुद्रस्य चैकत्वं तदंशस्यापि श्लेष्मणस्तदनुग्राह्यत्वं तेनैव विरोधिनिवृत्तिश्च। मोक्षधर्मे च—

"यत्किञ्चिदिह लोकेऽस्मिन् देहबद्धं विशाम्पते। सर्वं पञ्चभिराविष्टं भूतैरीश्वरबुद्धिजैः। ईश्वरो हि महद् भूतं प्रभुर्नारायणो विराट्। भूतान्तरात्मा विज्ञेयः सगुणो निर्गुणोऽपि च। भूतप्रळयमव्यक्तं शुश्रूषुर्नृपसत्तम" इति।

वाराहे च—

"अंशाश्च देहयोग्यत्वाज्जीवा बन्धादिसंयुताः। अनुग्राह्याश्चेश्वरेण नतु मत्स्यादिको हरिः। अदेहबन्धयोग्यत्वाद् यथा सूर्यप्रभाक्षिणी। यथाऽमृतसमुद्रस्य श्लेष्मादेश्च द्विरूपता[7]। अनुग्राह्यत्वमन्यस्य तेनैवाऽवृतिरोधनम्" इति ॥*॥

॥ असन्ततेश्चाव्यतिकरः ॥४८॥

अपूर्णशक्तित्वाच्च जीवस्य न मत्स्यादिसाम्यम्। तथाच चतुर्वेदशिखायाम्—

"तस्य ह वा एतस्य परमस्य त्रीणि रूपाणि कृष्णो रामः कपिल इति। तस्य ह वा एतस्य परमस्य पञ्च रूपाणि दश रूपाणि शतरूपाणि सहस्ररूपाण्यमितरूपाणि। तानि ह वा एतानि सर्वाणि पूर्णानि सर्वाण्यनन्तानि सर्वाण्यसम्मितान्यथावराः[8] सर्वे एवापूर्णाः सर्वे एव बद्ध्यन्तेऽथ मुच्यन्ते च केचन" इति ॥*॥

अनुव्याख्यानम्

विष्णुरव्ययः। नानावताररूपेण स्थितः पूर्णगुणः सदा ॥८१॥ विण्मूत्राक्ष्यादिमानिन्यो[9] यथाऽपभ्रष्टदेवताः। सूर्यादिभ्यस्तथैवायं संसारी परमात् पृथक् ॥८२॥ देहदोषैश्च दुष्टत्वादपभ्रष्टाख्यदेवताः। अन्याः सूर्यादिदेवेभ्यो ह्यनुग्राह्याश्च तैः सदा॥८३॥ एवमेव पराद् विष्णोः पृथक् संसारिणो मताः। अनुग्राह्याश्च तेनैव तत्प्रसादाच्च मोक्षिणः॥८४॥ नतु मत्स्यादि-

---

१ इतः परं प्र. पाठे "इति वाराहे" इति पठ्यते। २ "इति च" ३ "प्रतीयते" ४ "तमेवं विद्वानित्यादिना" ५ "पराः" ६ "इति चतुर्वेदशिखायाम्" ७ "विरूपता" इति प्र.पाठाः। ८ "सर्वाण्यसम्मितानि सर्वाण्यमितानि। अथावराः" इत्यादिः प्र.पाठः। ९ "विण्मूत्राद्यभिमानिन्यः" इति प्र. पाठः।

भाष्यम्

॥ आभास एव च ॥४९॥

" रूपं रूपं प्रतिरूपो बभूव " इति प्रतिबिम्बत्वाच्च न साम्यम् । वाराहे च—

" द्विरूपावंशकौ तस्य परमस्य हरेर्विभोः । प्रतिबिम्बांशकश्चाथ स्वरूपांशक एव च । प्रतिबिम्बांशका जीवाः प्रादुर्भावाः परे स्मृताः। प्रतिबिम्बेष्वल्पसाम्यं स्वरूपाणीतराणि तु " इति । " सोपाधिरनुपाधिश्च प्रतिबिम्बो द्विधेयते । जीवः परस्यानुपाधिरिन्द्रचापो यथा रवेः" इति पैङ्गिश्रुतिः । "यथैषा पुरुषे च्छाया एतस्मिन्नेतदाततम् " इति श्रुतिः ॥*॥

॥*॥ इति सप्तदशमधिकरणम् ॥*॥

प्रतिबिम्बानां मिथो वैचित्र्ये कारणमाह—

॥ अदृष्टानियमात् ॥५०॥

अनादिविद्याकर्मादिवैचित्र्याद् वैचित्र्यम् ॥*॥

॥ अभिसन्ध्यादिष्वपि चैवम् ॥५१॥

इच्छाद्वेषसुखदुःखादिवैचित्र्यं चादृष्टादेव । चशब्देन प्रतिक्षणवैचित्र्यं च ॥*॥

अनुव्याख्यानम्

रूपाणामनुग्राह्यत्वमिष्यते। गुणैरशेषैः पूर्णत्वान्मुख्याभेदोऽपरैर्नच॥८५॥अंशाभासाश्च सर्वेऽपि परस्यांशा न मुख्यतः। यथैषा पुरुषे च्छाया एतस्मिन्नेतदाततम् ॥८६॥ नतु पुम्पादवत् पादा जीवा एते परात्मनः। पूर्णास्तस्य गुणा एव प्रादुर्भावतया स्थिताः। एवं जगाद परमश्रुतिर्नारायणं परम् ॥८७॥ अक्षयो भगवान् विष्णुर्लक्ष्म्यावासो लये स्थितः। मुक्तैः सदा चिन्त्यमानो ब्रह्माद्यैस्तारतम्यगैः ॥८८॥ प्रकृतिः पुरुषः कालो वेदाश्चेति चतुष्टयम् । नित्यं स्वरूपतो विष्णोर्विशेषावाप्तिमात्रतः। उत्पत्तिमदिति प्रोक्तं लक्ष्मीस्तदभिमानिनी॥ ॥८९॥ ततो जातः पुमान् नाम ब्रह्माऽस्यां वासुदेवतः। सूत्रात्मा प्राणनामा च देव्यौ प्रकृतिमानिनी ॥९०॥ ततो रूपं महान् नाम ब्रह्मणोऽहङ्कृतिः शिवः। ब्रह्मणो बुद्धिनाम्नोमा तत इन्द्रो मनोऽभिधः। स्कन्दश्च तत एवान्ये सर्वे देवाः प्रजज्ञिरे ॥९१॥ तत्र पूर्वतनः श्रेयान् गुणैः सर्वैः समस्तशः। तेभ्यश्च भगवान् विष्णुस्तदधीना इमे सदा ॥९२॥ जन्मस्थितिलयाज्ञाननियतिज्ञानसंसृतिः। मोक्षश्च तदधीनत्वमेतेषां नैव हीयते॥९३॥ मुक्तावपि स एवैकः स्वतन्त्रः पूर्णसद्गुणः। इति श्रुत्युपपत्तिभ्यां पादेऽस्मिन् प्रभुणोदितम् ॥९४॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते

श्रीमद्ब्रह्मसूत्रानुव्याख्याने

— द्वितीयाध्यायस्य तृतीयः पादः—

---

१ "जीव ईशस्यानुपाधिः" २ "इति च श्रुतिः" इति प्र. पाठौ। ३ प्र.पाठेऽष्टादशमधिकरणम् । ४"परमा श्रुतिः" ५ "महन्नाम" इति प्र. पाठौ।

भाष्यम्

॥ प्रदेशादिति चेन्नान्तर्भावात् ॥५२॥

न स्वर्गभूम्यादिप्रदेशविशेषाद् वैचित्र्यम्। तत्प्राप्तेरप्यदृष्टापेक्षत्वात्। एकदेशस्थितानामेव वैचित्र्यदर्शनाच्च ॥*॥

॥*॥ इत्यष्टादशमधिकरणम् ॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते

श्रीमद्ब्रह्मसूत्रभाष्ये

— द्वितीयाध्यायस्य तृतीयः पादः —

ॐ॥ युक्तिसहितश्रुतिविरोधं श्रुतीनामपाकरोत्यनेन पादेन।

"प्राणा एवेदमग्र आसुस्तेभ्यो भूतानि जज्ञिरे भूतेभ्योऽण्डमण्डस्यान्तस्त्विमे लोका अथ प्राणा एवानादयः प्राणा नित्याः" इति काषायणश्रुतौ प्राणानामनुत्पत्तिः प्रतीयते। "नोपादानं हीन्द्रियाणामतोऽनुत्पत्तिरिष्यते। उपादानकृता सृष्टिः सर्वलोकेषु दृश्यते" इति हि भविष्यत्पर्वणि। "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इति च।

अत उच्यते—

॥ तथा प्राणाः ॥१॥

यथाऽऽकाशादयः परमात्मन उत्पद्यन्ते तथा प्राणा अपि ॥*॥

॥ गौण्यसम्भवात् ॥२॥

अनादित्वश्रुतिर्गौणानादित्वापेक्षया। मुख्यासम्भवात्।

अनुव्याख्यानम्

ॐ॥ श्रुत्यर्थः श्रुतियुक्तिभ्यां विरुद्ध इव दृश्यते। यत्र तन्निर्णयं देवः सुविशिष्टोपपत्तिभिः। करोत्यनेन पादेन तत्र स्पष्टार्थवच्छ्रुतिः ॥१॥ विशेषश्रुतिवैरूप्यं माहात्म्यं व्यक्तसद्गुणाः। दृष्टायुक्तिः समानत्वं कर्तृशक्तिर्विमिश्रता ॥२॥ युक्तयः पूर्वपक्षेषु सुनिर्णीतास्तु तादृशाः। युक्तयो निर्णयस्यैव स्वयं भगवतोदिताः ॥३॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते

श्रीमद्ब्रह्मसूत्रानुव्याख्याने

द्वितीयोऽध्यायः

न्यायविवरणम्

ॐ॥ नच प्राणानामुत्पत्त्यङ्गीकारे "प्राणा एवानादयः" इत्यादिस्पष्टार्थवद्विशेषश्रुतिविरोधः।

---

१ "स्वर्गनरकभूम्यादि–" २ "तत्प्राप्तेरदृष्टापेक्षत्वात्" इति प्र. पाठौ। ३ प्र. पाठेऽत्रैकोनविंशमधिकरणम्। ४ "इति भविष्यत्पर्वणि" ५ "व्यक्तसद्गुणः" इति प्र.पाठौ।

भाष्यम्

"नित्यान्येतानि सौक्ष्म्येण हीन्द्रियाणि तु सर्वशः। तेषां भूतैरुपचयः सृष्टिकाले विधीयते। परेण साम्यसम्प्राप्तेः कस्य स्यान्मुख्यनित्यता" इति हि भविष्यत्पर्वणि॥*॥

॥ प्रतिज्ञानुपरोधाच्च ॥३॥

"इदं सर्वमसृजत" इति[1] ॥*॥

॥*॥ इति प्रथममधिकरणम् ॥*॥

"द्विधा हैवेन्द्रियाणि नित्यानि चानित्यानि च। तत्र नित्यं मनोऽनादित्वान्नह्यमनाः पुमांस्तिष्ठत्यनित्यान्यन्यानि" इति गौपवनश्रुतौ मनसोऽनुत्पत्तिः सयुक्तिका श्रूयते। अत आह—

॥ तत्प्राक्छ्रुतेश्च ॥४॥

"मनः सर्वेन्द्रियाणि च" इति पूर्वोक्तत्वान्नानुत्पत्तिर्मनसो युज्यते।

"पूर्वं मनः समुत्पन्नं ततोऽन्येषां समुद्भवः। तदनुत्पत्तिवचनमल्पोपचयकारणात्" इति वायुप्रोक्तवचनं चशब्देन गृहीतम् ॥*॥

॥*॥ इति द्वितीयमधिकरणम् ॥*॥

"नित्ययाऽनित्यया स्तौमि परमात्मानमच्युतमिति। वाग् वाव नित्या नह्येषोत्पद्यतेऽस्यां हि श्रुतिरवतिष्ठते" इति सयुक्तिकं पौष्यायणश्रुतौ वाचोऽनुत्पत्तिरुच्यते। अतो ब्रवीति—

॥ तत्पूर्वकत्वाद् वाचः ॥५॥

"तस्मान्मन एव पूर्वरूपं वागुत्तररूपम्" इति मनःपूर्वकत्वाद् वाचो नानुत्पत्तिः।

"वागिन्द्रियस्य नित्यत्वं श्रुतिसन्निधियोग्यता। उत्पत्तिर्मनसो यस्मान्न नित्यत्वं कुतश्चन" इति वायुप्रोक्ते।

॥*॥ इति तृतीयमधिकरणम् ॥*॥

न्यायविवरणम्

"आत्मैवेदमग्र आसीत् स प्राणमसृजत स प्राणान्" इत्यादिवचनादनादित्व एव स्पष्टार्थविशेषश्रुतिविरोधात्। "इदं सर्वमसृजत" इति सामान्यवचनस्याऽधिक्यं सिद्धान्ते। विशेषमात्रश्रुतेः सकाशादुभयश्रुतेः[2] प्राबल्यात् ॥१॥

नच "नित्यं मनोऽनादित्वात्" इति विशेषश्रुतिविरोधः। "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इति विशेषश्रुतेः ॥२॥

नच "वाग् वाव नित्या" इति विशेषश्रुतिविरोधः। "मनसो वाव वागुदपद्यत[3] वाचो व्याहरणम्" इति विशेषश्रुतेः ॥३॥

---

१ "स इदं सर्वमसृजत" २ "सावकाशाया उभयश्रुतेः" ३ "वागुत्पद्यते" इति प्र. पाठाः।

भाष्यम्

"सप्त प्राणाः प्रभवन्ति तस्मात्" इति श्रुतिः। "सप्तैव मारुता बाह्ये प्राणाः सप्त तथाऽऽत्मनि । अधिदैवे तथाऽध्यात्मे सङ्ख्यासाम्यं विदो विदुः" इति च स्कान्दे। "द्वादश वा एते प्राणा द्वादश मासा द्वादशाऽऽदित्या द्वादश राशयो द्वादश ग्रहाः" इति कौण्डिन्यश्रुतौ द्वादश प्राणा दृश्यन्ते ।

अतो वक्ति—

॥ सप्त गतेर्विशेषितत्वाच्च ॥६॥

ज्ञानेन्द्रियापेक्षया सप्तत्वम् । "गुहाशयां निहिताः सप्त सप्त" इति विशेषणात् ।

"सप्त प्राणास्त्ववगतेः पञ्च प्राणाश्च कर्मणः । एवं प्राणद्वादशकं शरीरे नित्यसंस्थितम्" इति भविष्यत्पर्ववचनं चशब्दात् ॥*॥

॥ हस्तादयस्तु स्थितेऽतो नैवम् ॥७॥

हस्तादीनां कर्मविषयत्वान्न सहपाठः ।

"संसारस्थितिहेतुत्वात् स्थितं कर्म विदो विदुः। तस्मादुद्गतिहेतुत्वाज्ज्ञानं गतिरिहोच्यते" इति च वायुप्रोक्ते[1] ॥*॥

॥*॥ इति चतुर्थमधिकरणम् ॥*॥

"दिवीव चक्षुराततम्" इति व्याप्तिः प्रतीयते । दूरश्रवणदर्शनादियुक्तिश्च । "अणुभिः पश्यत्यणुभिः शृणोति प्राणा वा अणवः प्राणैर्ह्येतद् भवति" इति च कौण्डिन्यश्रुतिः । अतो वक्ति—

॥ अणवश्च ॥८॥

"तद् यथा ह्यणुनश्चक्षसः[2] प्रकाशो व्यातत एवमेवास्य पुरुषस्य प्रकाशो व्याततोऽणुर्ह्येवैष पुरुषो भवति" इति शाण्डिल्यश्रुतेः[3] ॥*॥

॥*॥ इति पञ्चममधिकरणम् ॥*॥

"नैष प्राण उदेति नास्तमेत्येकल एव मध्ये स्थाता[4]ऽथैनमाहुर्मध्यम इति" इति मुख्यप्राणस्यानुत्पत्तिः श्रूयते । "यत्प्राप्तिर्यत्परित्याग उत्पत्तिर्मरणं तथा । तस्योत्पत्तिर्मृतिश्चैव कथं प्राणस्य युज्यते" इति च युक्तिर्वायुप्रोक्ते। "आत्मत एष प्राणो जायते" इति च।

न्यायविवरणम्

नच "दशेमे पुरुषे प्राणा आत्मैकादशः", "सप्त प्राणाः प्रभवन्ति तस्मात्" इति सङ्ख्याविशेषश्रुत्योरेव परस्पर[5]विरोधः । "गुहाशयां निहिताः सप्त सप्त" इति सप्तभावस्य बुद्धीन्द्रियविषयत्वेन विशेषितत्वात् सङ्ख्याश्रुत्योर्विषयवैलक्षण्यात्॥४॥

नच "दिवीव चक्षुराततम्" इति व्याप्त्याख्यविशेषवाचकश्रुतिविरोधः । "अणूनि वा इन्द्रियाणि तेषां प्रकाशो व्याततः" इति ततोऽप्यणुत्ववाचकविशेषश्रुतिविरोधात् ॥५॥

---

१ "इति वायुप्रोक्ते" २"ह्यणुनश्चक्षसः" ३"श्रुतिः" ४"स्थाता । अथैनमाहुः" ५"परस्परं विरोधः" इति प्र. पाठाः ।

भाष्यम्

अत आह—

॥ श्रेष्ठश्च ॥९॥

"सौक्ष्म्येण ह वा एषोऽवतिष्ठते स्थूलत्वेनोदेति सूक्ष्मश्चाथो स्थूलश्च प्रकृतितः सूक्ष्मोऽन्यतः स्थूलोऽथैनमाहुः सादिरनादिरिति" इति गौपवनश्रुतेः ॥*॥

॥ न वायुक्रिये पृथगुपदेशात् ॥१०॥

"चेष्टायां बाह्यवायौ च मुख्यप्राणे च गीयते। प्राणशब्दस्त्रिषु ह्येषु मुखे मुख्यःप्रकीर्तितः" इति वायुक्रिययोरपि व्यपदेशादुत्पत्तिश्रुतिस्तयोर्न स्यात्। "खं वायुः", "तपो मन्त्राः कर्म" इति पृथगुपदेशात्। "भूतानि चेष्टा मन्त्राश्च मुख्यप्राणादिदं जगत्। मुख्यप्राणः परस्माच्च न परः कारणान्वितः" इति च वायुप्रोक्ते ॥*॥

॥*॥ इति षष्ठमधिकरणम् ॥*॥

"प्राणादिदमाविरासीत् प्राणो धत्ते प्राणे लयमभ्युपैति न प्राणः किञ्चिदाश्रितः" इत्याग्निवेश्यश्रुतौ। "यदाश्रयादस्य चेष्टा सोऽन्यं कथमुपाश्रयेत्। यथा प्राणस्तथा राजा सर्वस्यैकाश्रयो भवेत्" इति च युक्तिर्भारते। "प्राणस्यैतद् वशे सर्वं प्राणः परवशे स्थितः। न परः कश्चिदाश्रित्य वर्तते परमो यतः" इति च पैङ्गिश्रुतिः।

अत आह—

॥ चक्षुरादिवत्तु तत्सहशिष्टयादिभ्यः ॥११॥

चक्षुरादिवन्मुख्यप्राणोऽपि परमात्मवश एव।

"सर्वं ह्येवैतत् परमेऽवतिष्ठते प्राणश्च प्राणाश्च प्राणिनश्च स ह्येक एवैतान् नयत्युन्नयति वशीकरोति" इति गौपवनश्रुतौ चक्षुरादिभिः सह तद्वशत्वेनैव शासनात्। "सर्वकर्ताऽपि सन् प्राणः परमाधारतः स्थितः। कथमेवान्यथा स स्याद् यतो नैवेश्वरद्वयम्। अवान्तरेश्वरत्वेन तस्येश्वरवचो भवेत्। अतो मध्यमतामाहुस्तस्य वेदेषु वेदिनः। अनन्येश्वरता प्राणे तदन्येश्वरवर्जनम्। यतो विशेषवाक्येन ह्रियते समतावचः", "नान्योऽतोऽस्ति द्रष्टा", "नान्यदतोऽस्ति द्रष्टृ" इत्यादिवचनयुक्तय आदिशब्दोक्ताः ॥*॥

न्यायविवरणम्

नच "यत्प्राप्तिर्यत्परित्याग उत्पत्तिर्मरणं तथा। तस्योत्पत्तिर्मृतिश्चैव कथं प्राणस्य युज्यते" इत्यादिमाहात्म्यवचनान्मुख्यप्राणस्य नोत्पत्तिरिति वाच्यम्। "महत्त्वान्महतां विष्णुः कर्ता प्राणस्य चैकराट्। किं नाम न सृजेदेष येन शक्त्येदमावृतम्" इति श्रुतेस्ततोऽपि माहात्म्याद् विष्णोः ॥६॥७॥

---

१ "मुख्ये" इति प्र. पाठः। २ इतः परं प्र. पाठे "स प्राणमसृजत, खं वायुर्ज्योतिरापः, तपो मन्त्राः कर्म" इति श्रुत्यानुपूर्वी पठ्यते। ३ "इति वायुप्रोक्ते" ४ "इति पैङ्गिश्रुतिः" ५ "वर्जना" ६ "युक्तयश्चाऽदिशब्दोक्ताः" इति प्र. पाठः।

भाष्यम्

## ॥ अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥१२॥

इतरेषां प्राणानां करणत्वान्मुख्यस्याकरणत्वात्[1] तस्यान्येभ्य उत्तमत्वं युज्यते। माण्डव्यश्रुतिश्च--

तानि ह वा एतानि सर्वाणि करणान्यथ प्राण एवाकरणस्तस्मान्मुख्यस्तस्मान्मुख्य इत्याचक्षते" इति ॥*॥

॥*॥ इति सप्तममधिकरणम् ॥*॥

"सर्वे वा एते मुख्यदासाः प्राणोऽपानो व्यान उदानः समान इत्यथ प्राणो वाव सम्राट्" इति कौण्डिन्यश्रुतिः। "प्राणापानादयः सर्वे मुख्यदासा यतोऽनिशम्। अतस्तदाज्ञया नित्यं स्वानि कर्माणि कुर्वते" इति युक्तिर्वायुप्रोक्ते। "मुख्यस्यैव स्वरूपाणि प्राणाद्याः पञ्च वायवः। स एव प्राणिनां देहे पञ्चधा वर्ततेऽनिशम्" इति च गौपवनश्रुतिः।

अतो वक्ति—

## ॥ पञ्चवृत्तिर्मनोवद् व्यपदिश्यते ॥१३॥

"अथ पञ्चवृत्त्यैतत् प्रवर्तते प्राणो वाव पञ्चवृत्तिः प्राणोऽपानो व्यान उदानः समान इति तेभ्यो वा एतेभ्यः पञ्च दासाः प्रजायन्ते प्राणाद् वाव प्राणोऽपानादपानो व्यानाद् व्यान उदानादुदानः समानादेव समानो यथा[2] ह वै मनः पञ्चधा व्यपदिश्यते मनो बुद्धिरहङ्कारश्चित्तं चेतनेति तेभ्यो वा एतेभ्यः पञ्च दासाः प्रजायन्ते मनसो वाव मनो बुद्धेर्बुद्धिरहङ्कारादहङ्कारश्चित्ताच्चित्तं चेतनाया एव चेतनैवमिति" इति ॥*॥

॥*॥ इत्यष्टममधिकरणम् ॥*॥

"प्राण एवाधस्तात् प्राण उपरिष्टात् प्राणो मध्यतः प्राणः सर्वतः प्राण एवेदं सर्वम्" इति प्राणस्य व्याप्तिः प्रतीयते। "यतः सर्वं जगद् व्याप्य तिष्ठति प्राण एव तु। अतो धृतं जगत् सर्वमन्यथा केन धार्यते" इति च युक्तिर्वायुप्रोक्ते। "अणुनैतत् सृज्यतेऽणुनैतद् धार्यतेऽणौ लयमभ्युपैति प्राणो वा अणुः प्राणे ह्येतद्[3] भवति" इति च सौत्रायणश्रुतिः।

अत आह—

## ॥ अणुश्च ॥१४॥

"स वा एष प्राणोऽणुमहान्[4] नामान्तर्वाऽणुर्बहिर्महान् प्राणो वा ईशितव्येश ईशो ह्यसौ

न्यायविवरणम्

नच प्राणादिपञ्चकस्य व्यक्तसद्गुणत्वान्मुख्यप्राणवृत्तित्वमेव। "अशेषगुणपूर्णानि मुख्यरूपाणि पञ्च च। तद्दासाः पञ्च चान्येऽपि प्राणाद्याः सद्गुणैर्युताः" इति श्रुतेर्मुख्यप्राणस्य ततोऽपि व्यक्तसद्गुणत्वात् ॥८॥

---

१ "अकरणत्वाच्च" २ "समानः। यथा" ३ "प्राणेह्यैतत्" ४ "अणुर्महान्" इति प्र॰पाठाः।

भाष्यम्

सर्वस्येशितव्यश्च परस्य " इति हि कौण्डिन्यश्रुतिः ॥*॥[1]

॥*॥ इति नवममधिकरणम् ॥*॥

करणत्वं प्राणानामुक्तम्।

" जीवस्य करणान्याहुः प्राणानेतांस्तु सर्वशः। यस्मात् तद्वशगा एते दृश्यन्ते सर्वदेहिषु इति सौत्रायणश्रुतौ सयुक्तिकं जीवकरणत्वं प्रतीयते। "ब्रह्मणो वा एतानि करणानि चक्षुः श्रोत्रं मनो वागिति तद्ध्येतैः कारयति" इति च काषायणश्रुतौ[2]।

अत आह—

॥ ज्योतिराद्यधिष्ठानं तु तदामननात् ॥१५॥

यज्ज्योतिराद्यधिष्ठानं ब्रह्म तदेवैतैः करणैः प्रवर्तते[3]। " यः प्राणे तिष्ठन्" इत्यादि तदामननात् ॥*॥

कथं जीवकरणत्वश्रुतिरित्यतो वक्ति—

॥ प्राणवता शब्दात् ॥१६॥

जीवेनैव करणैः[4] कारयति परमात्मा। अतो न विरोधः।

"एष ह्येनेनाऽत्मना[5] चक्षुषा दर्शयति श्रोत्रेण श्रावयति मनसा मानयति[6] बुद्ध्या बोधयति तस्मादेतावाहुः स्मृतिरस्मृतिरिति" इति भाल्लवेयश्रुतेः। "करणैः कारणं ब्रह्म पुरुषापेक्षयाऽखिलम्। श्रोत्रादिभिः कारयति करणानीत्यतो विदुः। न जीवापेक्षया मुख्यं कारयेत् परमेश्वरः। केवलात्मेच्छया तस्मान्मुख्यत्वं तस्य निश्चितम्" इति च वाराहे[7] ॥*॥

॥ तस्य च नित्यत्वात् ॥१७॥

अनादिनित्यत्वाच्च[8] जीवकरणसम्बन्धस्य युज्यते तत्करणत्वश्रुतिः।

"अथावियोगीनि करणैर्वाव न वियुज्यते देहेनैव वियुज्यत इत्येतद् वाव करणानां करणत्वं यद् वाव न वियुज्यते" इति गौपवनश्रुतिः।

चशब्दः करणसम्बन्धग्राही ॥*॥

॥*॥ इति दशममधिकरणम् ॥*॥

न्यायविवरणम्

नचाणुत्वे प्राणस्य "महान् वै मुख्यप्राणो येन व्याप्तं चराचरम्" इति दृष्टायुक्तिः। "अणुर्वै मुख्यप्राणो य उत्क्रामति नाडीभिः" इति दृष्टायुक्तेरनणुत्वे[9] प्राणस्य ॥९॥

नचेन्द्रियाणां जीवाकरणत्वे दृष्टायुक्तिः। क्वचिदतद्वशत्वस्यापि दृष्टत्वात्। "यश्चक्षुषि तिष्ठन्" इत्यादिदृष्टायुक्तेरीशाधीनत्वानङ्गीकारे। लौकिकदृष्टेस्त्वीशेनैव जीवानुसारित्वक्लृप्त्योपपत्तेः॥१०॥

---

१ "इति कौण्डिन्यश्रुतिः" २ "इति काषायणश्रुतौ" ३ "प्रवर्तयति" ४ "स्वकरणैः" ५ "ह्यनेनाऽत्मना" ६ "मनयति" ७ "इति वाराहे" ८ "अनादिनित्यत्वाज्जीव-" ९ "दृष्टायुक्तिरनणुत्वे" इति प्र. पाठाः।

भाष्यम्

"अथेन्द्रियाणि प्राणा वा इन्द्रियाणि प्राणा हीदं द्रवन्ति" इति सयुक्तिका पौत्रायण-श्रुतिः[1] सामान्येन प्राणानामिन्द्रियत्वं वक्ति। "द्वादशैवेन्द्रियाण्याहुर्मनोबुद्धी तु द्वादशे" इति च काषायणश्रुतिः।

अतः कस्येन्द्रियत्वं निवार्यत इत्यतो[2] वक्ति—

॥ त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥१८॥

मुख्यप्राणमृते[3] एवेन्द्रियाणि।

"द्वादशैवेन्द्रियाण्याहुः प्राणो मुख्यस्त्वनिन्द्रियम्। द्रवतां हीन्द्रियाणां तु नियन्ता प्राण एकराट्" इति पौत्रायणश्रुतिः। "श्रोत्रादीनि तु पञ्चैव तथा वागादिपञ्चकम्। मनोबुद्धिसहायानि द्वादशैवेन्द्रियाणि तु। विषयद्रवणात् तेषामिन्द्रियत्वमुदाहृतम्। तेषां नियामकः प्राणः स्थित एवाखिलप्रभुः" इति बृहत्संहितायाम् ॥*॥

॥ भेदश्रुतेः ॥१९॥

"स्थित एव हीदं मुख्यः प्राणः करोति कारयति बलति बालयति धत्ते धारयति प्रभुं वा एनमाहुः। अथेन्द्रियाणि न स्थितानि न कुर्वन्ति न कारयन्ति न बलन्ति न बालयन्ति न दधते न धारयन्ति तानि वा एतान्यबलानि तस्मादाहुरिन्द्रियाणि करणानि" इति पौत्रायणश्रुतेः ॥*॥

॥ वैलक्षण्याच्च ॥२०॥

पुरुषापेक्षया प्रवृत्तिरिन्द्रियाणां दृश्यते, न मुख्यस्य। "प्राणाग्नय एवैतस्मिन् पुरे जाग्रति" इति च श्रुतिः[4] ॥*॥

॥*॥ इत्येकादशमधिकरणम् ॥*॥

"विरिञ्चो वा इदं विरेचयति विदधाति ब्रह्मा वाव विरिञ्च एतस्माद्धीमे रूपनामनी"[5] इति गौपवनश्रुतिः। "यस्माद् विरेचयेत् सर्वं विरिञ्चस्तेन भण्यते। एको हि कर्ता जगतो ब्रह्मैव च चतुर्मुखः" इति च युक्तिर्ब्राह्मे। "अथ कस्मादुच्यते परम इति परमाद्ध्येते नामरूपे व्याक्रियेते तस्मादेनमाहुः परम इत्यथ कस्मादुच्यते ब्रह्मेति बृहत्त्वाद् बृंहणाच्च[6]" इत्याग्निवेश्यश्रुतिः।

न्यायविवरणम्

नचेशवशत्वसाम्यान्मुख्यप्राणस्याप्यन्यसाम्यम्। "यस्मिन्निदं[7] सर्वमध्याध्नोत्", "प्राणस्यैतद् वशे सर्वं त्रिदिवे यत् प्रतिष्ठितम्" इत्यादिश्रुतेरीशसाम्यस्यापि भावात्। "प्राणस्यैतद् वशे सर्वं प्राणः परवशे स्थितः" इति श्रुतेर्मध्यमत्वोपपत्तेः ॥११॥

नच विरिञ्चस्यापि कर्तृत्वशक्तेः स एव शरीरादिस्रष्टा। "त्रिवृत्क्रिया यतो विष्णो रूपं च

---

१ "सयुक्तिकपौत्रायणश्रुतिः" २ "निवार्यमित्यतः" ३ "ऋते त एव" ४ "श्रुतेः" इति प्र. पाठाः। ५ प्रा. कोशेषु "रूपनामनीति" इत्यप्रगृह्य लिखितम्। ६ "बृंहितत्वाच्च" ७ "यदस्मिन्निदम्" इति प्र. पाठौ।

भाष्यम्

अत आह—

॥ संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥२१॥

नामरूपक्लृप्तिः परादेव ।

"सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् य आस्ते" इति श्रुतेः ।

त्रिवृत्कुर्वत इति हेतुगर्भः । त्रिवृत्करणापेक्षत्वान्नामरूपयोः ।

"सर्वनाम्नां च रूपाणां व्यवहारेषु केशवः। एक एव यतः स्रष्टा ब्रह्माद्यास्तदवान्तराः" इति च पाद्मे । "त्रिवृत्क्रिया यतो विष्णो रूपं च तदपेक्षया । रूपापेक्षं तथा नाम व्यवहारस्तदात्मकः । अतो नाम्नश्च रूपस्य व्यवहारस्य चैकराट् । हरिरेव यतः कर्ता पिताऽतो भगवान् प्रभुः" इति च ब्रह्माण्डे ॥*॥

॥*॥ इति द्वादशमधिकरणम् ॥*॥

"अद्भ्यो हीदमुत्पद्यत आपो वाव मांसमस्थि च भवत्यापः शरीरमाप एवेदं सर्वम्" इति कौण्डिन्यश्रुतिः । "अम्मयं तु यतो मांसमतस्तृप्तिश्च मांसतः" इति च भारते । "पृथिवीं शरीरमाकशमात्मा" इति च ।

अतो ब्रवीति—

॥ मांसादि भौमं यथाशब्दमितरयोश्च ॥२२॥

"यत् कठिनं सा पृथिवी यद् द्रवं तदापो यदुष्णं तत् तेजः" इति श्रुतेर्मांसाद्येव भौमम्, न सर्वशरीरम्, अप्तेजसोश्च कार्यं यथाशब्दमङ्गीकर्तव्यम् । "यद् वावाथो विमिश्रं मिश्राद्ध्येतद् भवति मिश्राणि हि भूतानि तस्मादेवैवमाचक्षते भूतानीति" इति हि काषायणश्रुतिः । "पञ्चभूतात्मकं सर्वं तथाऽप्येकविवक्षया । एकभूतात्मकत्वेन व्यवहारस्तु वैदिके । भौममित्येव काठिन्याच्छौक्ल्यादौदकमित्यपि । तेजिष्ठत्वात् तैजसं च यथाऽस्थ्नां वचनं श्रुतौ" इति वायुप्रोक्ते ॥*॥

न्यायविवरणम्

तदपेक्षया । रूपापेक्षं तथा नाम व्यवहारस्तदात्मकः । अतो रूपस्य नाम्नश्च व्यवहारस्य चैकराट् । हरिरेव यतः कर्ता पिताऽतो भगवान् प्रभुः" इत्यादेस्तस्यैव कर्तृत्वशक्तेर्विरिञ्चस्य तु द्वारतयैवोपपत्तेः॥१२॥

नच मिश्रत्वाद् भूतानां मिश्रतायामविशेषः । "अन्नमशितं त्रेधा विधीयते" इत्यादिना

---

१ "यदास्ते" २ "इति पाद्मे" ३ "भवन्त्यापः" ४ "इति च श्रुतिः" ५ "भूतानि इति हि काषायणश्रुतिः" ६ "तदप्येकविवक्षया" इति प्र.पाठाः । ७ वस्तुतस्तु "यथा नाम्नश्च रूपस्य" इति पठनीयम् । भाष्यसंवादात् । परन्तु हृषीकेशतीर्थीये न्यायविवरणे नोपलब्धम्, इतरेषु च कोशेष्वेवमेव "यथा रूपस्य नाम्नश्च" इति पठ्यत इति स एवात्र समादृतः । ८ "द्वारतयोपपत्तेः" ९ "विमिश्रत्वाद् भूतानां विमिश्रतायां" इति प्र. पाठौ ।

भाष्यम्

कथं तर्हि विशेषवचनमित्यत आह—

॥ वैशेष्यात्तु तद्वादस्तद्वादः ॥२३॥

भूतानां विशेषसंयोगादेव विशेषव्यवहारः ।

"पार्थिवानां शरीराणामर्धेन पृथिवी स्मृता । इतरेऽर्धे त्रिभागिन्य आपस्तेजस्तु भागतः । इति सामान्यतो ज्ञेयं भेदं[1] च प्रतिपूरुषम् । स्वर्गस्थानां शरीराणामर्धं तेज उदाहृतम्" इति च ब्रह्मसंहितायाम्[2] ।

सर्वाध्यायार्थावधारणार्थाऽध्यायान्ते द्विरुक्तिः । गारुडे च—

"अध्यायान्ते द्विरुक्तिः स्याद् वेदे वा वैदिकेऽपि वा । विचारो यत्र सज्येत पूर्वोक्तस्यावधारणे । अनुक्तानां प्रमाणानां स्वीकारश्च कृतो भवेत् । विनिन्द्य चेतरान् मार्गान् सम्पूर्णफलता तथा" इति ॥*॥

॥*॥ इति त्रयोदशमधिकरणम् ॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीकृष्णद्वैपायनकृतब्रह्मसूत्रभाष्ये
द्वितीयोऽध्यायः

---

[ द्वितीयाध्याये आहत्य सूत्राणि—१५८ अधिकरणानि[3]—५४ ]
[ आदितः सूत्राणि—२९३ अधिकरणानि[4]—९२ ]

न्यायविवरणम्

मिश्रतायामपि विशेषोक्तेः । "सर्वं च भौतिकं मिश्रं मिश्रत्वेऽपि[5] विशेषिता । भौमं मांसमसृग् वारि तेजो मज्जा विशेषतः" इत्यादेश्च ॥१३॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे
द्वितीयोऽध्यायः

---

१ "भेदश्च" २ "बृहत्संहितायाम्" इति प्र॰ पाठौ । ३ प्र. पाठे १५९ सूत्राणि । ५५ अधिकरणानि । ४ प्र. पाठे २९४ सूत्राणि । ९५ अधिकरणानि । ५ "मिश्रत्वे च" इति प्र. पाठः ।

भाष्यम्

ॐ ॥ साधनविचारोऽयमध्यायः । वैराग्यार्थं गत्यादिनिरूपणा प्रथमपादे । भूतबन्धो हि बन्धः—

"भूतबन्धस्तु संसारो मुक्तिस्तेभ्यो विमोचनम्" इति च वाराहे[1] ।

तच्च मरणे भवति—

"भूतानां विनिवृत्तिस्तु मरणं समुदाहृतम् । भूतानां सम्प्रयोगश्च जनिरित्येव पण्डितैः" इति च भारते[2] ।

अतः किं साधनैरित्यत आह—

॥ तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥१॥

शरीरान्तरप्रतिपत्तौ भूतपरिष्वक्त[3] एव गच्छति ।

"वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति", "इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति प्रश्नपरिहाराभ्याम्[4] ॥*॥

॥ त्र्यात्मकत्वात्तु भूयस्त्वात् ॥२॥

अप्छब्दस्तु त्र्यात्मकत्वाद् युज्यते । भूयस्त्वाच्चापाम् ।

"तापापनोदो भूयस्त्वमम्भसो वृत्तयस्त्विमाः" इति च भागवते[5] ॥*॥

॥ प्राणगतेश्च ॥३॥

"यत्र वाव भूतानि तत्र करणानि नित्यानि ह वा एतानि भूतानि च करणानि च नैतानि[6] कदाचिद् वियुज्यन्ते नच विलीयन्ते" इति भाल्लवेयश्रुतेः प्राणगतेर्भूतान्यपि सन्तीति[7] सिद्धम्[8] ॥*॥

॥ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥४॥

"यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणः" इत्यादिश्रुतेर्न प्राणानां जीवेन सह गतिरिति चेत्, न ।

भागतोऽग्न्यादिप्राप्तेः ।

"पुरुषस्य मृतौ ब्रह्मन् प्राणा भागत एव तु । अधिदैवं प्राप्नुवन्ति भागतोऽनुव्रजन्ति तम् । पुनः शरीरसम्प्राप्तौ तमेवानुविशन्ति च" इति ब्राह्मे ।

---

१ "इति वाराहे" २ "इति भारते" ३ "भूतसम्परिष्वक्तः" इति प्र. पाठाः। ४ प्र. पाठेऽत्र प्रथममधिकरणम् । ५ "इति भागवते" इति प्र.पाठः । अत्रैव च प्र. पाठे द्वितीयाधिकरणपूर्तिः । ६ "भूतानि करणानि नचैतानि" ७ "सह गच्छन्तीति" ८ प्र. पाठेऽत्र तृतीयाधिकरणपूर्तिः ।

भाष्यम्

ब्रह्माण्डे च—

"मृतिकाले जहत्येनं प्राणा भूतानि पञ्च च। भागतो भागतस्त्वेनमनुगच्छन्ति सर्वशः"[2] इति ॥*॥

॥ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥५॥

"तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति" इति प्रथमाग्नौ श्रूयते न भूतानि जुह्वतीति। अतो नेति चेत्, न। ता एव प्रस्तुता आपः श्रद्धारूपेण हूयन्ते। "इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इत्युपसंहारोपपत्तेः[3] ॥*॥

॥ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥६॥

अग्न्यादिगतिः प्रत्यक्षतः श्रूयते। अतः प्रत्यक्षाश्रवणान्न युक्तमिति चेत्, न।

"अथैनं यजमानं किं न जहाति भूतान्येव भूतैरेव गच्छति भूतैर्भुङ्क्ते भूतैरुत्पद्यते भूतैश्चरति भूतैर्विचरति" इति कौण्ठरव्यश्रुतौ[4] प्रतीतेः[5] ॥*॥

"अपाम सोममममृता अभूम" इत्यादिश्रुतिविरोध इत्यतो वक्ति—

॥ भाक्तं वाऽनात्मवित्त्वात् तथा हि दर्शयति ॥७॥

भागतस्तदमृतत्वम्। "नान्यः पन्था अनयान विद्यते" इति श्रुतेरात्मविद एव हि मुख्यम्। वाशब्दात् पारम्पर्येणाऽत्मविदपेक्षया वा। तथाहि श्रुतिः—

"स एनमविदितो न भुनक्ति यथा वेदो वा अननूक्तोऽन्यद् वा कर्माकृतं यदि ह वा अप्यनेवंविन्महत् पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एवाऽत्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयतेऽस्माद्ध्येवाऽत्मनो यद्यत् कामयते तत्तत् सृजते", "अमृतो वाव सोमपो भवति यावदिन्द्रो यावन्मनुर्यावदादित्यः", "कर्मणा ज्ञानमातनोति ज्ञानेनामृतीभवत्यथामृतानि कर्माणि यत एनम[6]मृतं नयन्ति" इति च[7] ॥*॥

कृतस्य कर्मणो भोगेन क्षयान्मुक्तिरित्यत आह—

॥ कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्याम् ॥८॥

"ततः शेषेणेमं लोकमायाति पुनः कर्म कुरुते पुनर्गच्छति पुनरागच्छति" इति श्रुतेः, "भुक्तशेषानुशयवानिमां प्राप्य भुवं पुनः। कर्म कृत्वा पुनर्गच्छेत् पुनरायाति नित्यशः। आ चतुर्दशमाद् वर्षात् कर्माणि नियमेन तु। दशावराणां देहानां कारणानि करोत्ययम्। अतः कर्मक्षयान्मुक्तिः कुत एव भविष्यति" इत्यादिस्मृतेश्च शेषवानेवाऽयाति ॥*॥[8]

॥*॥ इति प्रथममधिकरणम् ॥*॥

---

१ प्राचीनपाठे "अनुगच्छति" इति पठ्यते। २ प्र. पाठेऽत्र चतुर्थमधिकरणम्। ३ प्र. पाठेऽत्र पञ्चममधिकरणम्। ४ "कौण्डिन्यश्रुतौ" इति प्र. पाठः। ५ प्र. पाठेऽत्र षष्ठमधिकरणम्। ६ "एनममृतत्वम्" इति प्र. पाठः। ७ प्र. पाठेऽत्र सप्तमाधिकरणपूर्तिः। ८ प्र. पाठेऽत्राष्टममधिकरणम्।

भाष्यम्

"यथेतमेव गच्छति यथेतमागच्छति स भुङ्क्ते स कर्म कुरुते स परिवर्तते" इति गतिप्रकारेणाऽगतिः प्रतीयते।

अतो ब्रूते—

॥ यथेतमनेवं च ॥९॥

"धूमादभ्रमभ्रादाकाशमाकाशाच्चन्द्रलोकं यथेतमाकाशमाकाशाद् वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति" इति काषायणश्रुतेर्यथागतमन्यथा च[1] ॥*॥

॥ चरणादिति चेन्न तदुपलणार्थेति कार्ष्णाजिनिः ॥१०॥

"तद् य इह रमणीयचरणा रमणीयां योनिमापद्यन्ते कपूयचरणाः कपूयाम्" इति श्रुतेश्चरणफलमेव गमनागमनं न यज्ञादिकृतः। "आचार इति स प्रोक्तः[2] कर्माङ्गत्वेन शुद्धिदः। अशुद्धिदस्त्वनाचारश्चरणं तूभयं मतम्" इति स्मृतेरिति चेत्, न। यज्ञाद्युपलक्षणार्था चरणादिश्रुतिरिति कार्ष्णाजिनिर्मन्यते ॥*॥

॥ आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥११॥

तर्हि रमणीयाः कपूया इत्येव स्यात्, चरणशब्दस्याऽनर्थक्यमिति चेत्, न। चरणापेक्षत्वाद् रमणीयत्वादेस्तज्ज्ञापनार्थत्वेनोपपत्तेः ॥*॥

॥ सुकृतदुष्कृते एवेति तु बादरिः ॥१२॥

"धर्मं चरत माऽधर्मम्" इत्यादिप्रयोगात् सुकृतदुष्कृते एव चरणशब्दोक्ते इति बादरिर्मन्यते। तुशब्दात् स्वसिद्धान्तोऽपि स एवेति सूचयति।

"तुशब्दस्तु विशेषे स्यात् स्वसिद्धान्तेऽवधारणे" इति च नाममहोदधौ[3] ॥*॥

॥*॥ इति द्वितीयमधिकरणम्[4] ॥*॥

पुण्यकृतामेव गमनागमने नेतरेषामित्यत आह—

॥ अनिष्टादिकारिणामपि च श्रुतम् ॥१३॥

"तद् य इह शुभाकृतो ये[5] वाऽशुभकृतस्तेऽशुभमनुभूयाऽवर्तन्ते पुनः कुर्वन्ति[6] पुनर्गच्छन्ति पुनरागच्छन्ति" इति भाल्लवेयश्रुतौ ॥*॥

॥ संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥१४॥

संयमनमनुभूय केषाञ्चिदारोहः केषाञ्चिदवरोहः। तुशब्दोऽवधारणे।

"सर्वे वा एतेऽशुभकृतः संयमने प्रपतन्ति तत्र ह ये[7] परद्विषो गुरुद्विषः श्रुतिद्विषस्तदवमन्तारः शठा मूर्खा इति ते वै ततोऽवरुह्य तमसि प्रपतन्ति नैवैत उत्तिष्ठन्तेऽपि कर्हिचिद् वज्रं वा एतदित्याहुरथ येऽन्ये ब्रह्मद्विषः स्तेनाः सुरापा इति ते वै तदनुभूयेमं लोकमनुव्रजन्ति" इति कौण्ठरव्यश्रुतेः ॥*॥

---

१ प्र. पाठेऽत्र नवममधिकरणम्। २ "सम्प्रोक्तः" ३ "इति नाममहोदधौ" इति प्र.पाठौ। ४ प्र. पाठेऽत्र दशममधिकरणम्। ५"ये चाशुभकृतः" ६ "पुनः कर्म कुर्वन्ति" ७"तत्र ये" इति प्र. पाठाः।

भाष्यम्

## ॥ स्मरन्ति च ॥१५॥

"गच्छन्ति पापिनः सर्वे नरकं नात्र संशयः। तत्र भुक्त्वा पतन्त्येव ये द्विषन्ति जनार्दनम्। महातमसि मग्नानां न तेषामुत्थितिः क्वचित्। इतरेषां तु पापानां व्युत्थानं विद्यतेऽपिच। सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम्। इति सर्वत्र नियमः पञ्चकष्टे तु तत् सदा" इत्यादि ॥*॥

## ॥ अपि सप्त ॥१६॥

"रौरवोऽथ महांश्चैव वह्निर्वैतरणी तथा। कुम्भीपाक इति प्रोक्तान्यनित्यनरकाणि तु[2]। तामिस्रश्चान्धतामिस्रो द्वौ नित्यौ सम्प्रकीर्तितौ। इति सप्त प्रधानानि बलीयस्तूत्तरोत्तरम्। एतानि क्रमशो गत्वैवाऽरोहोऽथावरोहणम्" इति च भारते[3] ॥*॥

॥*॥ इति तृतीयमधिकरणम्[1] ॥*॥

ईश्वरस्य नरकायुक्तेः "सर्वं सृजति[5] सर्वं विलापयति सर्वं रमयति सर्वं न रमयति सर्वं प्रवर्तयत्यन्तरस्मिन् निविष्टः" इति कौषारवश्रुतिविरोध इत्यतो वक्ति—

## ॥ तत्रापि च तद्व्यापारादविरोधः ॥१७॥

चशब्दाद्दुःखानुभवेन।

"स स्वर्गे स भूमौ स नरके सोऽन्धे तमसि प्रवृत्तिकृदेक एवानुविष्टो नासौ दुःखभुगीश्वरः प्रभुत्वात् सर्वं पश्यति सर्वं कारयति नासौ दुःखभुग् य एवं वेद" इति पौत्रायणश्रुतेरविरोधः। "नरकेऽपि वसन्नीशो नासौ दुःखभुगुच्यते। नीचोच्चतैव दुःखादेर्भोग इत्यभिधीयते। नासौ नीचोच्चतां याति पश्यत्येव प्रभुत्वतः" इति भागवततन्त्रे ॥*॥

॥*॥ इति चतुर्थमधिकरणम्[4] ॥*॥

"अथैतयोः पथोर्न कतरेण च न तानीमानि[7] क्षुद्रमिश्राण्यसकृदावर्तीनि भूतानि[8] जायस्व म्रियस्वेत्येतत् तृतीयं स्थानम्" इति गतिस्वातन्त्र्यं भूतानां प्रतीयत इत्यत आह—

## ॥ विद्याकर्मणोरिति तु प्रकृतत्वात् ॥१८॥

विद्याकर्मापेक्षयैवैतद्[9] वचनम्। तयोरपि प्रकृतत्वात्।

---

१ प्र. पाठेऽत्रैकादशमधिकरणं पूर्यते। २ "नरकाणि च" ३ "इति भारते" इति प्र. पाठौ। ४ प्र. पाठेऽत्र द्वादशमधिकरणम्। ५ "विसृजति" इति प्र. पाठः। ६ प्र. पाठेऽत्र त्रयोदशमधिकरणम्। ७ "कतरेण च तानीमानि" इति प्र. पाठः। द्विनञ्के प्राचीनपाठे—एतयोर्विद्याकर्मणोः पथोः यानि भूतानि न कतरेणापि पथा युक्तानि तानि न कतरेण च देवयानेन पितृयानेन वा गच्छन्तीत्यर्थः। "विद्याकर्मरहितानां देवयानपितृयानाभ्यां गतिर्न लभ्यते" इति च तत्त्वदीपिका। ८ "भूतानि भवन्ति" ९ "विद्याकर्मापेक्षयैतत्" इति प्र.पाठौ।

भाष्यम्

" विद्यापथः कर्मपथो द्वौ पन्थानौ प्रकीर्तितौ । तद्वर्जितस्त्रिधा याति तिर्यग् वा नरकं तमः " इति च भारते[1] ॥*॥

॥*॥ इति पञ्चममधिकरणम्[2] ॥*॥

"यत्र दुःखं सुखं तत्र सर्वत्रापि प्रतीयते । अपि नीचगतौ किञ्चित् किमु मानुषदेहिनः " इति वचनान्महातमस्यपि सुखप्राप्तिरित्यत आह—

॥ न तृतीये तथोपलब्धेः ॥१९॥

" अथाविद्वानकर्माऽवाग् गच्छति त्रिधा ह वावाग्[3] गच्छति तिर्यग् यातना तम इति द्वे वाव सुखानुवृत्ते न तमः सुखानुवृत्तं केवलं ह्येवात्र दुःखं भवति " इति श्रुतेर्न तृतीयावाग्गतौ सुखम् ॥*॥

॥ स्मर्यतेऽपि च लोके ॥२०॥

"तिर्यक्षु नरके चैव सुखलेशो विधीयते । नान्धे तमसि मग्नानां सुखलेशोऽपि कश्चन" इति भविष्यत्पर्वणि ।

लोकसिद्धं च[4] । चशब्दाल्लोकसिद्धिरपि स्मार्तेत्याह ।

"अतिप्रिये यथा राजा न दुःखं सहते क्वचित् । अत्यप्रिये सुखमपि तथैव[5] परमेश्वरः" इति हि ब्राह्मे ॥*॥

॥ दर्शनाच्च ॥२१॥

" नारायणप्रसादेन समिद्धज्ञानचक्षुषा । अत्यन्तदुःखसँल्लीनान् निश्शेषसुखवर्जितान् । नित्यमेव तथाभूतान् विमिश्रांश्च गणान् बहून् । निरस्ताशेषदुःखांश्च नित्यानन्दैकभागिनः । अपश्यत् त्रिविधान् ब्रह्मा साक्षादेव चतुर्मुखः " इति दर्शनवचनाच्च पाद्मे॥*॥

॥ तृतीये शब्दावरोधः संशोकजस्य ॥२२॥

तृतीये तृतीयतमसः श्रवणादेव शब्दानुसारेण संशोकजमोहप्राप्तिस्मरणाच्च[6]—

"महातमस्त्रिधा प्रोक्तमूर्ध्वं मध्यं तथाऽधरम् । श्रवणेनैव मूर्च्छादिरधरस्य यतो भवेत् । तस्मान्न विस्तरेणैतत् कथ्यते राजसत्तम " इति कौर्मे ॥*॥

॥*॥ इति षष्ठमधिकरणम्[7] ॥*॥

" धूमो भूत्वाऽभ्रं भवति " इत्याद्यन्यभावः श्रूयते । स कथमित्यतो ब्रवीति—

॥ तत्स्वाभाव्यापत्तिरुपपत्तेः ॥२३॥

धूमादिषु प्रविश्य तद्गतौ गतिः स्थितौ[8] स्थितिरित्यादिरेव तद्भावापत्तिः । नह्यन्यस्यान्यभावो

---

१ "इति भारते" इति प्र.पाठः । २ प्र. पाठेऽत्र चतुर्दशमधिकरणम् । ३ वाव अवाक् (वावाक्) इति पदपाठः। 'वावावाक्' इति वक्तव्ये संहितायां " लोपः समाने " इति सूत्रादेकवकारलोपः । ४ "गतिः" ५ "चैतत्" इति प्र. पाठौ । ६ प्र. पाठे "मोहप्राप्तिः" इति भाष्यम् । ततः परम् "स्मरणाच्च" इत्येतत् त्रयोविंशं सूत्रम् । ७ प्र. पाठेऽत्र पञ्चदशमधिकरणम् । ८"तत्स्थितौ" इति प्र. पाठः ।

भाष्यम्

युज्यते । नच तत्पदप्राप्तिः । गारुडे च—

"धूमादिभावप्राप्तिश्च तद्गतौ गतिरेव तु । स्थितौ स्थितिः प्रवेशश्च लघुत्वादिस्तथैव च । नह्यन्यस्यान्यथाभावो नच तत्पदमिष्यते । विद्यागम्यं पदं यस्मान्न तत् प्राप्यं हि कर्मणा । एकदेशस्वभावेन वागभेदाऽपि युज्यते । यथा जीवः परं ब्रह्म ब्रह्मेदं जगदित्यपि" इति ॥*॥

॥*॥ इति सप्तममधिकरणम्[1] ॥*॥

बहुस्थानगमनात् कल्पान्तमप्येवं स्यादित्यत आह—

॥ नातिचिरेण विशेषात् ॥२४॥

"तद् य इह रमणीयचरणा अभ्याशो ह यत् ते रमणीयां योनिमापद्यन्ते" इति विशेषान्नातिचिरेण । "स्वर्गाल्लोकादवाक् प्राप्तो वत्सरात् पूर्वमेव तु । मातुः शरीरमाप्नोति पर्यटन् यत्रतत्र च" इति च नारदीये ॥*॥

॥*॥ इत्यष्टममधिकरणम्[2] ॥*॥

"त इह व्रीहियवा[3] ओषधिवनस्पतयस्तिलमाषा[4] इति जायन्ते" इति श्रवणादनर्थफलत्वं यज्ञादेरित्यतो वक्ति—

॥ अन्याधिष्ठिते पूर्ववदभिलापात् ॥२५॥

अन्याधिष्ठिते व्रीह्यादिशरीरे[5] प्रवेशः । नतु भोगोऽस्य । "धूमो भूत्वाऽभ्रं भवति" इत्यादिपूर्वोक्तवत्[6] ।

"सोऽवाग् गतः स्थावरान् प्रविशत्यभोगेनैवं[7] व्रजन् स्थूलं शरीरमेति स्थूलाच्छरीराद् भोगाननुभुङ्क्ते" इत्यभिलापात् कौषारवश्रुतौ । "स्वर्गादवाग् गतो देही व्रीह्यादी[8]तरदेहगः । अभुञ्जंस्तु क्रमेणैव देहमाप्नोति कालतः" इति च वाराहे[9] ॥*॥

॥ अशुद्धमिति चेन्न शब्दात् ॥२६॥

हिंसारूपत्वात् पापस्यापि सम्भवाद् दुःखं च भवत्विति चेत्, न । शब्दविहितत्वात् ।

हिंसा त्ववैदिकी[10] या तु तयाऽनर्थो ध्रुवं भवेत् । वेदोक्तया हिंसया तु नैवानर्थः कथञ्चन" इति हि वाराहे[11] ॥*॥

॥*॥ इति नवममधिकरणम्[12] ॥*॥

"स्वर्गादवाग् गतश्चापि मातुरेवोदरं व्रजेत्" इति वचनात्, "य एव गृही भवति यो वा रेतः सिञ्चति तमेवानुविशति" इति श्रुतिः कथमित्यत आह—

॥ रेतःसिग्योगोऽथ ॥२७॥

---

१ प्र. पाठेऽत्र षोडशमधिकरणम् । २ प्र. पाठेऽत्र सप्तदशमधिकरणम् । ३ "व्रीहियवाः" इति प्र. पाठः । ४ "तिला माषाः" इति प्र. पाठः क्वचित् । तिलमाषा इत्येव च पद्मनाभतीर्थसम्मतः पाठः । ५ "व्रीह्यादिशरीरे" ६ "पूर्वोक्तिवत्" ७ "प्रविश्याभोगेनैव" ८ "व्रीह्यादि—" ९ "इति वाराहे" १० "त्ववैदिकी" ११ "इति वाराहे" इति प्र. पाठाः । १२ प्र. पाठेऽत्राष्टादशमधिकरणम् ।

भाष्यम्

"ततो रेतःसिचमेवानुप्रविशत्यथ मातरमथ प्रसूयते स कर्म कुरुते" इति कौण्ठरव्य-श्रुतेः पितरमेव प्रथमतो विशति[1] ।

मातृप्राप्तेः पश्चादपि भाव्यत्वात् ॥*॥

॥*॥ इति दशममधिकरणम्[2] ॥*॥

"देहं गर्भस्थितं क्वापि प्रविशेत् स्वर्गतो गतः" इति वचनात् पश्चादेव प्रविशतीत्यत आह—

## ॥ योनेः शरीरम् ॥२८॥

पितृशरीरान्मातृयोनिमनुप्रविश्य तत एव शरीरं प्राप्नोति ।

अनुव्याख्यानम्

ॐ॥ स्वाभाविकान्यथानामसहाभावान्यथोक्तयः । अविशेषो विशेषौ[3] च सहभावो विमिश्रता ॥ ॥१॥ विरुद्धोक्तिः सहस्थानं वैयर्थ्यं चान्यथागतिः । युक्तयः पूर्वपक्षस्य गुणाधिक्यार्थतोभवौ ॥२॥ उपपत्तिर्द्विरूपत्वमाधिक्यमनुरूपता । योग्यता प्रबलत्वं[4] च विभागः कारणाभवः । क्लृप्तिरन्यागतिश्चैव सिद्धान्तस्यैव साधकाः ॥३॥*॥ बीजपूरुषयोनीनां सङ्गातिनियमोज्झितिम् । अथशब्देन भगवानाह कारणतश्च ताम् ॥४॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीमद्ब्रह्मसूत्रानुव्याख्याने
— तृतीयाध्यायस्य प्रथमः पादः—

---

न्यायविवरणम्

ॐ॥ "भूतबन्धस्तु संसारो मुक्तिस्तेभ्यो विमोचनम्" इति वचनात् स्वाभाविकमरणमेव मुक्तिरिति न मन्तव्यम् । मुक्तिसाधनत्वेन ज्ञानादिगुणाधिक्योपदेशात् । मरणे भूतवियोगस्यैवाभावात् । "भूतयुक्तः परं लोकमिमं लोकं च गच्छति" इति वचनाच्च[5] ॥१॥

"इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इत्यत्र भूतानीति सामान्यनामानुक्त्वाऽऽप इति विशेषनामकथनादपामेव सहगतिरिति न वाच्यम् । त्र्यात्मकत्वादपामर्थतः सर्वभूतानां गतिप्राप्तेः ॥२॥

नच भूतानि गच्छन्तीति सहैवानुक्तेस्तदभावः । प्राणगतेरुपपत्तित उक्तत्वात् ॥३॥

नच "अग्निं वागप्येति" इत्याद्यन्यथोक्तेः प्राणानां चासहगतिः[6] । द्विरूपत्वात् प्राणानाम् ॥४॥

नच प्रथमतो भूतानि जुह्वतीति विशेषानुक्तेर्भूतानामसहगतिः । भूतानि जुह्वतीत्युपक्रमादपि "इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इत्युपसंहारस्याधिक्यात् तदनुसारेणोप-

---

१ "प्रविशति" इति प्र. पाठः । २ प्र. पाठेऽत्रैकोनविंशमधिकरणम् । ३"अविशेषविशेषौ" ४"बलवत्त्वम्" ५ "इत्यादिवचनाच्च" इति प्र. पाठः । यद्यपि प्राचीनपाठे भाष्यरीत्या नात्राधिकरणपूर्तिः । तथाऽपि पक्षान्तराश्रयणेन न्यायमाला तद्विवरणं च प्रवृत्ते इति न विरोधः । टीकाकृत्पादैस्तु न्यायमालानुसारेणैव भाष्येऽप्यधिकरणरचना कृतेत्यवगन्तव्यम् । ६ "च न सहगतिः" इति प्र. पाठः ।

भाष्यम्

“ दिवः स्थास्नून् गच्छति स्थास्नुभ्यः पितरं पितुर्मातरं मातुः शरीरं शरीरेण जायत इति सम्मितमथासम्मितं स्थास्नुभ्यो जायते पितुर्मातुरन्तरे वा गर्भे वा बहिर्वा ” इति पौष्यायणश्रुतेः। “ स्थावराणि दिवः प्राप्तः स्थावरेभ्यश्च पूरुषम्। पुरुषात् स्त्रियमापन्नस्ततो देहं यथाक्रमम्। देहेन जायते जन्तुरिति सामान्यतो जनिः। विशेषजननं चापि प्रोच्यमानं निबोध मे। स्थास्नुष्वथापि पुरुषे प्रमदाया-मथापि वा। गर्भे वा बहिरेवाथ क्वचित् स्थानान्तरेषु वा ” इति च ब्राह्मे[1] ॥*॥

॥*॥ इत्येकादशमधिकरणम्[2] ॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते

श्रीमद्ब्रह्मसूत्रभाष्ये

— तृतीयाध्यायस्य प्रथमः पादः —

---

न्यायविवरणम्

क्रमोक्तश्रद्धाशब्दस्यापि ता एवार्थ इत्यापत्तेः। उपक्रमविरोधेनोपसंहारानुपपत्तेः। उपक्रमप्रामाण्यार्थमेवोपसंहारानुसारित्वमङ्गीकर्तव्यम्। व्याख्यानस्य पश्चात्तनत्वनियमात्। उपक्रमानुसारित्वनियमेऽप्युपसंहारस्योपसंहारेणैवोपक्रमार्थो ज्ञायते ॥५॥

नच विशेषाश्रवणनियम एव बलवान्। स्थानान्तरश्रवणस्याप्येतदनुरूपत्वात्। आर्थिकश्रवणमप्यनुक्तिं बाधत एव, किमुत[3] स्थानान्तरगतं स्पष्टश्रवणमिति कैमुत्यार्थमेव “ इष्टादिकारिणां[4] प्रतीतेः” इति परिहारान्तरमुक्तम् ॥६॥

नच “ अपाम सोमममृता अभूम ” इति विशेषत एव मोक्षफलस्याप्युक्तेः कर्मैव तत्साधनमिति[5] मन्तव्यम्। “ नान्यः पन्था अयनाय विद्यते”, “ स य आत्मानमेव लोकमुपास्ते ”, “ यावदिन्द्रो यावन्मनुर्यावदादित्यः ” इत्यादिश्रुतिबलादमृतत्वशब्दस्य[6] यथायोग्यमेवार्थकल्पनोपपत्तेः ॥७॥

नचानुशयस्यापि सहभावात्[7] स्वर्ग एव फलदत्वम्। “ भुक्तशेषानुशयवान् ” इत्यादिवचनबलाद्[8] यथायोग्यमेव फलदानोपपत्तेः ॥८॥

नच मार्गस्य[9] सहभावाद् यथागतमेवाऽगमनमिति नियमः। वचनबलाद् यथायोग्यमेवाऽगमनोपपत्तेः ॥९॥

नच “ इष्टापूर्ते दत्तमित्युपासते ” इत्युपशब्देनेष्टादिभिराचारस्य सहपाठाच्चरणफलं पुनरावृत्तिं करणफलत्वेन भ्रमाद् वदन्तीति वाच्यम्। “नान्यः पन्थाः” इति वचनादेवो[10]भयोरपि चरणशब्देनैवोक्तेर्योग्यत्वात् ॥१०॥

---

१ “स्थानान्तरेषु चेति ब्राह्मे” इति प्र. पाठः। २ प्र. पाठेऽत्र विंशमधिकरणम्। ३ “किमु” ४ “नेष्टादिकारिणां” इति प्र. पाठौ। ५ “कर्मैव मोक्षसाधनम्” इति प्र. पाठः। “कर्मैतत्साधनम्” इति क्वचित् प्राचीनपाठः। ६ “यावन्मनुरित्यादिश्रुतिबलादमृतशब्दस्य” ७ “अनुशयस्य सहभावात्” ८ “इत्यादिवचनात्” ९ “मार्गस्यापि” १० “इत्यादिवचनादेव” इति प्र.पाठाः।

न्यायविवरणम्

नच भयफलकामादिमिश्रबुद्धित्वादिष्टादिकारिणां संसारः, अनिष्टादिकारिणां तदभावान्मुक्तिरिति वाच्यम् । तेषां प्रबलदोषश्रुतेः ॥११॥

नच नरकभोगस्यानित्यत्वकथनान्नित्यनरकोक्तिर्विरुद्धा । " रौरवोऽथ महांश्चैव वह्निर्वैतरणी तथा । कुम्भीपाक इति प्रोक्तान्यनित्यनरकाणि तु । तामिस्रश्चान्धतामिस्रो द्वौ नित्यौ सम्प्रकीर्तितौ " इति विभागात् ॥१२॥

नच सहस्थानादीशस्यापि दुःखप्राप्तिः[1] । स्वातन्त्र्यात् कारणाभावात् ॥१३॥

नच साधनेन सह श्रुतेस्तद्वत् फलेऽपि जीवस्य स्वातन्त्र्यम् । अविहितत्वेन कारणाभावात् । "अथैतयोः पथोः" इत्यस्य च साधनार्थत्वात् ॥१४॥

नच दुःखसहावस्थात्वादन्धतमस्यपि[2] सुखम् । ईशस्याप्रियत्वेनैव कारणाभावात् ॥१५॥

नच धूमादिदेवतासहावस्थानात् कर्मिणोऽपि तत्पदप्राप्तिः। तन्निमित्तविद्याख्यकारणाभावात् ॥१६॥
नच तैस्तैः सहावस्थानादतिचिरत्वम् । " वत्सरात् पूर्वमेव तु " इति क्लृप्तकालादधिकावस्थाने कारणाभावात् ॥१७॥

नच व्रीह्यादिजीवैः[3] सहावस्थानाद् दुःखप्राप्तिः । शब्दविहितत्वेन पापाख्यकारणाभावात् ॥१८॥
नच वैयर्थ्यात् पितृशरीरागमनम्[4] । "ईशक्लृप्त्यैव पितरं प्रविश्याऽयाति मातरम्" इतीशक्लृप्तत्ववचनात् ॥१९॥

नच पितुः सकाशादन्यतो वौदर्यगर्भस्थशरीरमेव प्रवेष्टुमुपपत्तेर्योनिप्रवेशाभाव इति वाच्यम् । " योनिद्वारेण देहं च प्राप्नोति प्रायशो नरः " इति वचनात् सामान्यतो गत्यन्तराभावात् । " विशेषकारणादेव विशेषाज्जनिरिष्यते । सामान्यजननं चैव नृणां सामान्यहेतुना[5] " इति वचनाच्च ॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे
तृतीयाध्यायस्य प्रथमः पादः

---

१ "नरकदुःखप्राप्तिः" २ "दुःखसहस्थायित्वादन्धे तमस्यपि। ३ "व्रीह्यादिजीवैः" ४ "वैयर्थ्यं पितृशरीरागमने" ५ "सामान्यहेतुतः" इति प्र. पाठाः ।

भाष्यम्

ॐ॥ भक्तिरस्मिन् पाद उच्यते । भक्त्यर्थं भगवन्महिमोक्तिः ।

अनुव्याख्यानम्

ॐ॥ पश्चाद्दृष्टयविज्ञानकालदुःखपृथग्भवाः । स्थानभेदो विरुद्धत्वं न्यायसाम्यं स्वतोभवः ॥१॥
गुणसाम्यमयोगश्च तर्कबाधो विलोमता । नानाभावः प्रलोभश्च युक्तयः पूर्वपक्षगाः ॥२॥
अशक्यकर्तृताशक्तिः स्वतोऽबोधस्तदेव च । अमानक्लृप्तिसन्मानव्यवस्थात्यल्पताभवाः ॥३॥
विशेषदृष्टिवाक्ये च पुंशक्तिः सुनिदर्शनम् । अलौकिकत्वमाधिक्यं स्वातन्त्र्यं निर्णयप्रमाः ॥४॥*॥

न्यायविवरणम्

ॐ ॥ पश्चाद्दृष्टेः स्वप्नविषयस्यासत्त्वं न वाच्यम् । अशक्यकरणशक्तिमत्त्वादीश्वरस्य संस्कारेण सृष्ट्वा पुनः संस्कारमात्रतामापाद्य तस्यापि तिरोधानोपपत्तेः । जाग्रत्त्वमात्रस्य[1] भ्रान्तित्वात् ॥१॥

नचाविज्ञानमात्रेण स्वप्नप्रतीत्या ज्ञानशक्त्यैव स्वप्नतिरोधानं नेशेनेति वाच्यम् । बोधे जीवस्यास्वातन्त्र्यात् । ज्ञानाज्ञानयोस्तदन्यत्वे जडत्वात् कैमुत्येनास्वातन्त्र्यात् । तत्स्वरूपत्वे तेनैव व्याख्यातत्वात् । उभयात्मकत्वे दोषद्वयापातात् । अनुभयत्वे[2] स्वव्याहतेः । तावन्मात्रनिमित्तत्वे मानाभावात् । सर्वस्येशहेतुत्वे[3] मानाच्च ॥२॥

नच कालापेक्षयैव जागरितम् । अचेतनत्वादेव कालस्य । चेतनान्तरस्याप्यस्वातन्त्र्यात् ॥३॥

नच परमात्मनोऽन्यत्रावस्थाने दुःखित्वप्राप्तेर्नाडीषु सुप्तिर्न भवति । उभयस्वीकारोपपत्तौ मानस्य क्लृप्त्यकरणमित्यव्यवस्थितिदोषादतिप्रसङ्गात् ॥४॥

नच प्रबोधस्य पृथगपि कारणदृष्टेः क्वचित् तदेव । "न ऋते त्वत् क्रियते किञ्चनाऽरे" इति[4] श्रुतेस्तत्रापीशकृतत्वे सम्यङ्मानात् ॥५॥

नच राजादीनां पृथग्दर्शनादीशान्तरकल्पना । "देशकालविशेषेऽपि स्वप्नादीनां स एव हि । तिरस्कर्ता च कर्ता च न खण्डेशः स राजवत्" इति श्रुतिमानात् ॥६॥

नच मोहे ब्रह्मप्राप्तिरेवं[5] पृथगवस्थात्वादिति वाच्यम् । परिशेषमानादर्धप्राप्तित्वावगमात् ॥७॥

नच स्थानभेदाद् विष्णोरपि भेदः । "अयमेव सः", "नेह नानाऽस्ति किञ्चन" इति[6] श्रुतिबलात् स्थानानां भेदस्तस्याभेद इति[7] व्यवस्थोपपत्तेः ॥८॥

नच रूपवत्त्वारूपवत्त्ववचनयोर्विरोधादप्रामाण्यम् । अप्राकृतरूपवत्त्वमिति व्यवस्थोपपत्तेः ॥९॥

नच परमात्मना चेतनत्वन्यायसाम्येन जीवस्याप्यभेदः । अत्यल्पगुणत्वादि[8]विरोधात् ॥१०॥

नच सादृश्यसत्त्वात् साधनं विनैव जीवस्य तादृक्त्वव्यक्तिः । अनादितः संसारस्यानिवृत्तत्वेन भावात् ॥११॥

नच मुक्तत्वादिगुणसाम्याद् ब्रह्मादीनां भक्त्यादिगुणसाम्यम् । "यथाऽधिकारो विशिष्यत एवं ज्ञानं भक्तिर्बलं च विशिष्यते । मुक्तावानन्द एते च गुणा विशिष्यन्तेऽत आहुर्ब्रह्मणे मुक्ता बलिं हरन्ति" इत्यादिविशेषदृष्टेः ॥१२॥

---

१ "जाग्रत्त्वप्रतीतिमात्रस्य" २ "अनुभयात्मकत्वे" ३ "ईशवशत्वे" ४ "त्वत् क्रियत इति श्रुतेः" ५ "ब्रह्माप्राप्तिरेव" ६ "इत्यादि—" ७ "अभेद एवेति" ८ "अल्पगुणत्वादि—" इति प्र.पाठाः ।

न्यायविवरणम्

नच संहारकर्तुरसंहारादन्यरक्षाया अयोगः । "स सृजति स पालयति स विनाशयति" इत्यादि-विशेषवाक्यात् । अन्नदानाद्युपपत्तेश्च ॥१३॥

नचाव्यक्तस्वभावस्य दर्शने तर्कबाधः। अनन्तशक्तित्वाद् विष्णोस्तच्छक्त्याऽव्यक्तस्यापि दर्शनो-पपत्तेः ॥१४॥

नच गुणानां गुणिस्वरूपत्वं विरुद्धम् । कालादिदृष्टान्तात् ॥१५॥

नच ब्रह्मानन्दादीनामन्यथात्वादतच्छब्दत्वं तच्छब्दत्वे लोकोपमत्वं वेति[1] विलोमता।"अलौकिका-स्तस्य शब्दास्तथाऽर्था अलौकिको ह्येष विष्णुः परत्वात् । तथाऽपि शब्दा लौकिका अप्यमुष्मिन् प्रवर्तमाना अधिकार्थान् वदन्ति" इत्यादिश्रुतिभ्योऽलौकिकत्वावगमात् ॥१६॥

नच ब्रह्माद्यानन्दवैचित्र्येऽपि[2] बिम्बभूतविष्ण्वानन्दवैचित्र्यम् । आदित्यादिवदाधिक्यात् । नहि सूर्य-कान्तप्रतिबिम्बस्याग्निजनकत्वशक्तिर्न जलगतस्येत्येतावता सूर्यवैचित्र्यम्[3] । आधिक्यं हि तत्र निमित्तम् । सूर्यचन्द्रादिप्रतिबिम्बं विनाऽन्यत्र तथा विशेषादृष्टेः ॥१७॥

नच नानाभावाद् विष्णोश्चित्तप्रतिबिम्बरूपता। आधिक्यादेव । प्रतिबिम्बे हि दोषाश्च प्रतीयन्ते । अतो हि श्रुतिः प्रतिषेधति—"नेदं यदिदमुपासते" इति ॥१८॥

नच नानावतारकौतुकदर्शनाद् विष्णोः क्वचिद् देशकालान्तरे कौतुकादेव सृष्ट्यादिकर्मकुर्वन्[4] अन्य-मेव सामस्त्येन नियोजयति। "सर्वत्र सर्वमेतस्मात्" इत्यादिश्रुत्या क्रीडायामपि स्वातन्त्र्यात्। "स्वातन्त्र्यात् क्रीडते विष्णुर्नच स्वातन्त्र्यमन्यगम् । करोति क्वापि नियता क्रीडा सृष्ट्यादिगाऽस्य[5] च। नियतक्रीडनादेव कर्ता नान्योऽस्ति कस्यचित् । अस्वतन्त्रो हि चलति चलचित्तादशक्तितः । स्वतन्त्रः पूर्णशक्तिः सन् कुतोऽसौ नियतिं त्यजेत्" इति श्रुतेश्च ॥१९॥

नच कर्मान्वयव्यतिरेकात् फलस्येश्वरः फलदातेति प्रलोभमात्रम् । तस्यैव स्वातन्त्र्यात् । "कर्माण्यनन्तानि यथेष्टमीशः सम्पाद्य तेषां फलमिच्छयैव । क्वचिद् ददाति क्वच नो ददाति नह्यानन्त्यात् कर्मणां भोगनाशः । स्वातन्त्र्यं चेत् कर्मणां सर्वभोगः स्यान्नह्येवं क्वापि तत् केनचित् स्यात्। अतोऽपि[6] स स्वेच्छया किञ्चिदेव फलं कुर्याद् विफलं प्रायशश्च। क्वचिज्ज्ञानं[7] जनयन् भस्म कुर्यात् स्वेच्छावृत्तिस्तस्य विष्णोः सदैव" इति ब्रह्माण्डे। "स्वतन्त्र ईश एवैक-स्तद्वशं[8] कर्म सर्वदा । अत ईशत्वमीशस्य नहीशोऽन्यः कथञ्चन" इति श्रुतिः[9]। अतः प्रलोभमात्र-कल्पने[10] श्रुतहानिरश्रुतकल्पना चेति हरिरेव फलप्रदः ॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते

श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे

— तृतीयाध्यायस्य द्वितीयः पादः —

---

१ "चेति" २ "वैचित्र्ये विम्बभूत—" ३ "सूर्ये वैचित्र्यम्" ४ "सृष्ट्यादि कुर्वन्"(?) ५ "सृष्ट्या-दिकाऽस्य" ६ "अतो हि" ७ "क्वचिदज्ञानम्"(?) इति प्र.पाठाः। ८ "तत्तन्त्रम्" इति क्वचित् पठ्यते । तद्वशमिति तु बहुलम् । ९ "श्रुतेः" १०"प्रलोभकल्पने" इति प्र. पाठौ ।

भाष्यम्

॥ सन्ध्ये सृष्टिराह हि ॥१॥

न स्वप्नोऽपि तं विना प्रतीयते ।

"न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते" इत्यादिश्रुतेः ॥*॥

॥ निर्मातारं चैके पुत्रादयश्च ॥२॥

"य एषं[1] सुप्तेषु जागर्ति कामं कामं पुरुषो निर्ममाणः[2]" इति च । "एतस्माद्ध्येव पुत्रो जायत एतस्माद् भ्रातैतस्माद् भार्या यदेनं पुरुषमेष स्वप्नेनाभिहन्ति" इति गौपवन-श्रुतिश्च ॥*॥

केन साधनेन? —

॥ मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥३॥

मनोगतान्[3] संस्कारान् स्वेच्छामात्रेण प्रदर्शयति, नान्येन साधनेन, सम्यगनभिव्यक्तत्वात् । ब्रह्माण्डे च —

"मनोगतांस्तु संस्कारान् स्वेच्छया परमेश्वरः । प्रदर्शयति जीवाय स स्वप्न[4] इति गीयते । यदन्यथात्वं जाग्रत्त्वं सा भ्रान्तिस्तत्र तत्कृता अनभिव्यक्तरूपत्वान्नान्यसाधनजं भवेत्" इति ॥*॥

अनुव्याख्यानम्

वासनाः सर्ववस्तूनामनाद्यनुभवागताः । सन्त्येवाशेषजीवानामनादिमनसि स्थिताः ॥५॥ त्रिगुणात्मकं मनोऽस्त्येव यावन्मुक्तिः सदातनम् । तत्रैवाशेषसंस्काराः सञ्चीयन्ते सदैव च ॥६॥ सूक्ष्मत्वेन लये सच्च प्राकृतैरुपचीयते । सृष्टिकाले यदा तन्न कुतः संसार-संस्थितिः ॥७॥ संस्कारैर्भगवानेव सृष्ट्वा नानाविधं जगत् । स्वप्नकाले दर्शयति भ्रान्तिर्जाग्र-त्त्वमेव हि ॥८॥ अदृष्टे चाश्रुते भावे न भाव उपजायते । अदृष्टादश्रुताद् भावान्न भाव उपजायते ॥९॥ इति श्रुतिपुराणोक्तिरनादित्वात्तु युज्यते । कदाचिद् दर्शनायोग्यं यत् तत्रापि विभागतः ॥१०॥ दृष्टं समाधिकरणं दृश्यते[5] च स च भ्रमः । वासनामात्रमूलत्वाज्जाग्रद्वत् स्पष्टता नच ॥११॥ भेदोऽभेदोऽथवा द्वन्द्वमिति प्रश्नो न युज्यते । द्रष्टुः स्वप्नस्य दृष्टत्वाद् भेदस्यैवाखिलैर्जनैः ॥१२॥ प्रश्नदोषा हि चत्वारः स्वव्याहतिरसङ्गतिः । सिद्धार्थता च वैफल्यं न तैः स्यात् तत्त्वनिर्णयः ॥१३॥ तत्त्वनिर्णयवैलोम्यं स्याद् वादेऽपि हि निग्रहः । उद्भावनीयमेव स्यान्न कथावसितिर्भवेत् ॥१४॥ विजिगीषुकथायां तु कथावसितिकारणम् । परिहारेऽपि सिद्धत्वं दूषणं प्रतिवादिनः । प्रतिज्ञायां तदन्यस्य सिद्धतैव हि साधका[6] ॥१५॥ आश्रयव्याश्रयासिद्धी साध्यासिद्धिश्च दूषणम् । केषाञ्चिन्नच ते दोषा व्याप्तौ सत्यां कथञ्चन ।

---

१ "य एषु" २ "निर्मिमाणः" ३ "अनादिमनोगतान्" इति प्र. पाठाः। ४ प्राचीनकोशे "सः स्वप्नः" इति पठ्यते । बहुलमीदृशः प्रयोगः प्राचीनकोशेषु दृश्यते । ५ "दृश्यतेऽत्र" ६ "साधिका" इति प्र. पाठौ ।

भाष्यम्

॥ सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥४॥

साधनान्तराभावेऽपि भावाभावसूचकत्वेन चेश्वरो[1] दर्शयति ।

"यदा कर्मसु काम्येषु स्त्रियं स्वप्नेऽभिपश्यति । समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने" इत्यादिश्रुतेः ।

हिशब्दाद् दर्शनाच्च ।

अनुव्याख्यानम्

॥१६॥ दोषो व्याहतिरेवास्ति नृशृङ्गास्तित्वसाधने । यत्र व्याहतता नास्ति कोऽतिसङ्गोऽस्य साधने ॥१७॥ प्रत्यक्षागममूलास्तु न्यायाः सर्वे भवन्ति हि । न्यायाभासा अमूलाः स्युर्न्यायस्यान्यस्य तौ पुनः ॥१८॥ अदृष्टे व्यभिचारे तु साधकं तदिति स्फुटम् । ज्ञायते साक्षिणैवाद्धा मानबाधे न तद् भवेत् ॥१९॥ यत् साक्षिणैव मानत्वं मानानामवसीयते । अमानस्य तु मानत्वं मानसत्वाच्चलं भवेत् ॥२०॥ उत्सर्गतोऽपि यत् प्राप्तमपवादविवर्जितम् । व्यभिचार्यपवादेन मानमेव भविष्यति ॥२१॥ अतो हि भोजनादीनामिष्टसाधनतानुमा । मानं व्यवहृतौ नित्यं व्यभिचारो हि तत्र च ॥२२॥ व्याप्तत्वे व्याश्रयत्वं तु कथमेव हि दूषणम् । रोहिण्युदय आसन्नः कृत्तिकाऽभ्युदिता यतः । इत्युक्ते साधनं नो किं नह्याङ्गैवात्र साधकौ[2] ॥ ॥२३॥ अन्यत् सदसतोर्विश्वमिति[3] च व्याहतेरमा । असिद्धसाधने दोषः को व्याप्तिर्यदि विद्यते ॥२४॥ व्याप्तिश्च व्यतिरेकेण तत्र तैश्चैव गम्यते[4] । अप्रसिद्धस्य साध्यस्य साधकत्वं यदेष्यते । लिङ्गस्योक्तौ विशेषोऽयं केन मानेन गम्यते॥२५॥ साधनं परमाण्वादेर्यदाऽसिद्धस्य[5] चेष्यते । यथानुभवमेवैतन्नाङ्गीकार्यं कुतस्तदा ॥२६॥ यत्र नातिप्रसङ्गोऽस्ति मानं नच विपर्यये । क्लिष्टकल्पनयैवात्र साध्यमित्यतिदुर्वचः ॥२७॥ परिशेषो मिथःसिद्धिः चक्रकस्वाश्रयादयः । असिद्धसाधकत्वेन पञ्चावयवतां विना । अङ्गीकार्याः समस्तैस्तन्नियमः किंनिबन्धनः । ॥२८॥ सिद्धसाधनतायां च न कथावसितिर्भवेत् । व्यभिचारो हेत्वसिद्धिरेकपक्षेऽपि दूषणम् ॥२९॥ साध्यसाधनवैकल्यं दृष्टान्तस्य विशेषणे । वैयर्थ्यमेकासिद्धौ च विशिष्टासिद्धिरेव हि ॥३०॥ अप्रयोजकता[6] तत्र प्रथमप्रश्नदूषणम् । सिद्धप्रश्नादिकं यत् तदाधिक्यान्तर्गतं भवेत् ॥३१॥ अर्थापत्त्युपमाभावा अनुमान्तर्गताः क्वचित् । प्रत्यक्षान्तर्गतोऽभावः सुखादेर्नियमेन च ॥३२॥ अन्यत्र झटिति प्राप्तः प्रारम्भाद्याश्च युक्तयः । आगमार्थावसित्यर्था नियतव्याप्तयोऽखिलाः ॥३३॥ वाक्यं प्रकरणं स्थानं समाख्या च तथाविधाः । कुरुपाण्डववत् तेषामुपपत्तेः पृथग् वचः ॥३४॥ स्वन्यायैः साधनं कार्यं परन्यायैस्तु दूषणम् । स्वन्यायैर्दूषणं च स्यात् साधितैः प्रतिवादिनः ॥३५॥ प्रसङ्गार्थतया प्रोक्ता न सिद्धान्तस्य दूषकाः । छलं जातिरिति द्वेधा व्याहत्यन्तरमिष्यते । जातिः स्वव्याहतिर्ज्ञेया छलमर्थान्तरोत्तरम् ॥३६॥ एवं संशोधितन्यायसदागमविरोधतः । नानिर्वाच्यमिह प्रोक्तं मायामात्रपदेन हि ॥३७॥ विलक्षणं

---

१ "सूचकत्वेनेश्वरः" २ "साधिका" इति प्र.पाठौ । ३ "सदसतो विश्वम्" इति प्राचीनकोशेषु पाठो दृश्यते । रेफस्खलनं सम्भावितम् । ४ "तैश्चावगम्यते" ५ "यद्यसिद्धस्य" ६ "अप्रयोजनता" इति प्र.पाठाः।

भाष्यम्

"यद् वाऽपि ब्राह्मणो ब्रूयाद् देवता वृषभोऽपिवा । स्वप्नस्थमथवा राजा तत् तथैव भविष्यति " इत्याद्याचक्षते[1] च स्वप्नविदो व्यासादयः ॥*॥

॥*॥ इति सन्ध्याधिकरणम् ॥*॥

अनुव्याख्यानम्

सदसतोरिति हि व्याहतं स्वतः । प्रतियोगित्वमप्यस्य ब्रह्मणोऽङ्गीकृतं भवेत् ॥३८॥ मिथ्या चेत् प्रतियोगित्वं वैलक्षण्यं ततो नहि । अविलक्षणत्वं सत्यं स्यान्मिथ्यात्वं ब्रह्मणस्ततः ॥३९॥ अनिर्वाच्यस्य सत्त्वं वा यदि धर्मा न केचन । ब्रह्मणो नैव जिज्ञास्यं जिज्ञासा धर्मनिर्णयः ॥ ॥४०॥ इदमित्थमिति ज्ञानं जिज्ञासायाः प्रयोजनम् । इत्थम्भावो हि धर्मोऽस्य न चेन्न प्रतियोगिता ॥४१॥ इत्थम्भावात्मकान् धर्मानाहुश्च श्रुतयोऽखिलाः । अदृश्यत्वादयोऽप्यस्य गुणा हि प्रभुणोदिताः ॥४२॥ यदि स्युस्तादृशा धर्माः सर्वज्ञत्वादयो न किम् । अन्यापेक्षा यदि स्युष्टे सत्त्वैवं देशकालगा ॥४३॥ देशकालानपेक्षा हि न सत्ता क्वापि दृश्यते । सर्वधर्मोज्झितस्यास्य किं शास्त्रेणाधिगम्यते॥४४॥ मिथ्याधर्मविधातुश्च वेदस्यैवाप्रमाणता । अप्राप्तां भ्रान्तिमापाद्य किं वेदो मानतां व्रजेत् ॥४५॥ नहि वेदं विना ब्रह्म वेद्यं धर्माश्च तद्गताः । वेदवेद्यस्य मिथ्यात्वं यदि नैक्यस्य तत् कथम् ॥४६॥ धर्मारोपोऽपि सामान्यधर्मादीनां हि दर्शने । इदन्तदादिधर्मित्वे धर्मोऽन्यः कल्प्यतेऽत्र हि ॥४७॥ सर्वधर्मविहीनस्य धर्मारोपः क्व दृश्यते । तदर्थं यदि धर्माणामारोपः साऽनवस्थितिः ॥४८॥ ईशतज्ज्ञानवेदाक्षजानुमामातृपूर्विणः । भ्रान्तिर्विश्वस्य येनैव मानाभासेन कल्प्यते ॥४९॥ तन्मात्रस्यान्यथा भावात्[2] किं न स्याद् विश्वसत्यता । येनेदं कल्प्यते भ्रान्तं भ्रान्तिस्तस्यैव किं न सा ॥५०॥ भ्रान्तत्वे तस्य विश्वारेरीशाद्यभ्रान्तमेव हि । भवेयुर्भ्रान्तयो नृणां नैवेशादेः कथञ्चन ॥५१॥ सत्यत्वमक्षजप्राप्तं यदि भ्रान्तमितीष्यते । प्रामाण्यमागस्यापि प्रत्यक्षादन्यतः कुतः ॥५२॥ साक्षिप्रत्यक्षतो ह्येव मानानां मानतेयते । साक्षिणः स्वप्रकाशत्वमनवस्था ततो नहि ॥५३॥ तात्कालिकं प्रमाणत्वमक्षजस्य यदा भवेत् । ऐक्यागमस्य किं न स्यात् तस्याप्येतादृशं यदि । ऐक्यप्रामाण्यमिथ्यात्वं[3] यदा विश्वस्य सत्यता ॥५४॥ ऐक्यवाक्यस्य मानत्वं यद्यबाध्यमितीष्यते । अक्षजस्यापि मानत्वं नाबाध्यं किमितीष्यते ॥५५॥ अद्वैतहानिसामान्यान्न विशेषश्च कश्चन । यदि स्वतस्त्वं प्रामाण्ये विश्वसत्ता कथं न ते ॥५६॥ प्रामाण्यस्य च मर्यादा कालतो व्याहता भवेत् । कालान्तरेऽप्यमानं चेदिदानीं मानता कुतः ॥५७॥ मिथ्यात्वमानं मोक्षेऽपि मानं किं नेति भण्यताम् । मानत्वेऽद्वैतहानिः स्यादमानत्वेऽप्यमोक्षता ॥५८॥ विश्वस्य पुनरापत्तिर्मिथ्यामानं यदा न मा । अस्ति चेन्मुक्त्यवस्था च द्वैतापत्तिरतोऽन्यथा ॥५९॥ अमुक्तत्वं तथा काले कालाधीना हि मुक्तता । काल एवाऽगमोऽप्याह मुक्तिं कालनिवर्तने । मुक्तेरपि निवृत्तिः स्यात् संसारित्वमतो भवेत् ॥६०॥ क्व च प्रत्यक्षतः प्राप्तमनुमागमबाधितम् । देहात्मत्वं यदि न तत् प्राप्तं प्रत्यक्षतः क्वचित् । मम देह इति ह्येव न देहोऽहमिति प्रमा ॥६१॥ उपचारश्च

---

१ "इत्याचक्षते" २ "भावे" इति प्र. पाठौ । ३ "ऐक्यप्रमाणमिथ्यात्वम्" इति प्र. पाठः । प्राचीनपाठे ऐक्यप्रामाण्यस्य ऐक्यागमप्रामाण्यस्य मिथ्यात्वं बाध्यत्वमित्यर्थः ।

अनुव्याख्यानम्

कृष्णोऽहमिति कर्दमलेपने। वस्त्रस्य यद्वदेवं स्याद् यद्युपाधिकृतं तदा। स्वतः शुक्लत्ववत् कार्ष्ण्यं न ममेति प्रतीयते॥६२॥ कथं च भेदो देहादेरात्मनो न प्रमीयते। जातमात्रा मृगा गावो हस्तिनः पक्षिणो झषाः। भयाभयस्वभोगादौ कारणानि विजानते॥६३॥ अस्मृतौ पूर्वदेहस्य विज्ञानं तत् कथं भवेत्। अन्वयव्यतिरेकादेरनुसन्धानविस्मृतौ॥६४॥ यदा देहान्तरज्ञानं देहैक्यावसितिः कुतः। व्यासत्वादात्मनो देहे व्यवहारेष्वपाटवात् ॥६५॥ भेदज्ञानेऽपि चाङ्गारवह्निवत् स्वाविविक्तवत्। भवन्ति व्यवहाराश्च नहि प्रत्यक्षगानपि॥६६॥ अर्थान् यथानुभवतः प्रतिपादयितुं क्षमाः। लोकास्ततो हि प्रत्यक्षसिद्धं नान्येन केनचित्॥६७॥ शक्यं वारयितुं क्वापि तच्चेन्नोत्तरगोचरम्। कथमेवोत्तरः कालस्तद्वो मोक्षश्च गम्यते॥६८॥ आगमोऽपि हि सामान्ये सिद्धे प्रत्यक्षतः पुनः। विशेषं गमयेदेव कथं शक्तिग्रहोऽन्यथा॥६९॥ अतीतानागतार्थेषु जाते शक्तिग्रहेऽखिलम्। विशेषं ज्ञापयेद् वाक्यं न तदज्ञातशक्तिके॥७०॥ शक्तिश्चेद् वर्तमाने स्यान्नातीतानागतं वदेत्। यदि शक्तिग्रहोऽन्यत्र कथं स स्यात् तदग्रहे॥ ॥७१॥ सामान्यं दृष्टमेवासावन्यत्र गमयेद् यदि। सामान्यवर्जितं वस्तुस्वरूपं गमयेत् कथम्॥ ॥७२॥ न स्वरूपत्वसामान्यं केनाप्यङ्गीकृतं क्वचित्। स्वरूपं चेदनुगतं व्यावृत्तं तत्र किं भवेत्॥७३॥ सर्वानुगतधर्माणामन्ते हि स्वत्वमिष्यते। किं व्यावृत्तमिति प्रश्ने स्वरूपमिति केवलम्। स्यादुत्तरं ततोऽन्यच्चेत् तदेव स्वयमेव नः॥७४॥ एवं व्यावृत्तरूपेऽपि यदा शक्तिग्रहो भवेत्। तस्य सामान्यतो ज्ञानं विना स च भवेत् कुतः॥७५॥ अतो विशेषसामान्यरूपं सर्वमपीष्यते। व्यावृत्तं यच्च सामान्यं तदेव स्याद् विशेषतः॥७६॥नचैकधर्मता तेन पदार्थानां परस्परम्। धर्माणां भेददृष्टैव तत्सादृश्यस्य दर्शनात्॥७७॥ अतः सर्वपदार्थाश्च सामान्यात् साक्षिगोचराः। सर्वमित्येव विज्ञानं सर्वेषां कथमन्यथा॥७८॥ किञ्चित्सादृश्यविज्ञानादखिलस्यापि वस्तुनः। शब्दशक्तिग्रहश्च स्यात् तत्तत्सादृश्यमानतः॥७९॥ प्रत्यक्षं मानसं चैव यदाऽतीतार्थगोचरम्। तदा स्मृतिप्रमाणत्वमतीतत्वविशेषितम्॥८०॥ आधिक्यमनुभूताच्च यदातीतत्वमिष्यते। मानता च कथं न स्यात् स्मृतेर्बाधश्च नात्रहि॥८१॥ मानत्वं प्रत्यभिज्ञाया अपि सर्वानुभूतिगम्। अतीतवर्तमानत्वधर्मिणी सा च दृश्यते॥८२॥ न च सा स्मृतिमात्रार्धा तदिदन्त्वग्रहैकतः। अतो न वर्तमानैकनियमः स्याद् ग्रहेऽक्षजे॥ ॥८३॥ नच प्रमाणतोऽन्या स्यात् प्रमितिर्नाम कुत्रचित्। मानाभावाद् गौरवाच्च कल्पनायाः किमेतया॥८४॥ मयैतज्ज्ञातमिति तु साक्षिगं ज्ञानगोचरम्। ज्ञानमेव ततोऽन्या न प्रमितिर्नाम दृश्यते॥८५॥ मानमातृप्रमेयाणां तदुच्छित्तिर्नहि क्वचित्। स्वाप्नानामपि चैतेषां न बाधो दृश्यते क्वचित्॥८६॥ जाग्रत्स्वमात्रमत्रैकमन्यथा दृश्यते स्फुटम्। अतो मिथ्या नच स्वप्नो जाग्रद्वज्जाग्रदेव च॥८७॥ आत्मवत् क्वचिदात्मा च स्यादेव भ्रमगोचरः। एतावता न मिथ्याऽसौ स्वप्ने जागरिते तथा॥८८॥ यद्यात्मन्यन्यथा दृश्यं भ्रान्तमत्रापि तद् भवेत्। अबाधितानुवृत्तेस्तु स्वप्नादेर्भ्रान्तता कुतः॥८९॥ नच काचित् प्रमा विश्वभ्रान्तत्वे सर्वमेव च।

---

१ "प्रतीयते" २ "सर्वे पदार्थाश्च" इति प्र॰ पाठौ।

भाष्यम्

## ॥ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥५॥

बन्धमोक्षप्रदत्वात् स एव स्वप्नतिरस्कर्ता ।

"स्वप्नादिबुद्धिकर्ता च तिरस्कर्ता स एव च । तदिच्छया यतो ह्यस्य बन्धमोक्षौ प्रतिष्ठितौ" इति कौर्मे ॥*॥

॥*॥ इति द्वितीयमधिकरणम् ॥*॥

## ॥ देहयोगाद् वासोऽपि ॥६॥

देहयोगेन वासो जाग्रदपि तत एव ।

स एव जागरिते स्थापयति स स्वप्ने स प्रभुस्तुराषाद् स एको बहुधा भवति" इति कौण्ठरव्यश्रुतेः ॥*॥

॥*॥ इति तृतीयमधिकरणम् ॥*॥

## ॥ तदभावो नाडीषु तच्छ्रुतेरात्मनि ह ॥७॥

जाग्रत्स्वप्नाभावः सुप्तिर्नाडीस्थे परमात्मनि ।

"आसु तदा नाडीषु सृप्तो भवति", "सता सोम्य तदा सम्पन्नो भवति" इति श्रुतेः ॥*॥

॥*॥ इति चतुर्थमधिकरणम् ॥*॥

अनुव्याख्यानम्

अभ्रान्तत्वे प्रमाणं तु कथं तद्भ्रान्तिता[1] भवेत् ॥९०॥ किञ्च भ्रान्तत्ववादी स भ्रान्तत्वं स्वमतस्य च । अङ्गीकरोति नियतं तत्र सम्प्रतिपन्नता । वादिनोस्तेन चाभ्रान्तं विश्वमेव भविष्यति ॥९१॥ भ्रान्तित्वेऽभ्रान्तता[2] चेत् स्यात् कथं नाभ्रान्तिसत्यता । अशेषदोषदुष्टं तन्मतं हेयं बुभूषुभिः ॥९२॥ येन स्वमतहेयत्वं स्वयमङ्गीकृतं सदा । भ्रान्तित्वाद् दुर्घटत्वस्य भूषणत्वाच्च केवलम् ॥९३॥ उन्मत्तोऽपि कथं तस्य मतं स्वीकर्तुमिच्छति । ईशशक्तेरचिन्त्यत्वान्महोन्मत्तैः प्रवर्तितम् ॥९४॥ अतः प्रज्ञाऽत्र मायोक्ता जैव्युपादानमेव सा । निमित्तमैश्वरी मुख्यं[3] निर्मितं त्रातमेव च ॥९५॥ ताभ्यां सह पृथक् चैव मायामात्रमितीर्यते । उभाभ्यां मातमैश्वर्या[4] त्रातं सह पृथक् ततः ॥९६॥ प्रज्ञात्मकं मनो येन मनोरूपाश्च वासनाः । धीर्भीरिति मनस्त्वेवेत्याह च श्रुतिरञ्जसा ॥९७॥ चिदचिन्मिश्रमेवैतन्मनो यावच्च संसृतिः । तेनावस्था इमाः सर्वा जीवः पश्यति सर्वदा ॥९८॥ मनोविकारा विषयाः स्वाप्ना यद् बाह्यवन्न ते । स्थूला भवन्त्यतस्तेषां स्पष्टता न तथा क्वचित् ॥९९॥ क्वचित् स्पष्टा अपि स्युष्टे वासना मानसी च सा ॥*॥ ईशेच्छयाऽन्तर्दधाति व्यज्यते च पुनस्तया ॥१००॥ सृष्टैव वासनाभिश्च

१ "तद्भ्रान्तता" २ "भ्रान्तत्वभ्रान्तता" ३ "मुख्या" इति प्र. पाठाः । ४ प्राचीनकोशेषु "ऐश्वर्यात्त्रातम्" इति पठ्यते । नचात्र ऐश्वर्यात् त्रातमिति पदपाठ इति भ्रमितव्यम् । ऐश्वर्या त्रातमित्येव च्छेदः । संहितायां तु तकारस्य द्वित्वं भवति छन्दस्स्वपि तदिदमावेदितं पुरस्तात् । भगवानाचार्यश्च छान्दसाग्रणीरित्येतादृशः प्रयोगस्तस्य परं शोभते ।

भाष्यम्

॥ अतः प्रबोधोऽस्मात् ॥८॥

यतस्तस्मिन् सुप्तिः ।

"एष एव सुप्तं प्रबोधयत्येतस्माज्जीव उत्तिष्ठत्येष प्रमातैष परमः" इति हि कौण्डिन्यश्रुतिः[1] ॥*॥

॥*॥ इति पञ्चममधिकरणम् ॥*॥

॥ स एव च कर्मानुस्मृतिशब्दविधिभ्यः ॥९॥

नच केषाञ्चित् स्वप्नादिकर्ता नतु सर्वेषामिति ।

"एष ह्येव साधु कर्म कारयति" इति कर्मण्यवधारणात् । "प्रदर्शकस्तु सर्वेषां स्वप्नादेरेक एव तु । परमः पुरुषो विष्णुस्ततोऽन्यो नास्ति कश्चन" इत्यनुसारिस्मृतेश्च । "एष स्वप्नान् दर्शयत्येष[2] प्रबोधयत्यथैष एव परम आनन्दः" इति च श्रुतिः । "आत्मानमेव लोकमुपासीत" इति च विधिः ॥*॥

॥*॥ इति षष्ठमधिकरणम् ॥*॥

॥ मुग्धेऽर्धसम्पत्तिः परिशेषात् ॥१०॥

मोहावस्थायां परमेश्वरेऽर्धप्राप्तिर्जीवस्य ।

"हृदयस्थात् पराज्जीवो दूरस्थो जाग्रदेष्यति । समीपस्थस्तथा स्वप्नं स्वपित्यस्मिन् लयं व्रजन् । यत एवं त्रयोऽवस्था मोहस्तु परिशेषतः । अर्धप्राप्तिरिति ज्ञेयो दुःखमात्रप्रतिस्मृतेः" इति वाराहे ।

सोऽपि तत एवेति सिद्धम् ।

"मूर्च्छा प्रबोधनं चैव यत एव प्रवर्तते । स ईशः परमो ज्ञेयः परमानन्दलक्षणः" इति हि कौर्मे[3] ॥*॥

॥*॥ इति सप्तममधिकरणम् ॥*॥

स्थानापेक्षया परमात्मनोऽपि[4] भेदादनुग्राह्यानुग्राहकभाव इत्यत आह—

॥ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥११॥

स्थानापेक्षयाऽपि परमात्मनो न भिन्नं रूपम् ।

अनुव्याख्यानम्

प्रपञ्चं स्वाप्नमीश्वरः । वासनामात्रतां तस्य नीत्वाऽन्तर्धापयत्यजः ॥१०१॥*॥ सुषुप्तिमोहबोधांश्च[5] स्ववशस्तद्वशं सदा । जीवं नयति देवेशो[6] नान्यः कर्ताऽस्य कश्चन ॥१०२॥*॥ न स्थानभेदतोऽप्यस्य भेदः कश्चित् परेशितुः । सर्वत्राशेषदोषोज्झपूर्णकल्याणचिद्गुणः ॥१०३॥

---

१ "इति कौण्डिन्यश्रुतिः" २ "प्रदर्शयत्येषः" ३ "इति कौर्मे" ४ "परमात्मनो भेदात्" इति प्र. पाठाः।

५ "सुषुप्तिबोधमोहांश्च" इति प्र॰पाठः । यद्यपि सूत्रक्रमेण बोधस्यैव प्राथम्यं युक्तम् । तथाऽपि सुप्तौ नाडीस्थे भगवति प्राप्तिः । मोहेऽर्धप्राप्तिरिति उभयस्यापि जाग्रद्विलक्षणत्वाज्जाग्रत्त्वस्य पाश्चात्यत्वाच्चैवं पाठक्रमः सम्भाव्यते ।

६ "जीवेशः" इति प्र. पाठः ।

भाष्यम्

"सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते" इति हि श्रुतिः। "एकरूपः परो विष्णुः सर्वत्रापि न संशयः। ऐश्वर्याद् रूपमेकं च सूर्यवद् बहुधेयते" इति हि मात्स्ये। "प्रतिदृशमिव नैकधाऽर्कमेकं समधिगतोऽस्मि विधूतभेदमोहः" इति च भागवते ॥*॥

॥ न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥१२॥

कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ। प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्ये न सिद्ध्यतः" इति भेदवचनान्नेति चेत्, न। "एष त आत्माऽन्तर्याम्यमृतः", "अयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम्", "अयं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च तदेतद् ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनम्" इति प्रत्येकमभेदवचनात् ॥*॥

॥ अपि चैवमेके ॥१३॥

एवमभेदेनैव। चशब्दादनन्तरूपत्वं चैके शाखिनः पठन्ति—

"अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः। ओङ्कारो विदितो येन स मुनिर्नेतरो जनः" इति।

अभेदेऽपि भेदव्यपदेशः स्थानभेदादैश्वर्ययोगाच्च युज्यते। ब्रह्मतर्के च—

"बद्धो बन्धादिसाक्षित्वाद् भिन्नो भिन्नेषु संस्थितेः। निर्दोषाद्वयरूपोऽपि कथ्यते परमेश्वरः" इति ॥*॥

॥*॥ इत्यष्टममधिकरणम् ॥*॥

रूपवत्त्वादनित्यत्वमित्यतो वक्ति—

॥ अरूपवदेव हि तत्प्रधानत्वात् ॥१४॥

प्रकृत्यादिप्रवर्तकत्वेन तदुत्तमत्वान्नैव रूपवद् ब्रह्म। हिशब्दात् "अस्थूलमनणु" इत्यादिश्रुतेश्च।

"भौतिकानि हि रूपाणि भूतेभ्योऽसौ परो यतः अरूपवानतः प्रोक्तः क्व तदव्यक्ततः परे" इति च मात्स्ये[4] ॥*॥

अनुव्याख्यानम्

तद्विरुद्धं तु यत् तत्र मानं नैव भवेत् कचित्[5]। महातात्पर्यरोधेन कथं तन्मानमत्र तु ॥१०४॥ दुःखाप्ययसुखावाप्तिहेतुत्वेनैव वेदवाक्। भवेन्मानं तदीशानात् प्रसन्नादेव नान्यथा ॥१०५॥ प्रसन्नता गुणोत्कर्षज्ञानादेव हि केवलम्। निर्दोषतापरिज्ञानादपि नान्येन केनचित् ॥१०६॥ यो मामशेषदोषोज्झं गुणसर्वस्वबृंहितम्। जानात्यस्मै प्रसन्नोऽहं दद्यां मुक्तिं नचान्यथा ॥१०७॥ यो मामशेषाभ्यधिकं विजानाति स एव माम्। विजानात्यखिलांस्तस्य दद्यां कामान् परं

१ "इति श्रुतिः" २ "इति मात्स्ये" इति प्र. पाठौ। ३ "सहस्राणि च बहूनि" इति प्र. पाठः। पद्मनाभतीर्थीयेऽपि "सहस्राणि बहूनि" इति चकारविरहितमेव पठ्यत इति तदपि प्राचीनकोशसंवादी। ४ "इति मात्स्ये" ५ "कचिद् भवेत्" इति प्र.पाठौ।

भाष्यम्

## ॥ प्रकाशवच्चावैयर्थ्यम् ॥१५॥

"यदा पश्यः पश्यते रुग्मवर्णम्", "श्यामाच्छबलं प्रपद्ये", "सुवर्णज्योतीः" इत्यादिश्रुतीनां च न वैयर्थ्यम्।

विलक्षणरूपत्वात्। यथा चक्षुरादिप्रकाशे विद्यमानेऽपि वैलक्षण्यादप्रकाशादिव्यवहारः ॥*॥

## ॥ आह च तन्मात्रम् ॥१६॥

वैलक्षण्यं चोच्यते रूपस्य विज्ञानानन्दमात्रत्वम्—"ऐकात्म्यप्रत्ययसारम्" इति।

"आनन्दमात्रमजरं पुराणमेकं सन्तं बहुधा दृश्यमानम्। तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्" इति च चतुर्वेदशिखायाम् ॥*॥

## ॥ दर्शयति चाथो अपि स्मर्यते ॥१७॥

दर्शयति चाऽनन्दस्य रूपत्वम्—"तद् विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद् विभाति" इति।

"शुद्धस्फटिकसङ्काशं वासुदेवं निरञ्जनम्। चिन्तयीत यतिर्नान्यं ज्ञानरूपादृते हरेः" इति च मात्स्ये ॥*॥

॥*॥ इति नवममधिकरणम् ॥*॥

## ॥ अत एव चोपमा सूर्यकादिवत् ॥१८॥

यस्मादेवं परमेश्वरस्वरूपाणां मिथो न कश्चिद् भेदः, अत एव सादृश्याज्जीवस्यापि तथा स्यादिति

अनुव्याख्यानम्

पदम् ॥१०८॥ यो मामेवमसम्मूढः किं मा निन्दन्ति शत्रवः। इत्यादिवेदस्मृतिगवाक्यैरेवावसीयते ॥१०९॥ लोकतश्च प्रसादेन मुक्तिः स गुणवेदनात्। महातात्पर्यमुख्यस्य विरोधादत एव हि ॥११०॥ दोषित्वनिर्गुणत्वाल्पगुणत्वादि कथञ्चन। नार्थः श्रुतिपुराणादेस्तद्विरुद्धोऽखिलस्य च। अर्थः स्वयं विनिर्णीतो वासुदेवेन सादरम् ॥१११॥ इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ। एतद् बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ॥११२॥ इत्यतोऽखिलसच्छास्त्रविरुद्धत्वेन नानुमा। वर्तते तत्र तेनेशो निर्णीतोऽखिलसद्गुणः ॥११३॥*॥

नच चित्त्वादभिन्नत्वं जीवस्येशवदाप्यते। यत आभासतामेव श्रुतिरस्य वदत्यलम् ॥११४॥ यथैषा पुरुषे च्छाया एतस्मिन्नेतदाततम्। छाया यथा पुंसदृशा पुमधीना च दृश्यते। एवमेवाऽत्मकाः सर्वे ब्रह्माद्याः परमात्मनः ॥११५॥ सत्ताप्रतीतिकार्येषु पुंमधीनो यथेयते।

---

१ "रूक्मवर्णम्" २ "शबलम्" ३ "सुवर्णज्योतिः" इति प्र. पाठाः। ४ प्राचीनपाठे "विद्यमाने" इत्येवापिपदविरहितं पठ्यते। हृषीकेशतीर्थीयं तु गलितम्। ५ "इति चतुर्वेदशिखायाम्" ६ "आनन्दरूपत्वम्" ७ "परमेश्वररूपाणाम्" ८ "किं माम्" ९ "पुंसदृशी" १० "पुमधीनाः" इति प्र.पाठाः।

भाष्यम्

तस्य प्रतिबिम्बत्वमुक्त्वा चशब्देन भेदं दर्शयति ।

"रूपं रूपं प्रतिरूपो बभूव", बहवः सूर्यका यद्वत् सूर्यस्य सदृशा जले । एवमेवाऽऽत्मका लोके परात्मसदृशा मताः" इत्यादि ।

अत एव भिन्नत्वतदधीनत्वसादृश्यै[1]रेव सूर्यकाद्युपमा नोपाध्यधीनत्वादिना ॥*॥

॥*॥ इति दशममधिकरणम् ॥*॥

अनुव्याख्यानम्

आभास ए[2]वं पुरुषा मुक्ताश्च परमात्मनः ॥११६॥ छाया विष्णो रमा तस्याश्छाया धाता विशेषकौ । तस्येन्द्रकामौ च तयोस्तयोरन्येऽखिला अपि॥११७॥हरेर्ब्रह्माऽस्य गीस्तस्या विशेषाविन्द्र एतयोः मारश्चाऽभासकाः सर्वे एतयोस्तदधीनतः ॥११८॥ सर्वेऽल्पशक्तयश्चैव पूर्णशक्तिः परो हरिः । चेतनत्वेऽपि भिन्नास्ते तस्मादेतेन सर्वदा । इत्यादिश्रुतिवाक्येभ्यो ज्ञायते भेद एव हि ॥११९॥ आभासत्वं हि निर्णीतं जीवस्य परमात्मनः । तन्न युक्तं यदाभास उपाध्यायत्त ईर्यते ॥१२०॥ उपाध्यायत्तताभावादाभासत्वविरोधतः । चेतनत्वेन चांशत्वात् समुदायैक्यमापतेत् ॥१२१॥ अतः पृथक्त्वमुदितं समुदायांशयोर्भवेत् । ईशाख्या समुदाये स्यादीशरूपेष्विवोदिता ॥१२२॥ अतो देहाद्युपाधीनामपाये समता भवेत् । ईशरूपैरथाऽभासा मुख्यतः सूर्यकादिवत् ॥१२३॥ यदा तदोपाध्यायत्तरूपाणां नाशिता भवेत् । इत्याशङ्कानिवृत्त्यर्थमाह वेदाधिपः प्रभुः। अत एवोपमेत्येव चान्याभासविशेषिताम्॥१२४॥यदुक्तं तदधीनत्वं सर्वावस्थास्वशेषतः । जीवस्य सदृशत्वं च चित्त्वमात्रं नचापरम् ॥१२५॥ तावन्मात्रेण चाऽभासो रूपमेषां चिदात्मनाम् । नोपाध्यधीनतायैश्च नातिसाम्यं निदर्शने ॥१२६॥ किञ्चित्सुखादिसादृश्यमपीशेनासुरानृते । तत आभासते नित्यं तद्वदाभासतेऽपि च ॥१२७॥ भानमस्तित्वमपिचैवाऽसमन्ताद् यतस्ततः । जीव आभास उद्दिष्टः सदैव परमात्मनः ॥१२८॥ न जलायत्तसूर्यादिप्रतिबिम्बोपमत्वतः । तदधीनत्वमेवेति किञ्चित् सादृश्यमेव चः । सम्प्रकाशयतः सूत्रगतावखिलमानतः ॥१२९॥ जीवेशभेददृष्ट्यैव सुमुदायैकता कुतः । अशेषदोषराहित्यं सर्वशक्तित्वतो हरेः ॥१३०॥ सर्वोपेतेति कथितमत ऐक्यं क्व दोषिणा । अशेषशक्तियुक्तश्चेत् स्वातन्त्र्याद् दोषवान् कथम् ॥१३१॥ अनुसन्धानरहितमैक्यं चेदेकता न तत् । चेतनैक्येऽनुसन्धानं प्रमाणं नैव चापरम् ॥१३२॥ अ[3]नुसन्धानरहितसमुदायैक्यमेव चेत् । चेतनेष्वस्तु तन्नाममात्रमेव यतस्ततः ॥१३३॥ मुक्तौ स्यादनुसन्धानमित्यपि स्यात् सुदुष्करम् । सर्वज्ञ एकतां नानुसन्धत्ते नैव सा यतः ॥१३४॥ पश्चात् स्यादनुसन्धानं चेन्मिथ्याज्ञानिता भवेत् । विद्यमानानुसन्धानं न चेदज्ञत्वमापतेत् ॥१३५॥ असदैक्यं भवेत् पश्चाद् यदि स्यात् सप्तमो रसः । समुदायैक्यमेतस्माद् दूरतोऽपाकृतं सदा ॥ १३६ ॥

---

१ "तत्सादृश्यैरेव" २ "आभासा एव" ३ "अनुसन्धानरहितम्" इति प्र. पाठाः ।

भाष्यम्

नित्यसिद्धत्वात् सादृश्यस्य नित्यानन्दज्ञानादेर्न भक्तिज्ञानादिप्रयोजनमित्यतो ब्रवीति—

॥ अम्बुवदग्रहणात्तु न तथात्वम् ॥१९॥

अम्बुवत् स्नेहेन ग्रहणं ज्ञानं भक्तिं विना न तत्सादृश्यं सम्यगभिव्यज्यते ।

"यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्" इति हि श्रुतिः ।

"महित्वबुद्धिर्भक्तिस्तु स्नेहपूर्वाऽभिधीयते । तयैव व्यज्यते सम्यग् जीवरूपं सुखादिकम्" इति पाद्मे ॥*॥

॥ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥२०॥

तस्य च भक्तिज्ञानादेर्वृद्धिह्रासभाक्त्वं विद्यते । ब्रह्मादीनामुत्तमानां सर्वेषां भक्तत्वेऽन्तर्भावात् । एवं भक्त्यादिविशेषाङ्गीकारादेवेश्वरस्य ब्रह्मादीनन्यान् प्रति च सामञ्जस्यं भवति ।

अनुव्याख्यानम्

अतोऽशेषगुणोन्नद्धं निर्दोषं यावदेव हि । तावदेवेश्वरो नाम तत्र भेदोऽपि न क्वचित् ॥ ॥१३७॥ नेह नानास्ति किमपि हरयोऽयमयं हि सः । इत्यादिश्रुतिमानेन जीवांशाः सर्व एव च ॥१३८॥ नियमेनानुसन्धानवन्तो यद्येकता स्वतः । अंशिनोऽशेषसन्धानमत्यल्पस्यापि विद्यते ॥१३९॥ भुवि जातेन चांशेन सुखदुःखादि तद्गतम् । अनुभूयते विशेषस्तु कश्चिदीशकृतो भवेत् ॥१४०॥ ईशस्याचिन्त्यशक्तित्वान्नाशक्यं क्वापि विद्यते । सेशताऽनुपपन्नैव यदि जीवैकताऽस्य हि। अनीशस्येशतेत्येव विरुद्धं सर्वमानतः॥१४१॥ईशत्वेनैव विज्ञातमनीशत्वेन चेच्छ्रुतिः । अनीशत्वेन विज्ञातमीशत्वेनाथवा दिशेत् ॥१४२॥ उपजीव्यविरोधेन नैव मानत्वमेष्यति । अत एवेशतासिद्धेर्न किञ्चिच्छक्यमस्य च ॥१४३॥ ईशत्वेऽनीशभेदेन श्रुत्या सम्यक् प्रकाशिते । अयुक्तमपि चान्यत्र युक्तं भवति तद्बलात् ॥१४४॥ अतोऽन्यत्रापि यद् दृष्टं तदीशेनैव कल्प्यते । श्रुत्याभासातमपि नहीशत्वपरिपन्थि यत् ॥१४५॥ ईशोऽनीशो जगन्मिथ्या दुःखी मुक्तो भिदा नहि । इति प्रतिज्ञाव्याघातः सर्वदोषाधिकाधिकः ॥१४६॥ इति हि ब्रह्मतर्कोक्तिरतिहेयमतोऽखिलैः । बुभूषुभिर्मतमिदं जीवेशाभेदवादिनः ॥१४७॥ नायुक्तमीशितुः किञ्चिदीशत्वस्याविरोधि यत्। यदीशित्वविरोधि स्यात् तदेवायुक्तमञ्जसा॥ ॥१४८॥ ईशित्वस्याविरोधेन योजयित्वाऽखिलाः प्रमाः । सिद्धेशित्वेन चायुक्तमपि हीशो न योजयेत् ॥१४९॥ मानतः प्राप्तमखिलं नामानं योजयेत् क्वचित् । इति हि ब्रह्मतर्कोक्तिरतो युक्तमिहोदितम् ॥१५०॥*॥ स चाप्राकृतरूपत्वादरूपः स्वगुणात्मकम् । रूपमस्य शिरःपाणिपादाद्यात्मकमिष्यते ॥१५१॥ अतो नानित्यता नैव श्रुतिद्वयविरोधिता । यथा हि तैजसस्यैव प्रकाशस्योज्झितावपि । आत्मैव ज्योतिरित्याह जीवस्येशं श्रुतिस्तथा ॥१५२॥*॥ तद्भक्तितारतम्येन तारतम्यं विमुक्तिगम् । ब्रह्मादीनां च सर्वेषामानन्दादेर्यथाक्रमम् ॥१५३॥*॥

---

१ "भक्तिज्ञानादिना प्रयोजनम्" २ "तनूम्" इति प्र. पाठौ । ३ प्र. पाठेऽत्रैकादशमधिकरणम् । ४ "गुणोन्नद्धनिर्दोषम्" इति प्राचीनपाठे समस्तं पठ्यते । ५ "ईशत्वविरोधि" ६ "ईशत्वस्याविरोधेन" ७ "सिद्धेशत्वेन" इति प्र.पाठाः ।

भाष्यम्

"साधनस्योत्तमत्वेन साध्यं चोत्तममाप्नुयुः । ब्रह्मादयः क्रमेणैव यथाऽऽनन्दः श्रुतौ श्रुतः" इति च ब्राह्मे ॥*॥

कुतः ?—

॥ दर्शनाच्च ॥२१॥

"अथात आनन्दस्य मीमांसा भवति" इत्यारभ्य ब्रह्मपर्यन्तेषु सुखे विशेषदर्शनात् । चशब्दात् स्मृतिः—

"यथा भक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे । तथा मुक्तिविशेषोऽपि ज्ञानिनां लिङ्गभेदने" इति ॥*॥

॥*॥ इत्येकादशमधिकरणम् ॥*॥

सृष्टिसंहारकर्तृत्वमेवास्य न पालकत्वं स्वतः सिद्धेरित्यत आह—

॥ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥२२॥

उक्तं सृष्टिसंहारकर्तृत्वमात्रं प्रतिषिध्य ततोऽधिकं ब्रवीति—

"नैतावदेना परो अन्यदस्त्युक्षा स द्यावापृथिवी बिभर्ति" इति ।

चशब्दात् स्मृतिश्च—

"सृष्टिं च पालनं चैव संहारं नियमं तथा । एक एव करोतीशः सर्वस्य जगतो हरिः" इति ब्रह्माण्डे ॥*॥

॥*॥ इति द्वादशमधिकरणम् ॥*॥

परमात्मापरोक्ष्यं च तत्प्रसादादेव न जीवशक्त्येति वक्तुमुच्यते—

॥ तदव्यक्तमाह हि ॥२३॥

अव्यक्तमेव तद् ब्रह्म स्वतः ।

"अरूपमक्षरं ब्रह्म सदाऽव्यक्तं च निष्कलम् । यज्ज्ञात्वा मुच्यते जन्तुरानन्दश्चाव्ययो भवेत्" इति हि कौण्ठरव्यश्रुतिः ॥*॥

॥ अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥२४॥

आराधनेऽप्यव्यक्तमेव । ज्ञानिप्रत्यक्षेणेतरेषामतिसूक्ष्मत्वलिङ्गादनुमानेन ।

"न तमाराधयित्वाऽपि कश्चिद् व्यक्तीकरिष्यति । नित्याव्यक्तो यतो देवः परमात्मा सनातनः" इति च ब्रह्मवैवर्ते ॥*॥

नित्याव्यक्तेन रूपेण तथैव तिष्ठति; व्यक्तं किञ्चिद् रूपं गृहीत्वा दृश्यते; यथाऽग्न्यादयस्तन्मात्रारूपेणादृश्या अपि स्थूलरूपेण दृश्यन्ते, एवमिति चेत्, न—

॥ प्रकाशवच्चावैशेष्यम् ॥२५॥

---

१ "यथाऽऽनन्दश्श्रुतौ श्रुताः" इति प्र. पाठः । २ प्र. पाठेऽत्र द्वादशमधिकरणम् । ३ प्र. पाठेऽत्र त्रयोदशमधिकरणम् । ४ "निष्कलम्" ५ "इति कौण्ठरव्यश्रुतिः" ६ "ज्ञानिनां प्रत्यक्षेण" ७ "इति ब्रह्मवैवर्ते" ८ "नित्याव्यक्तरूपेण" इति प्र. पाठाः ।

भाष्यम्

अग्न्यादिवत् स्थूलसूक्ष्मत्वविशेषाभावात्।

"नासौ सूक्ष्मो न स्थूलः पर एव सदा भवति[1] तस्मादाहुः परम इति" इति माण्डव्यश्रुतेः। "स्थूलसूक्ष्मविशेषोऽत्र न क्वचित् परमेश्वरे। सर्वत्रैकप्रकारोऽसौ सर्वरूपेष्वजो यतः" इति च गारुडे[2]। "अव्यक्तव्यक्तभावौ च न क्वचित् परमेश्वरे। सर्वत्राव्यक्तरूपोऽयं यत एव जनार्दनः" इति च कौर्मे[3] ॥*॥

तर्हि किं यत्नेनेत्यत आह—

॥ प्रकाशश्च कर्मण्यभ्यासात् ॥२६॥

विषयभूते तस्मिन्नेव श्रवणाद्यभ्यासात् प्रकाशश्च भवति।

"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति श्रुतेः ॥*॥

नित्याव्यक्तस्य कथं प्रकाश इत्यत उच्यते—

॥ अतोऽनन्तेन तथा हि लिङ्गम् ॥२७॥

उभयत्र प्रमाणाभावात् तत्प्रसादादेव प्रकाशो भवति।

"तस्याभिध्यानाद् योजनात् तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्तिः" इति लिङ्गात्।

युज्यते तस्यानन्तशक्तित्वात्।

"नित्याव्यक्तोऽपि भगवानीक्ष्यते निजशक्तितः। तमृते परमात्मानं कः पश्येतामितं प्रभुम्" इति च नारायणाध्यात्मे[4] ॥*॥

॥*॥ इति त्रयोदशमधिकरणम्[5] ॥*॥

स्वरूपेणाऽनन्दादिना कथमानन्दित्वादिरित्यत्रोच्यते[6]—

॥ उभयव्यपदेशात्त्वहिकुण्डलवत् ॥२८॥

"आनन्दं ब्रह्मणो विद्वान्", "अथैष एव परम आनन्दः" इत्युभयव्यपदेशादहिकुण्डलवदेव युज्यते। यथाऽहिः कुण्डली कुण्डलं च। तुशब्दात् केवलश्रुतिगम्यत्वं दर्शयति ॥*॥

॥ प्रकाशाश्रयवद् वा तेजस्त्वात् ॥२९॥

यथाऽऽदित्यस्य प्रकाशत्वं प्रकाशित्वं च, एवं वा दृष्टान्तः। तेजोरूपत्वाद् ब्रह्मणः।

॥ पूर्ववद् वा ॥३०॥

यथैक एव कालः पूर्व इत्यवच्छेदकोऽवच्छेद्यश्च भवति। अतिसूक्ष्मत्वापेक्षयैष दृष्टान्तः। स्थूलमतीनां च प्रदर्शनार्थमहिकुण्डलदृष्टान्तः।

"प्रकाशवत् कालवद् वा यथाऽङ्गे शयनादिकम्। ब्रह्मणश्चैव मुक्तानामानन्दोऽभिन्न एव तु" इति नारायणाध्यात्मे। "आनन्देन त्वभिन्नेन व्यवहारः प्रकाशवत्। कालवद् वा यथा कालः स्वावच्छेदकतां व्रजेत्" इति ब्राह्मे[7] ॥*॥

---

१ "पर एव स भवति" २ "इति गारुडे" ३ "इति कौर्मे" ४ "इति नारायणाध्यात्मे" इति प्र.पाठाः।

५ प्र. पाठेऽत्र चतुर्दशमधिकरणम्। ६ "इत्यत उच्यते" ७ "इति पाद्मे" इति प्र. पाठौ।

भाष्यम्

॥ प्रतिषेधाच्च ॥३१॥

"एकमेवाद्वितीयम्", "नेह नानाऽस्ति किञ्चन" इति भेदस्य[1] ॥*॥

॥ परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥३२॥

नचाऽनन्दादित्वाल्लोकानन्दादिवत् ।

"एष सेतुर्विधृतिर्य एष आनन्दः परस्यैष नित्यो महिमा ब्राह्मणस्य" इति सेतुत्वं ह्युच्यते । "यतो वाचो निवर्तन्ते" इत्युन्मानत्वम् । "एतस्यैवाऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति सम्बन्धः । "अन्यज्ज्ञानं तु जीवानामन्यज्ज्ञानं परस्य च । नित्यानन्दाव्ययं पूर्णं परज्ञानं विधीयते" इति भेदः ।

अतोऽलौकिकत्वात् परमेव ब्रह्मानन्दादिकम् ॥*॥

॥ दर्शनात्तु[2] ॥३३॥

दर्शनादेव चान्यानन्दादीनाम् ।

"अदृष्टमव्यवहार्यमव्यपदेश्यं सुखं ज्ञानमोजो बलमिति ब्रह्मणस्तस्माद् ब्रह्मेत्याचक्षते तस्माद् ब्रह्मेत्याचक्षते" इति हि कौण्डिन्यश्रुतिः[3] ॥*॥

अप्रसिद्धस्य कथमानन्द इत्यादिव्यपदेश इत्यतो वक्ति—

॥ बुद्ध्यर्थः पादवत् ॥३४॥

जीवेश्वरसम्बन्धज्ञापनार्थमप्रसिद्धोऽपि पादो यथा पादशब्देन व्यपदिश्यते "पादोऽस्य विश्वा भूतानि" इति, तथा ।

"अलौकिकोऽपि ज्ञानादिस्तच्छब्दैरेव भण्यते । ज्ञापनार्थाय लोकस्य यथा राजेव देवराट्" इति च पाद्मे[4] ॥*॥

॥*॥ इति चतुर्दशमधिकरणम्[5] ॥*॥

परानन्दमात्रत्वे कथं ब्रह्माद्यानन्दानां[6] विशेष इत्यत्रोच्यते[7]—

॥ स्थानविशेषात् प्रकाशादिवत् ॥३५॥

यथाऽऽदित्यस्य दर्पणादिस्थानविशेषात् प्रतिबिम्बविशेषः[8], एवमानन्दादेरपि ।

अनुव्याख्यानम्

"प्रतिबिम्बवदप्येषामानन्दोऽन्यगुणा यथा । नारायणगुणाधीनश्चात्यल्पस्तदपेक्षया ॥१५४॥
तस्माद् भिन्नश्च सततमन्यज्ज्ञानं परस्य च । अन्यज्ज्ञानं तु जीवानामन्य आनन्द ईशता ॥१५५॥
मुख्येशता परेशस्य गौणी जीवस्य सा यतः । इति श्रुतेः सृष्टिनाशौ तदधीनावितीरिते ।
स्वभावत्वात् स्थितेर्नैतदपेक्षेति न युज्यते ॥१५६॥ यतः स्वभावोऽखिल ईशायत्तोऽखिलस्य
च ॥*॥ अव्यक्तोऽपि स्वशक्त्यैव भक्तानां दृश्यते हरिः ॥१५७॥*॥ तदभिन्ना गुणा नित्यमपि

---

१ प्र. पाठेऽत्र पञ्चदशमधिकरणम् । २ "दर्शनात्" इति प्र. सूत्रपाठः । अत्र "सामान्यात्तु" इति सूत्रं परे पठन्ति । ३ "इति कौण्डिन्यश्रुतिः" ४ "इति पाद्मे" इति प्र. पाठौ । ५ प्र. पाठेऽत्र षोडशमधिकरणम् । ६ "ब्रह्माद्यानन्दादीनाम्" ७ "इत्यत उच्यते" ८ "प्रतिबिम्बे विशेषः" इति प्र.पाठाः ।

अनुव्याख्यानम्

सर्वे विशेषतः। गुणत्वेन गुणित्वेन भोक्तृभोग्यतया स्थिता[1]ः॥१५८॥ विशेषात्मतया तेषां नित्यशक्त्यात्मना तथा। नित्यस्थितेर्न[2] धर्माणां क्रियादीनामनित्यता ॥१५९॥ न विशेषात्मना चेयमनित्या शक्तिरूपता। सैव यत् सविशेषा स्याद् विशेषोऽन्यो नचाप्ययम् ॥१६०॥ स्वनिर्वाहकताहेतोस्तथाऽपि स्याद् विशेष[3]तः। विशेषत्वेन विज्ञातेः प्रमाणैरखिलैरपि ॥१६१॥ ससर्ज सञ्जहारेति विशेषो ह्यवगम्यते। श्रुत्यैव स स एवेति तद्भेदश्च गम्यते ॥१६२॥ भेदो यदि विशेषस्य स भेदो भेदिना कथम्। भिन्नश्चेदनवस्था स्यादभिन्नश्चेत् पुरा न किम् ॥१६३॥ विशेषोऽभिन्न एवेति तेन नाभ्युपगम्यते। अभिन्नो निर्विशेषश्चेद् भेदस्तद्भेदता कुतः ॥१६४॥ अनेनानेन भिन्नोऽयमिति यत् स विशेषतः। भेद एवैष बहुधा दृश्यते तत् किमुत्तरम् ॥१६५॥ अभेदभेदयोश्चैव स्वरूपत्वं हि भेदिनो[4]। तयोरप्यविशेषत्वे पर्यायत्वं हि शब्दयोः॥१६६॥ अभेदभेदशब्दौ च पर्यायाविति को वदेत्। भेदोऽन्योन्यमभेदश्च भेदिना चेद् विशेषिता ॥१६७॥ अविशेषे कथं भेदो भेदिनैकस्तथाऽभिदा। पुनस्तयोर्विभेदश्च भेदिमात्रत्वतो भवेत् ॥१६८॥ भेदिनश्चैव भेदस्य विशेषो यदि गम्यते। अभेदाभेदिनोश्चैव किं भेदोऽभेदभेदयोः॥१६९॥ विशेषेणैव सर्वत्र यदि व्यवहृतिर्भवेत्। कल्पनागौरवायैव किं भेदः कल्प्यते तदा ॥१७०॥ ऐक्यप्रतीत्यभावेन भेद एव गव[5]श्वयोः। स एवेति प्रतीतौ हि विशेषो

---

१ "स्थितः" २ "नित्यं स्थितेः" ३ "विशेषता" ४ "भेदिनः" इति प्र. पाठाः।

५ "गवाश्वयोः" इति प्र· पाठः। यद्यपि सुधायाम्—"गवश्वयोरिति प्रमादपाठः। मूलकोशेष्वदर्शनात्" इति पठ्यते। तदनुसारेण च "गवाश्वयोः" इत्येव मूलपाठ इति प्रतीयते। किन्तु श्रीहृषीकेशतीर्थीये मूलकोशे अधोक्षजतीर्थीयसम्प्रदायानुसारिणि पेजावरमठीये प्रतनतरे च मूलकोशे, तदन्येषु च सर्वेषु कोशेषु "गवश्वयोः" इत्येव पठ्यते। न क्वापि "गवाश्वयोः" इति। तेन चायमेव मूलपाठ इति निश्चीयते। तदनुसारेण च "गवाश्वयोरिति प्रमादपाठः। मूलकोशेष्वदर्शनात्" इत्येव सुधापाठः सम्भाव्यते। क्वचिच्च मुद्रिते पुस्तके तथैव च पाठो दृश्यते। ननु तर्हि कथं गवश्वयोरिति ? "गवाश्वप्रभृतीनि च" इति किल पाणिनिरभाणीत्। मैवम्। नायं गवाश्वप्रभृतीनीति सूत्रस्य विषयः यद् गवश्वयोरिति। यतस्तत्रैकवद्भावोऽभिमतः। तथाहि पतञ्जलिः— "गवाश्वप्रभृतिषु यथोच्चारितं द्वन्द्ववृत्तं द्रष्टव्यम्। गवाश्वम्। गवाविकम्। गवैडकम्" इति। कैयटोऽप्याह—"गणे यादृशाः पठितास्तादृशानामेवेदं कार्यमेकवद्भावलक्षणं भवति" इति, "एतेन गणपाठरूपं विवक्षितमित्युक्तं भवति" इति च। यदि चात्र विभाषा स्यात् तदा "अवङ् स्फोटायनस्य" इत्यनेनैव रूपसिद्धौ गवाश्वप्रभृतीनीति पुनर्योगकरणमेव व्यर्थं स्यात्। तेन पाणिनिमतानुसरणे गवाश्वयोरिति द्विवचनं दुरुपपादमेव। नन्वस्तु। तावता गवश्वयोरिति तु कथम्? गवय इति यथा तथा तद्वत् सेत्स्यति। गां सादृश्येनायत इति हि नैरुक्ता निर्वदन्ति। गामञ्चतीति गवचीत्यपि। "एङः पदान्तादति" इति पूर्वरूपमपोह्य यथा तत्राव् भवति तद्वदत्रापि। ननु का गमनिका ? व्याकरणान्तरमिति ब्रूमः। तथाहि सारस्वतं व्याकरणम्—"गवादेरवर्णागमोऽक्षादौ वक्तव्यः। गवाक्षश्च गवेन्द्रश्च गवाग्रं च गवाजिनम्। स्वैरमक्षौहिणी प्रौढ एते प्रोक्ता गवादयः।" इति। एतेन ज्ञायतेऽक्षेन्द्राग्राजिनेष्वेवावर्णागमो भवति नाश्वादाविति। तेनैतद्रीत्या "गवश्वयोः" इत्येव भवति। न "गवाश्वयोः" इति। अक्षौहिणीत्यत्राप्यवर्णागममनभ्यनुजानता भगवताऽऽचार्येण तात्पर्यनिर्णयादौ सर्वत्र "अक्षोहिणी" इत्येवासकृत् प्रायुज्यतेत्यप्यत्र स्मर्तव्यम्।

भाष्यम्

"ब्रह्मादिगुणवैशेष्यादानन्दः परमस्य च[1]। प्रतिबिम्बत्वमायाति मध्योच्चादिविभेदतः" इति च वाराहे[2] ॥*॥

## ॥ उपपत्तेश्च ॥३६॥

"ऐश्वर्यात् परमाद् विष्णोर्भक्त्यादीनामनादितः। ब्रह्मादीनां सूपपन्ना ह्यानन्दादेर्विचित्रता" इति हि पाद्मे[3] ॥*॥

॥*॥ इति पञ्चदशमधिकरणम्[4] ॥*॥

अनुव्याख्यानम्

नाम भण्यते ॥१७१॥ सच्चिदादेरपर्यायसिद्ध्यर्थं मायिनाऽपि हि। अङ्गीकार्यो विशेषोऽयं यद्यसत्यविशेषणम्। पृथक् पृथग् वारयितुं शब्दान्तरमितीष्यते ॥१७२॥ मायाविशेषराहित्यविशेषेण विशेषिता[5]। सत्यस्यापि भवेत् सा च तथा चेदनवस्थितिः ॥१७३॥ यदि सत्ये विशेषो न न तदुक्तिर्भवेत् तदा। लक्ष्यते चेत् तेन लक्ष्यमित्यपि स्याद् विशेषिता ॥१७४॥ पुनःपुनर्लक्षणायामपि स्यादनवस्थितिः। यद्यभावविशेषित्वं स्यादङ्गीकृतमेव ते ॥१७५॥ असार्वज्ञ्यादिराहित्यमप्येवं ते भविष्यति। तदा सार्वज्ञ्यमेव स्याद् भावार्थत्वान्नञोर्द्वयोः ॥ ॥१७६॥ यदि नैतादृशं ग्राह्यमसुखत्वानिवर्तनात्। असत्त्वाज्ञानतादेश्च स्यादसत्त्वादिकं तदा॥ ॥१७७॥ अनृतादिविरोधित्वं यद्यस्याभ्युपगम्यते। अनैश्वर्यविरोधित्वमप्येवं किं निवार्यते ॥ ॥१७८॥ अखण्डखण्डनादेवं विशेषोऽखण्डवादिना। खण्डितेनापि मनसा स्वीकार्योऽनन्यथागतेः ॥१७९॥ अखण्डखण्डवादिभ्यां खण्डाखण्डेन चैव तत्। महादरेण शिरसि विशेषो धार्य एव हि ॥१८०॥ निदर्शनत्रयेणातो भगवानत्यभिन्नताम्। गुणानामादरेणाऽह तच्च नाभिहितान्वयः ॥१८१॥ यदाऽशेषविशेषाणामुक्तिः सामान्यतो भवेत्। पदैकेनाप्युत्तरेण विशेषावगतिर्भवेत् ॥१८२॥ यतोऽशेषविशेषाणां वस्तुनाऽस्त्येव चैकता। अतः सामान्यतो ज्ञातः पदान्तरबलात् पुनः। भवेद् विशेषतो ज्ञातस्तेन स्यादन्वितोक्तिता ॥१८३॥ स्वार्थ एवान्वितो यस्मात् केनचित् तद्विशेषतः। अनेनेति तदुक्त्यैव ज्ञायतेऽनुभवेन हि ॥१८४॥ यद्यनन्वितमेवैतत् पदं स्वार्थं वदेदिह। तथाऽन्यान्यपि सर्वाणि कः कुर्यादन्वयं पुनः॥१८५॥ व्यापारो नहि शब्दस्य परः स्वार्थप्रकाशनात्। पुमानप्येकवारोक्त्या कृतकृत्यो यदा भवेत् ॥ ॥१८६॥ अन्वयस्य कथं ज्ञानं शब्दार्थत्वं यदाऽस्य न। यदैवानन्वितार्थस्य वचनं तैः पदैर्भवेत्॥ ॥१८७॥ अनन्वितः स्याच्छब्दार्थो न तदर्थो हि सोऽन्वयः। निराकाङ्क्षपदान्येव वाक्यमित्युच्यते बुधैः ॥१८८॥ तत्तदर्थाभिधानेन स्यान्निराकाङ्क्षता च सा ॥१८९॥ अपूर्तेस्तावदर्थानामाकाङ्क्षा पूर्वमिष्यते। कर्मकर्तृक्रियाणां तु पूर्तौ कोऽन्योऽन्वयो भवेत् ॥१९०॥ अपूर्तिश्चेत् पदैरुक्तैः किं नृशृङ्गेण पूर्यते। व्यापारश्चेत् पुनस्तेषामनुक्तावपि किं न सः ॥१९१॥ उक्ते बुद्धिस्थताहेतोर्यदि व्यापार इष्यते। बुद्धिस्थत्वाय यत्नं न कथं कुर्युः पुरैव च। पुरुषाधीनता

---

१ "आनन्दादिः परस्य च" २ "विशेषत इति वाराहे" ३ "इति पाद्मे" इति प्र. पाठः। ४ प्र.पाठेऽत्र सप्तदशमधिकरणम्। ५ "विशेषणविशेषिता" इति प्र.पाठः।

भाष्यम्

ध्यानकाले यच्चित्ते प्रदृश्यते तदेव हि ब्रह्मरूपम्[1]। अतः कथमन्यक्ततेत्यत आह—

॥ तथाऽन्यत् प्रतिषेधात् ॥३७॥

यथा जीवानन्दादेरन्यद् ब्रह्म तथोपासाकृतादपि।

"यन्मनसा न मनुते येनाऽहुर्मनो मतम्। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" इति प्रतिषेधात्। "पश्यन्ति परमं ब्रह्म चित्ते यत् प्रतिबिम्बितम्। ब्रह्मैव प्रतिबिम्बे यदतस्तेषां फलप्रदम्। तदुपासनं च भवति प्रतिमोपासनं यथा। दृश्यते त्वपरोक्षेण[2] ज्ञानेनैव परं पदम्। उपासना त्वापरोक्ष्यं गमयेत् तत्प्रसादतः" इति च ब्रह्मतर्के[3] ॥*॥

॥*॥ इति षोडशमधिकरणम्[4] ॥*॥

देशकालान्तरेऽन्यतोऽपि सृष्ट्यादिर्युक्तेत्यतो ब्रूते—

॥ अनेन सर्वगतत्वमायामयशब्दादिभ्यः ॥३८॥

सर्वदेशकालवस्तुष्वनेनैव सृष्ट्यादिकं प्रवर्तते।

"एष सर्व एष सर्वगत एष ईश्वर[5] एषोऽचिन्त्य एष परमः" इति हि भाल्लवेयश्रुतिः[6]। "सर्वत्र सर्वमेतस्मात् सर्वदा सर्ववस्तुषु। स्वरूपभूतया नित्यशक्त्या मायाख्यया यतः। अतो मायामयं विष्णुं प्रवदन्ति सनातनम्" इति हि चतुर्वेदशिखायाम्[7]।

आदिशब्दादन्यत्र प्रमाणाभावाच्च ॥*॥

॥*॥ इति सप्तदशमधिकरणम्[8] ॥*॥

कर्मापेक्षत्वात् फलदानस्य तदेव ददातीति न वाच्यम्। कुतः?—

॥ फलमत उपपत्तेः ॥३९॥

अनुव्याख्यानम्

तेषां यदि पश्चाच्च सा समा ॥१९२॥ पुमानेवान्वयायैषां पश्चाद् यदि विचेष्टते[9]। अनन्विताभिधानानां स एवार्थान्तरोक्तिषु। यततां शब्दशक्तिश्चेत् तत्र नैवान्वये कथम् ॥१९३॥ तत्कल्पनागुरुत्वादिदोषेतोऽभिहितान्वयः। अनुभूतिविरुद्धश्च त्याज्य एव मनीषिभिः ॥१९४॥ कर्तृशब्दे ह्यभिहिते धर्मसामान्यवेदनात्। विशेषधर्ममन्विच्छन् किमित्येव हि पृच्छति ॥ ॥१९५॥ गुणक्रियादिधर्माणां विशेषे कथिते पुनः। निराकाङ्क्षो भवेद् यस्माच्छब्दा अन्वितवाचकाः॥१९६॥ अतोऽनन्तगुणात्मैको भगवानेक एव तु। उच्यते सर्ववेदैश्च ते चाखिलविलक्षणाः ॥१९७॥ सर्वे सर्वगुणात्मानः सर्वकर्तार एव च[10]। तथाऽपि सविशेषाश्च विद्वद्व्युत्पत्तितोऽपिच ॥१९८॥ तैस्तैः शब्दैश्च भण्यन्ते युज्यते चोपदेशतः। अन्यानन्दादिसादृश्यमानुकूल्यादिना परम् ॥१९९॥ पूर्णत्वादि महत् तेषां वैलक्षण्यं श्रुतौ श्रुतम्। पूर्णोऽशेषनियन्ता च

१ "तदेव ब्रह्मरूपम्" २ "त्वापरोक्ष्येण" ३ "इति ब्रह्मतर्के" इति प्र. पाठाः। ४ प्र. पाठेऽत्राष्टादशमधिकरणम्। ५ "सर्वेश्वरः" ६ "इति भाल्लवेयश्रुतिः" ७ "इति चतुर्वेदशिखायाम्" इति प्र. पाठाः। ८ प्र. पाठेऽत्रैकोनविंशमधिकरणम्। ९ "यदि पश्चाद् विचेष्टते" १० "एवतु" इति प्र. पाठौ।

भाष्यम्

**अत एवेश्वरात् फलं भवति। नह्यचेतनस्य स्वतः प्रवृत्तिर्युज्यते ॥*॥**

**॥ श्रुतत्वाच्च ॥४०॥**

**" विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणम् " इति ॥*॥**

**॥ धर्मं जैमिनिरत एव ॥४१॥**

**यतः फलं तदेव कर्मेश्वराद् भवति। "एष ह्येव साधु कर्म कारयति" इति श्रुतेरिति जैमिनिः॥*॥**

**॥ पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥४२॥**

**परस्य कर्मणश्चोभयोः फलकारणत्वेऽपि न कर्म परप्रवर्तकम्[1]। पर एव कर्मप्रवर्तकः। "पुण्येन पुण्यं लोकं नयति पापेन पापम्" इति हेतुव्यपदेशात्। " द्रव्यं कर्म च कालश्च " इति च ॥*॥**

**॥*॥ इत्यष्टादशमधिकरणम्[2] ॥*॥**

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते

श्रीमद्ब्रह्मसूत्रभाष्ये

— तृतीयाध्यायस्य द्वितीयः पादः —

अनुव्याख्यानम्

**सुखादुतमः[3] एकलः ॥२००॥ गुणोरुसमुदायोऽयं[4] वासुदेवः स निष्कलः[5]। वासुदेवश्रुतिः[6] सैषा गुणान् वक्ति हरेः परान् ॥२०१॥*॥ स एवाशेषजीवस्थनिस्सङ्ख्यानादिकालिकान्। धर्माधर्मान् सदा पश्यन् स्वेच्छया बोधयत्यजः ॥२०२॥ कांश्चित् तेषां फलं चैव ददाति स्वयमच्युतः। न ते विशेषं कमपि प्रेरणादिकमुच्यते। कुर्युः कदाऽपि तेनायं स्वतन्त्रोऽनुपचारतः ॥२०३॥ कर्माणि तानि च पृथक् चेतनान्येव सर्वशः[7]। अचेतनशरीराणि स्वकर्मफलभाञ्जि च ॥२०४॥ प्रत्येकं तेषु चानन्तकर्माण्येवंविधानि च। तानि चैवमितीशस्य निस्सीमा शक्तिरुत्तमा॥२०५॥ एकैव ब्रह्महत्या हि वराहहरिणोदिता। ब्रह्मपारस्तवेनैव निष्क्रान्ता राजदेहतः॥ ॥२०६॥ स्तोत्रस्य तस्य माहात्म्याद् व्याधत्वं गमिता पुनः। प्राप्य ज्ञानं परं चाऽप तथाऽन्यान्यपि सर्वदा ॥२०७॥ अनन्तान्युदितान्येवं प्रभुणा कपिलेन हि। संसारे पच्यमानानि कर्माण्यपि पृथक् पृथक् ॥२०८॥ तस्मादनन्तमाहात्म्यगुणपूर्णो[8] जनार्दनः। भक्त्या परमयाऽऽराध्य इति पादार्थ ईयते ॥२०९॥*॥**

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते

श्रीमद्ब्रह्मसूत्रानुव्याख्याने

— तृतीयाध्यायस्य द्वितीयः पादः—

---

१"कर्मणः प्रवर्तकः"प्र.पा.२प्र.पाठेऽत्र विंशमधिकरणम्। ३ "सुखादुत्तमः" (?) इति प्र. पाठः। सुधाकृतामपि सुखादुतम इत्येव सम्मतः पाठः। नतु सुखादुत्तम इति। शोभनानन्दतम इति व्याख्यानस्वारस्यात्। तेन सुखादुत्तम इति सुधायां मुद्रितः पाठः प्रमाद एव। ४"गुणादिसमुदायोऽयम्" ५"सुनिष्कलः" ६"श्रुतिश्चैषा" ७"सर्वशः" ८ "गुणपूर्णः" इति प्र. पाठाः।

भाष्यम्

ॐ॥ उपासनाऽस्मिन् पाद उच्यते ।

अनुव्याख्यानम्

ॐ ॥ वैराग्यतो भक्तिदार्ढ्यं तेनोपासा यदा भवेत् । आपरोक्ष्यं भवेद् विष्णोरिति पादक्रमो भवेत् ॥१॥ युक्तितो ज्ञातवेदार्थो निरस्य समयान् परान् । परस्परविरोधं च प्रणुद्याशेषवाक्यगम् ॥२॥ अध्यात्मप्रवणो भूत्वा तस्य सन्निहितत्वतः । बहुयुक्तिविरोधानां भानात् तत्सहितश्रुतेः ॥३॥ विरोधं च निराकृत्य श्रुतीनां प्राणतत्त्वगान् । परिहृत्य विरोधांश्च तत्प्रसादानुरञ्जितः ॥४॥ देहकर्तृत्वमीशस्य ज्ञात्वा तत्पितृतास्मृतेः । विशेषस्नेहमापाद्य सर्वकर्तृत्वतोऽधिकम् ॥५॥ निष्पाद्य बहुमानं च तदन्यत्रातिदुःखतः । उत्पाद्याधिकवैराग्यं तद्गुणाधिक्यवेदनात् ॥६॥ सर्वस्य तद्वशत्वाच्च दार्ढ्यं भक्तेरवाप्य च । यतेतोपासनायैव विशिष्टाचार्यसम्पदा ॥७॥ कर्तव्या ब्रह्मजिज्ञासेत्युक्ते किमिति संशये । अत इत्युदितेऽन्यस्य विशेषानुक्तितः पुनः ॥८॥ सृष्टिबन्धनमोक्षादिकर्तृत्वस्य श्रुतत्वतः । यतो मोक्षादिदाताऽसावतो जिज्ञास्य एव वः । इत्याह तत् परं ब्रह्म व्याताख्यं ज्ञानरश्मिमत् ॥९॥ येनैव बन्धमोक्षः स्यात् स च जिज्ञासया गतः । सुप्रसन्नो भवेदीशो जिज्ञासाऽतोऽस्य मुक्तिदा ॥१०॥ मोक्षादिदत्वमीशस्य कथमेवावगम्यते । इति चेच्छास्त्रयोनित्वाच्छास्त्रगम्यो हि मोक्षदः ॥११॥ प्रत्यक्षावसितेभ्यः स्याद् यदि मोक्षः कथञ्चन । किमित्यनादिसंसारमग्नाः सर्वा इमाः प्रजाः ॥१२॥ यस्मान्नियमतो दुःखहानिः प्रत्यक्षतो भवेत् । धावन्त्येव तमुद्दिश्य राजाद्यमखिलाः प्रजाः ॥१३॥ अनुमानगम्य[२]तो मोक्षो यदि [३]तस्यानुमैव हि । दृष्टपूरुषवन्मोक्षदातृतां विनिवारयेत् ॥१४॥ तच्छास्त्रगम्य एवैको मोक्षदो भवति ध्रुवम् । शास्त्रगम्यश्च नान्योऽस्ति मोक्षदत्वेन केशवात् ॥१५॥ मोक्षदो हि स्वतन्त्रः स्यात् परतन्त्रः स्वयं सृतौ । वर्तमानः कथं शक्तः परमोक्षाय केवलम् ॥१६॥ अन्याश्रयेण यद्येष दद्यान्मोक्षं स एव हि । तेनाननुसृ[४]तो मोक्षं न दद्यादन्यवाक्यतः । अतस्तदर्थमपि स ज्ञेयो विष्णुर्मुमुक्षुभिः ॥१७॥ यमेवैष इति श्रुत्या तमेवेति च सादरम् । शास्त्रयोनित्वमस्यैव ज्ञायते वेदवादिभिः ॥१८॥ य एनं विदुरमृता इत्युक्तस्तु समुद्रगः । तदेव ब्रह्म परममिति श्रुत्याऽवधारितः ॥१९॥ यतः प्रसूतेति ततः सृष्टिमाह ततो हरिः । शास्त्रयोनिर्न चान्योऽस्ति मुख्यतस्त्विति गम्यते ॥२०॥ शास्त्रयोनित्वमेतस्य ज्ञायते हि समन्वयात् । समिति ह्युपसर्गेण परमुख्यार्थतोच्यते ॥२१॥ एवं परममुख्यार्थो नारायण इति श्रुतेः । निर्धारणाय नाशब्दमिति वेदपतिर्जगौ ॥२२॥ कथं समन्वयो ज्ञेयः स्वल्पशाखाविदां नृणाम् । वेदा ह्यनन्ता इति हि श्रुतिराहाप्यनन्तताम् ॥२३॥ अनन्तवेदनिर्णीतिर्महाप्रळय[५]वारिधेः । उत्तारणोपमेत्यस्मान्न ज्ञेयोऽत्र समन्वयः ॥२४॥ इति शङ्कापनो[६]दार्थं स आह करुणाकरः । अशक्योत्त[७]रणत्वेऽपि ह्यागमापारवारिधेः । निर्णीयते मयैवायं रोमकूपलयोदिना ॥२५॥ यद्यप्यशेषवेदार्थो दुर्गमोऽखिलमानवैः । मज्ज्ञानाव्याकृताकाशे

---

१ "तया" २ "अनुमागम्यतः" ३ "स्यादनुमैव" ४ "तेन नानुसृतः" ५ "प्रलयवारिधेः" ६ "इत्याशङ्कापनोदार्थम्" ७ "अशक्योत्तारणत्वेऽपि" इति प्र. पाठाः।

अनुव्याख्यानम्

प्राप्नोति परमाणुताम् ॥२६॥ इति प्रकाशयन् विश्वपतिराह प्रमेयताम् । निखिलस्यापि वेदस्य गतिसामान्यमञ्जसा ॥२७॥ को नाम गतिसामान्यमनन्तागमसम्पदः । ज्ञानसूर्यमृते ब्रूयात् तमेकं बादरायणम् ॥२८॥ अन्योऽप्यल्पमतिः शाखाचतुष्पञ्चगतं वसु । जानन्ननुमितत्वेन ब्रूयात् तस्य प्रसादतः ॥२९॥ इति मुख्यतयाऽशेषगतिसामान्यवित् प्रभुः । प्रतिजज्ञे दृढं यस्माद् देवानामपि पूर्यते ॥३०॥ अतो निखिलवेदानां सिद्ध एवं समन्वयः । इति सुज्ञापितार्थोऽपि पृथक् चाऽह समन्वयम् ॥३१॥ तत्र प्रथमतोऽन्यत्र प्रसिद्धानां समन्वयः । शब्दानां वाच्य एवात्र महामल्लेशभङ्ग[1]वत् ॥३२॥ इतोऽत्यभ्यधि[2]कत्वेऽपि तुर्यपादोदितस्य तु । महासमन्वये तस्मिन् नाधिकारोऽखिलस्य हि ॥३३॥ ब्रह्मैवाधिकृतस्तत्र मुख्यतोऽन्ये यथाक्रमम् । दुर्गमत्वाच्च नैवात्र प्राथम्येनोदितोऽञ्जसा ॥३४॥ अतोऽन्यत्र प्रसिद्धानां शब्दानां निर्णयाय तु । प्रवृत्तः प्रथमं देवस्तत्राऽनन्दादयो गुणाः । ईशस्यैवेति निर्णीताः श्रुतियुक्तिसमाश्रयात् । ॥३५॥ देवतान्तरगाः सर्वे शब्दवृत्तिनिमित्ततः । विष्णुमेव वदन्त्यद्धा तत्सङ्गादुपचारतः ॥ ॥३६॥ अन्यदेवान् वदन्तीह विशेष[3]गुणवत्कृतः । विष्णुमेव परं ब्रूयुरेवमन्येऽप्यशेषतः ॥३७॥ इत्यन्यत्रप्रसिद्धोरुशब्दराशेरशेषतः । ज्ञाते समन्वये विष्णौ लिङ्गैर्ह्येष समन्वयः ॥३८॥ तेषामन्यगतत्वे तु न स्यात् सम्यक् समन्वयः । इत्येवाशेषलिङ्गानां ब्रह्मण्येव समन्वयम् ॥३९॥ आहोभयगतत्वं च स्यादतो लिङ्गशब्दयोः । इति संशयनुत्त्यर्थमुभयत्र प्रतीतितः ॥४०॥ शब्दानां वर्तमानानां सलिङ्गानां विशे[4]षतः । समन्वयो हरावेव यन्नैवान्यत्र मुख्यतः ॥४१॥ शब्दा लिङ्गानि च यतो नैवान्यत्र स्वतन्त्रता । अस्वन्त्रेषु शब्दस्य वृत्तिहेतुर्न मुख्यतः॥४२॥ यतोऽतो यदधीनास्ते शब्दार्थत्वमुपागताः । अत्यल्पेनैव शब्दस्य वृत्तिहेतुगुणेन तु ॥४३॥ अयो यथा दाहकत्वं स एवेशः स्वतन्त्रतः । मुख्यशब्दार्थ इति हि स्वीकर्तव्यो मनीषिभिः॥ ॥४४॥ इत्यहैवञ्च शब्दानां नारायणसमन्वये । सिद्धेऽप्यशेषशब्दानां न कथञ्चन युज्यते ॥ ॥४५॥ विरोधादवरत्वादेरपि प्राप्तिर्यतो भवेत् । इति चेदवरत्वादि द्विविधं ह्युपलभ्यते ॥४६॥ परस्यावरताहेतुर्यः स्वयं पर एव सन् । सोऽपि ह्यवरशब्दार्थो यथा राजा जयी भवेत् ॥४७॥ अन्योऽवरत्वानुभवी तयोः पूर्वोऽस्ति केशवे । द्वितीयो जीव एवास्ति स्वातन्त्र्या[5]न्नच दूषणम् ॥४८॥हरेरेवमशेषेण सर्वशब्दसमन्वये । उक्ते विरोधहीनस्य स्यात् समन्वयता यतः। अतोऽशेषविरोधानां कृतेशेन निराकृतिः ॥४९॥ समन्वयाविरोधाभ्यां सञ्जाते वस्तुनिर्णये । किं मया कार्यमित्येव स्याद् बुद्धिरधिकारिणः ॥५०॥ तत्र भक्तिविधानार्थमभक्तानर्थसन्ततौ । उक्तायां भक्तिदार्ढ्याय प्रोक्तेऽशेषगुणोच्चये । वक्तव्योपासना नित्यं कर्तव्येत्यादरेण हि ॥ ॥ ५१ ॥ सोपासना च द्विविधा शास्त्राभ्यासस्वरूपिणी । ध्यानरूपा परा चैव तदङ्गं

---

१ "प्रधाने निहते मल्ले सर्वे मल्लाः प्रदुद्रुवुरिति हि प्रधानमलनिबर्हणन्यायः" इति नचयन्द्रिकायाम् । २ "इतोऽप्यभ्यधिकत्वेऽपि" इति प्र. पाठः । "अत्यभ्यधिकत्वेऽपि" इत्येव च सुधायामपि पाठः । ३ "विशेषगुणवत्त्वतः" इति प्र. पाठः । प्राचीनकोशेऽपि क्वचिदेवम् । ४ "सलिङ्गानामशेषतः" इति क्वचित् पठ्यते । ५ "स्वातन्त्र्यान्नैव" इति प्र. पाठः । नयचन्द्रिकायामपि "नच दूषणम्" इत्येव पाठः ।

अनुव्याख्यानम्

धारणादिकम् ॥ ५२ ॥ तथोभयात्मकं चैव पादेऽस्मिन् बादरायणः । आहोपासनमद्धव विस्तराच्छ्रुतिपूर्वकम् ॥ ५३ ॥ * ॥ पृथग्दृष्टिरशक्यत्वमनिर्णीतिः समुच्चयः । विशेष-दर्शनं कार्यलोपो नानोक्तिराशुता ॥ ५४ ॥ विभ्रमोऽपाकृतिर्लिङ्गमनवस्थाऽविशेषिता । अप्रयोजनता चातिप्रसङ्गोऽदूरसंश्रयः ॥५५॥ विशिष्टकारणं चेष्टा दृष्टवैरूप्यमुन्नतिः । अनु-क्तिरप्रयत्नत्वं दृढबन्धपराभवौ ॥५६॥ पुंसाम्यं प्राप्तसन्त्यागः कारणानिर्णयो भ्रमः। विशेषद-र्शिताऽऽलापो गुणसाम्यं पृथग्दृशिः ॥५७॥ अगम्यवर्त्म सन्धानमिष्टं फलमकल्पना । शुद्धवै-रूप्यमङ्गत्वमविशेषदृशिः क्रिया ॥५८॥ युक्तयः पूर्वपक्षस्थाः सुज्ञेयत्वं विधिक्रिया । माहात्म्य-

न्यायविवरणम्

ॐ॥ नच प्रतिशाखमुच्यमानानामर्थानां पृथक्त्वात् तत्तच्छाखिभिरेव तत्रतत्रोक्तं ज्ञेयमिति नियमः । "नानावेदैरितिहासैः पुराणैः सुज्ञेय एको भगवान् युक्तिभिश्च" इति श्रुतेः सुष्ठु ज्ञेयत्वाद् विष्णोः ॥१॥

नचाशक्यतया कस्यापि गुणोपसंहारो नास्ति । "सर्वे गुणाः सर्वदैव ह्युपास्यास्तेनैव विद्वान् विधिकृन्नान्यथा स्यात्" इति श्रुतेर्विहितक्रियालोपप्रसङ्गात् ॥२॥

केषाञ्चित् सर्वगुणोपसंहारस्य कर्तव्यत्वे सर्वेषामपि तथा स्यात्; अनेनोपसंहर्तव्या अनेन नोप-संहर्तव्या इत्यनिर्णीतेरिति न मन्तव्यम् । "यस्य यावद्गुणाः स्पष्टं प्रतिभासन्त्युपासने । युगपत् स्वभुजौ यद्वद् ध्यायेत् तावत एव सः । युगपद् ब्रह्मणः सर्वे भासन्ते हि गुणा हरेः । तदन्येषां यथार्थयोग्यं स्वमाहात्म्यानुसारतः" इति श्रुतेर्युगपद्गुणप्रतीत्यादिमाहात्म्यान्निर्णयोपपत्तेः ॥३॥

नच फलानिर्णीतिः । माहात्म्येनैवान्यत् फलं महतामिति निर्णयोपपत्तेः ॥४॥

आनन्दादीनां केषाञ्चित् समुच्चये प्राप्ते सर्वेषां सर्वगुणसमुच्चयः स्यादिति न मन्तव्यम् । अल्प-शक्तित्वात् तेषां पुंसाम् ॥*॥

प्रियशिरस्त्वादीनामानन्दादिविशेषत्वेनैव दर्शनात् तेषामपि सर्वोपसंहार्यत्वमिति न मन्तव्यम् । "यथार्थयोगाद् गुणपूगानुपास्य फलं भवेन्मुक्तिगं नान्यथा स्यात् । नित्यैकाव्यताहेतुतश्च साक्षाद् दृशिर्नोत तैस्तद्विशेषैः" इति श्रुतेः स्वयोग्यगुणैरेवं फलभावात् ॥६॥

तर्हि ब्रह्मणोऽन्येषां देवादीनामपि बहुगुणोपासनायाः कार्यं नास्ति, मध्ये नियमासिद्धेरिति न मन्तव्यम् । तेषां भाव्युत्कर्षं ज्ञात्वा तदभिज्ञस्य ब्रह्मण एव गुणनियमोपदेशोपपत्तेः । "यो यो भावो देवतानां विमुक्तौ तत्तत्प्राप्तौ सुगुणानीशितुश्च । ब्रह्मा दिशत्यथ तांस्ते विचिन्त्य तत्तद्भावं प्राप्नुवन्त्यात्मशक्त्या" इति श्रुतेः ॥७॥

---

१ "विशेषदर्शितालापौ" २ "सर्वगुणोपसंहारः" इति प्र.पाठौ । ३ "सर्वदाऽपि" इति क्वचित् कोशेषु पठ्यते । ४ "तेनैव विद्वान्" ५ "अनेनोपसंहर्तव्या इति" इति प्र.पाठौ । ६ "यथायोगम्" इति क्वचित् कोशेषु पठ्यते। ७"सर्वगुणसमुच्चयः सर्वेषां"इति प्र.पाठः। ८"यथायोग्यान्" इति प्र.पा.। "यथायोग्यात्" इति क्वचित् पठ्यते । ९ "व्यङ्ग्यताहेतुतश्च" १० "दृशिर्नो तद्विशेषैः स्मृतेश्च" ११ "गुणैरेव भावात्" इति प्र.पाठाः ।

अनुव्याख्यानम्

मल्पशक्तित्वं यथायोग्यफलं भवः ॥५९॥फलसाम्यं विशेषश्च गुणाधिक्यं प्रधानता । यथाशक्तिक्रिया सन्धिः प्रमाणबलमानतिः ॥६०॥ कारणं कार्यवैशेष्यं स्वभावो वस्तुदूषणम् । प्रतिक्रियाविरोधश्च प्रतिसन्धिरनूनता । ६१॥ संस्कारपाटवं स्वेच्छानियतिर्वस्तुवैभवम् । विशेषोक्तिरमानत्वं प्राधान्यं प्रीतिरागमः ॥६२॥ सुस्थिरत्वं कृतप्राप्तिरनादिगुणविस्तरः । साधनोत्तमता नानादृष्टिः शिष्टिरनूनता ॥६३॥ अविघ्नत्वाविरोधौ च गुणवैशेष्यमागमः। सिद्धान्तनिर्णये ह्येता युक्तयोऽव्याहताः सदा ॥६४॥*॥

न्यायविवरणम्

नच नानास्थानेषूक्तगुणानामनुपासनार्थत्वम्[1] । विप्रकीर्णगुणान्[2] पिण्डीकृत्योपासितुस्तादृशफलप्राप्तेस्तथा[3] ध्यानार्थमेव गुणानामुक्तिरित्युपपत्तिः[4] ॥८॥

नचाऽथ्वापरोक्ष्यायाऽनन्दादीनामपि लोपेनाऽत्मेत्येतावता पूर्यते । आत्मशब्दविशेषार्थत्वादानन्दादीनाम्[5] ॥९॥

नचाऽत्मशब्दो विभ्रमकरः । गुणाधिकानामधिकारिणां भगवद्गुणानधिकान् प्रकाशयतीत्यवधारणोपपत्तेः[6] ॥१०॥

अलौकिकगुणानामप्रतीतेर्लौकिकगुणाध्याने तदपाकृतिरेव भवतीति न मन्तव्यम् । लौकिकविलक्षणा अत्युत्तमा इति ध्यानस्यैव प्राधान्यात् ॥११॥

ब्रह्मणश्च ब्रह्माण्या[7] स्थानैक्यं गुणतारतम्यं च यथागुणोपासनं मुक्तावाधिक्यं न भवतीत्यत्र लिङ्गम्, समविषमोपासनायुक्तेरिति न मन्तव्यम् । "यथाशक्ति स्मृतान् धात्रा गुणान् विष्णोः सरस्वती । स्मरेत् त्रैविक्रमाद्यांस्तु नित्यविक्रान्तिपूर्वकैः । कदाचिल्लोपयेद् देवी स्थानैक्यं न गुणैस्ततः । साम्यं तयोर्यथा विष्णोर्गुणोपासा फलं भवेत्" इत्यध्यात्मवचनाद् यथाशक्ति क्रिया देव्याः ॥१२॥

नचाऽत्मशब्देनास्य पुरुषस्यैतावन्तो गुणा उच्यन्त इति व्यवस्थाभावः[8] । यस्य यावन्तोऽर्था युगपद् ध्यातुं शक्यन्ते तस्य तावन्त इति सन्धेः ॥१३॥

नच मुमुक्षवं[9] इत्यविशेषाद् भरणस्य श्रुतेश्च सर्वेषामपेक्षितत्वात्[10] सम्भृतिश्रुव्याप्ती अपि सामान्ये । "सत्यो ज्ञानैः[11] परमानन्दरूप आत्मेत्येवं नित्यदोपासनं स्यात् । नान्यत् किञ्चित् समुपासीत धीरः सर्वैर्गुणैर्देवगणा उपासते", "गुण्याकारस्मृतेरेव श्रुतिमात्रं प्रतीयते । न व्याप्तिर्जगदस्मृत्या नानाशक्तिर्यतो मता । देवानां युगपज्ज्ञानं मनुषाणां[12] तथा ननु । पर्यायेणापि[13] सत्याः स्युर्नैवान्येषां कथञ्चन" इत्यादिप्रमाणबलात् ॥१४॥

---

१ "अनुपासार्थत्वम्" इति क्वचित् कोशेषु पठ्यते । २ "विप्रकीर्णान् गुणान्" ३ "तत्सदृशफलप्राप्तेस्तथा" ४ "गुणानामुक्त्युपपत्तेः" इति प्र. पाठाः । ५ "आत्मशब्दार्थविशेषत्वात्" इति प्र. पाठः। "आत्मशब्दार्थविशेषार्थत्वात्" इति क्वचित् पठ्यते । ६ "अवधारणत्वोपपत्तेः" ७ "ब्रह्माण्याश्च" ८ "व्यवस्थित्यभावः" ९ "मुमुक्षव इव"(?) १०"अपेक्षितत्वाच्च" ११"ज्ञानम्" १२"मनुष्याणाम्" १३"पर्यायेणैव" इति प्र.पाठाः।

न्यायविवरणम्

**क्वचिद् वहुगुणाः क्वचिदल्पगुणाः श्रुतिष्वेवोच्यन्त इत्युपसंहारस्याप्रयोजनतेति न वाच्यम्। "सर्वे गुणा[1] ब्रह्मणैव ह्युपास्या नान्यैर्दैवैः किमु सर्वैर्मनुष्यैः" इति श्रुतेः[2]। सर्वैगुणोपासनस्या-प्यधिकारिणो[3] भावादेकत्रापि सर्वैगुणानुक्तेर्बलादुपसंहारानतेः[4] ॥१५॥**

**नच मुक्तावुपासनाभावे[5] फलादिकमपि स्यादित्यतिप्रसङ्गः। उपासनायाः संस्काराख्यकारणस्य सत्त्वात्। "न हीयते यत्र गत्वा यत्र गत्वा न वर्धते" इत्यवृद्धिप्रमाणभावाच्च[6] ॥१६॥**

**नच कर्मकरणशक्तेरप्यदूरत्वात् तत्संश्रयनियमः। उपासनाख्यकार्ये[7] नित्यकृतिसंस्कारो न तथा कर्मणीति कार्यवैशेष्यात् ॥१७॥**

**नच[8] योग्यताख्यविशिष्टकारणाज्ज्ञानिष्वपि केषाञ्चिन्मोक्षो न भवतीति नियमः। ज्ञानिनां मोक्षं ददात्येवेतीशस्वभावात्[9]। अयोग्यानां ज्ञानस्यैवानुत्पत्त्युपपत्तेः[10] ॥१८॥**

**नच प्रयत्नानुसारिणो मुक्तावाधिकारिकानन्दादयः[11]। अधिकारानुसारित्वात् प्रयत्नस्य। कथञ्चि-दधिकयत्ने[12] तत्साधनादिवस्तूनां दूषणप्राप्तेः। "स्वाधिकाराधिको यत्नः प्रायशो नोपपद्यते। कथञ्चिदधिके यत्ने दोषः कश्चित् समापतेत्" इति वचनाच्च ॥१९॥**

**नचैकस्मादेको विशिष्टो दृष्ट एवेति प्राणाद् विशिष्टजीवाभावे दृष्टवैरूप्यमिति दोषः। "यः सर्व-मवजानीयादृते [देवं] नारायणं[13] देवीं च परमां श्रियं स प्राणानवरुद्ध्येमं मन्त्रमावर्तयीत—आत्मा देवानां भुवनस्य गर्भो यथावशं चरति देव एषः। घोषा इदस्य शृण्विरे न रूपं तस्मै वाताय हविषा विधेमेति। स ह्येषां भूतानां वरिष्ठो नह्यस्मात्[14] कश्चनोपरि विना देवं नारायणं देवीं च परमां श्रियम्" इति प्रतिक्रियाविधानादिविरोधात् ॥२०॥**

**"अस्ति भगवः प्राणाद् भूयः" इति प्रश्नाद्यभावात् प्राणस्यैवोन्नतिप्रतीतेर्न विष्णोरपि ततः परत्वमिति न मन्तव्यम्। "एष तु वा अतिवदति" इति विशेषणात् प्रश्नप्रतिवचनप्रतिसन्धा-नोपपत्तेः ॥२१॥**

**नच सत्यादीनामभेदानुक्तेरन्यत्वम्। "सत्यं पूर्णं विज्ञानं पूर्णं कृतिः पूर्णा निष्ठा पूर्णा मतिः पूर्णा श्रद्धा पूर्णा[15] सुखं पूर्णं भूमा पूर्णोऽहं पूर्णं आत्मा पूर्णो नात्र किञ्चिदूनं पूर्णमेवाधस्तात् पूर्णमुप-**

---

१ **"गुणाः सर्वे"** २ **"इत्यादिश्रुतेः"** ३ **"सर्वगुणोपासकस्यापि"** ४ **"एकत्रापृथक् सर्वगुणा-नुक्तेर्बलाच्च"** इति प्र. पाठाः। ५ **"उपासनभावे"** इति क्वचित् पठ्यते। उभयथाप्यर्थतो न भेदः। ६ **"प्रमा-णाच्च"** इति क्वचित् पठ्यते। ७ **"उपासनाख्ये कार्ये"** इति प्र. पाठः। ८ **"नचायोग्यताख्य-"** इति प्र. पाठः। प्राचीनपाठे मोक्षं प्रति विशिष्टकारणात् तदभावाच्च ज्ञानिष्वपि केषाञ्चिन्न मोक्ष इत्यादिरर्थः। ९ **"ददात्ये-श्वरः स्वभावात्"** १० **"उत्पत्त्यनुपपत्तेः"** इति प्र. पाठौ। ११ **"अधिकानन्दादयः"** इति क्वचित् कोशे पठ्यते। १२ **"अधिके यत्ने"** इति प्र. पाठः। १३ प्राचीनकोशेषु **"ऋते नारायणम्"** इतीयदेव पठ्यते। श्रुतावुपसंहारे 'देवं नारायणम्' इति श्रवणादत्रापि तत् स्यादेवेति सम्भाव्यते। क्वचित् कोशे **"ऋते नारायणं परम्"** इति पठ्यते। द्वयमप्युपसंहारविसंवादि। १४ **"नह्येतस्मात्"** इति प्र. पाठः। १५ प्र. पाठे **"श्रद्धा पूर्णा मतिः पूर्णा"** इति व्यत्यस्य पठ्यते।

न्यायविवरणम्

रिष्टात् पूर्णं मध्यतः पूर्णं सर्वतस्तदेष श्लोको भवति— "पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते" इति श्रुतेः सर्वेषामनूनत्वात्। "सत्याद्या अहमात्मान्ता यद्गुणाः समुदीरिताः। तस्मै नमो भगवते यस्मादेव विमुच्यते" इति वचनाच्च ॥२२॥

नच श्रियोऽप्रयत्नत्वादनुपासनं संसारो वा। नित्यं भगवदुपस्थितेरतिप्रियत्वात् संस्कारपाटवान्नित्योपास्योपपत्तेश्च ॥२३॥

नच बन्धदार्ढ्ये श्रवणादीनामफलता; अन्यथोपास्तां विनैव श्रवणादिज्ञानमात्रेण मुक्तिरिति दोषः। "श्रवणादित्रयोत्पन्नदृष्ट्यैव स्वेच्छया हरिः। प्रसन्नो मुक्तिदो नित्यमन्यथा न कथञ्चन" इतीश्वरेच्छानियतिश्रुतेः ॥२४॥

नच गुर्वधीनत्वे ज्ञानमोक्षयोर्ज्ञानिनोऽपि कदाचिद् गुरुकोपाज्ज्ञानपराभवेनामुक्तिप्रसङ्गान्न गुर्वधीनत्वमिति। "ज्ञानिनो गुरुशापेऽपि नामुक्तिः संसृतेः क्वचित्। आनन्दह्रासदोषेण सैव मुक्तिर्विदुष्यति" इति वचनान्मुक्तिदूषणेनैव गुरुकोपादेः कृतार्थत्वात्, ज्ञानिनो ब्रह्मवस्तुवैभवेन मुक्तिः स्यादिति गुरोर्वैरेण वा मुक्त्यनुपपत्तेः ॥२५॥

शिष्यस्यापि पुरुषत्वसाम्याद् धारणादेस्तत्प्रयत्नस्य न दौर्बल्यमिति न मन्तव्यम्। "गुरुप्रसादो बलवान्" इत्यादिविशेषोपपत्तेः ॥२६॥

नचोत्तमगुरुस्वीकारार्थत्वेन प्राप्तसन्त्यागनिमित्तदोषः। तत्र दोषे मानाभावात् ॥२७॥

नच विद्या कर्म वा संसारनिवृत्तिकारणमिति कारणानिर्णयः। "नान्यः पन्था अयनाय विद्यते" इत्यवधारणाद् विद्यावचनस्य प्राधान्यात् ॥२८॥

नच विद्यावचनप्राधान्यं भ्रमः। "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" इति भगवतस्तस्मिन्नेवाधिकप्रीतिवचनात्। "यमेवैष वृणुते तेन लभ्यः" इति तत्प्रीतेरेवं मोक्षवचनाच्च ॥२९॥

नच कस्यचिद् विशेषज्ञानोपपत्तेर्भक्त्यादिकं विना मुक्तिः। "भक्त्यैवैनं जानाति भक्त्यैवैनं पश्यति भक्त्यैव बन्धाद् विमुच्यते भक्त्यैवाऽनन्दीभवति", "यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्", "भिनत्ति कर्मसङ्घातं प्रसन्नो भगवान् हरिः" इत्याद्यागमात् ॥३०॥

नच "दृष्ट्वैव तं मुच्यते नापरेण", "यावान् यश्चास्मि तत्त्वतः। ततो मां तत्त्वतो ज्ञात्वा" इत्यादिसामान्यालापमात्रेण दर्शनस्याविशेषः। "यथायोग्यमेवैष आत्मानं दर्शयति यथाधिकारं देवेभ्योऽतो ब्रह्मैवैनमभिपश्यत्यथाऽत्मैवाऽत्मानमभिपश्यति सुस्थिरो ह्येष नियमः" इति दर्शनविशेषनियमस्य सुस्थिरत्ववचनात्। "यावान् यश्चास्मि" इति ब्रह्मण एव ज्ञानोपपत्तेः। "यावान्" इत्यत्रापि सामान्यविशेषज्ञानोपपत्तेश्च ॥३१॥

---

१ "पराभावेन" इति प्र. पाठः। २ "शापादेः" इति क्वचित् कोशेषु पठ्यते। ३ "मुक्त्युपपत्तेः" (?) इति प्र. पाठः। ४ "विशेषोक्तेः" इति प्र. पाठः। यद्यपि विशेषोक्तिरित्येवानुव्याख्याने न्यायोक्तिः। तथाच तदनुसारेण विशेषोक्त्युपपत्तेरित्यादि व्याख्येयम्। ५ "वचनस्य प्राधान्यम्" ६ "अभ्यधिकप्रीतिवचनात्" ७ "तत्प्रतीतेरेव" (?) इति प्र. पाठाः। ८ प्र. पाठे "तेन लभ्यः" इतीयत्पर्यन्तमेव पठ्यते।

भाष्यम्

सर्वपरिज्ञानं प्रथमत उच्यते—

॥ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥१॥

न्यायविवरणम्

नच भगवतः सर्वत्र गुणसाम्याद् यस्यकस्यापि रूपस्य दर्शनात् सर्वेषां मुक्तिः। "समोऽपि भगवान् स्वबिम्बदर्शन एवैनं मोचयति। यथा समेष्वपि कर्मसु स्वकृतमेवैनं भोजयति" इति श्रुत्युक्तस्वकृतप्रातिदृष्टान्तात् ॥३२॥

"भक्तिरेवैनम्" इति भक्तेरेव पृथङ्मोचकत्वदर्शनान्नेशकृत्यमिति न मन्तव्यम्। "अनादितो गुणाः सन्तो भक्त्याद्या नह्यमूमुचन्। जीवं तद्गुणसुव्यक्तिं कृत्वैनं मोचयेद्धरिः। कश्चिन्न मोचयेद् वाऽसौ स्वातन्त्र्यं तस्य तेन हि[1]। भक्तिवाक् करणत्वेन सावकाशेशवागथ। भक्त्यैनं मोचयेद् विष्णुरिति मानत्वमेष्यति" इति ब्रह्मतर्कवचनादनादिगुणविस्तरे सत्यप्यव्यक्त्यादिना तदिच्छां विना मोक्षाप्राप्तेः ॥३३॥

नचांशिमार्गस्यांशेनागम्यत्वात् तयोर्भेदः। साधनोत्तमस्यादृष्टस्यांशिकृतस्यांशेन भुज्यमानत्वात्। अन्यथाऽदृष्टं विना शरीराद्यनुपपत्तेः[2] ॥३४॥

नच गुणान्तरसन्धानस्य क्वचिद्[3] दर्शनमात्रेण समाधिकाङ्गदेवतान्तरगुणा अप्यङ्गदेवतान्तर उपसंहर्तव्याः। नानागुणत्वेन तेषां श्रुतिषु दृष्टेः[4]। अनिषिद्धगुणानां वाक्यान्वयन्यायेनोपसंहारात् "न शाखासु" इत्यादिविशेषः। उत्तमेष्वधमगुणापेक्षया "मन्त्रादिवद् वा" इति ॥३५॥

नच भूमगुणस्योपासकं प्रति विशेषाभावेऽपि तत्तदिष्टगुणानुसारेण फलोपपत्तिरित्यविशेषः। "भूमैव देवः परमो ह्युपास्यः[5]" इत्यादिशिष्टेः ॥३६॥

नच भूमगुण उपासकानामेकप्रकारेणैव प्रतीयत इत्यङ्गीकार्यम्, विशेषस्याकल्पनोपपत्तेरिति न मन्तव्यम्। "यावानेवाधिकारेषु विशेषोऽनून एव हि। अतो[6] भूमत्वदृष्टौ च ब्रह्मादीनां पृथक् पृथक्" इति विशेषस्यानूनत्ववचनात् ॥३७॥

नच शुद्धमोक्षसाधनवैरूप्यान्मोक्षसाधनत्वेनोपदिष्टं विना विष्णोरेवोपासनान्तरस्याकर्तव्यता। अविघ्नतासाधनत्वात् ॥३८॥

नच काम्यसाधनानामपि गुणानामङ्गत्वादेवोपसंहर्तव्यतानियमः। अनुपसंहारे विरोधाभावात्। काम्यानामनियताङ्गत्वाच्च। "अर्थादि धर्मसिद्धौ हि न नियत्याऽङ्गमिष्यते" इति ब्रह्मतर्के ॥३९॥

नच देवानामिति तत्रैव विशेषवचनाभावात् "ब्रह्मा शिरसि ललाटे रुद्रः" इत्यादीनां नावश्योपास्यता। "देवादीनामेव ध्यायेदङ्गेष्वङ्गदेवताः परस्य विशिष्टा हि गुणा मुक्तौ देवादीनां भवन्ति ते हि तादृशास्ते हि हरेरनुरूपाः" इति श्रुतेर्गुणवैशेष्यात् ॥४०॥

---

१ "तेन तस्य हि" २ "शरीरानुपपत्तेः" ३ "क्वापि" ४ "श्रुतिदृष्टेः" इति प्र· पाठाः। ५ इतः परं प्र· पाठे "नैवा भूमा फलमेषां विधत्ते" इत्यधिकं पठ्यते। ६ "ततः" ७ "विष्णावेव" ८ "देवादीनामिति" इति प्र· पाठाः। ९ "देवानाम्" इति प्र. पाठः। क्वचित् प्राचीनकोशेऽपि "देवानाम्" इति पठ्यते। परन्तु देवादीनामेवेति श्रुत्युपक्रमानुगुण्यायायं पाठः स्वीकृतः।

भाष्यम्

अन्तो निर्णयः। "उभयोरपि दृष्टोऽन्तः" इति वचनात्। सर्ववेदनिर्णयोत्पाद्यज्ञानं ब्रह्म। "आत्मेत्येवोपासीत" इत्यादिविधीनां तदुक्तयुक्तीनां चाविशिष्टत्वात्॥*॥

॥ भेदान्नेति चेदेकस्यामपि ॥२॥

"विज्ञानमानन्दं ब्रह्म", "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादि प्रतिशाखमुक्तिभेदान्नैकाधिकारिविषयाः सर्वशाखा इति चेत्, न। एकस्यामपि शाखायां "आत्मेत्येवोपसीतों खं ब्रह्म[1]" इत्यादि भेददर्शनात्॥*॥

॥ स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च ॥३॥

"स्वाध्यायोऽध्येतव्यः" इति सामान्यविधेः। हिशब्दात् "वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना" इति स्मृतेः। "सर्ववेदोक्तिमार्गेण[2] कर्म कुर्वीत नित्यशः। आनन्दो हि फलं यस्माच्छाखाभेदो ह्यशक्तिजः। सर्वकर्मकृतौ यस्मादशक्ताः सर्वजन्तवः। शाखाभेदं कर्मभेदं व्यासस्तस्मादचीक्लपत्" इति समाचारे सर्वेषामधिकाराच्च॥*॥

अनुव्याख्यानम्

यथाशक्त्यखिलान् वेदान् विज्ञायोपासनं भवेत्। तत्राखिलस्य विज्ञप्तिः सम्यग् ब्रह्मण एव हि ॥६५॥ तदन्येषां यथायोग्यम[3]खिलज्ञप्तिरिष्यते। तावतोपासने योग्यो भवेदेवाखिलः पुमान्॥६६॥ महत्त्वस्य परं पारं त्रिदिवैव जनार्दनः। स्तोष्यतामेति[4] तुष्टत्वमिति नास्त्येव नारद ॥६७॥ किन्तु निश्चलया भक्त्या ह्यात्मज्ञानानुरूपतः। यः स्तोष्यति सदा भक्तस्तुष्टस्तस्य सदा हरिः ॥६८॥ इत्यादिवाक्यसन्दर्भाद् यथायोग्याखिलज्ञता। आत्मज्ञानानुरूपत्वं यथाशक्ति विचारणात् ॥६९॥ वेदः कृत्स्नोऽधिगन्तव्यः स्वाध्यायाध्ययनं भवेत्। इत्यादिवाक्यवैयर्थ्यमन्यथा न निवार्यते॥७०॥ अद्यापि तेन देवाद्याः शृण्वते मन्वते सदा। ध्यायन्ति

न्यायविवरणम्

नच क्रियात्वादुपासनायां[5] उपसंहारस्याग्निष्टोमादिवत् प्रतिशाखं वक्तव्यता। "उपासना यजनं चेति साम्यं तत्तद्विशेषान् संहरेत् सर्वतश्च। तथा कर्तृणां तत्फलानां विशेषाद् व्यर्था हि शाखा अन्यथैवं च सार्थाः" इत्युपासनाविशेषाणामधिकारिविशेषाणां[6] चाऽगमेऽवगमात् ॥४१॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते

श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे

तृतीयाध्यायस्य तृतीयः पादः

---

१ "उपासीत कं ब्रह्म खं ब्रह्म" २ "वेदोक्तमार्गेण" ३ "यथायोगम्" इति प्र. पाठाः। ४ प्राचीनकोशेषु "स्तोष्यतामेव" इति पठ्यते। अन्वयस्तु न स्फुटः ५ "उपासनाया अग्निष्टोमादिवत्" ६ "उपासनाविशेषाणां त्वधिकारिविशेषाणाम्" इति प्र. पाठौ।

भाष्यम्

॥ सलिलवच्च तन्नियमः ॥४॥

यथा सर्वं सलिलं समुद्रं गच्छति, एवं सर्वाणि वचनानि ब्रह्मज्ञानार्थानीति नियमः। आग्नेये च—

"यथा नदीनां सलिलं शक्ये सागरगं भवेत्। एवं वाक्यानि सर्वाणि पुंशक्त्या ब्रह्मवित्तये" इति ॥*॥

॥ दर्शयति च ॥५॥

"सर्वैश्च वेदैः परमो हि देवो जिज्ञास्योऽसौ नाल्पवेदैः प्रसिद्ध्येत्। तस्मादेनं सर्ववेदानधीत्य विचार्य च ज्ञातुमिच्छेन्मुमुक्षुः" इति चतुर्वेदशिखायाम्।: "सर्वान् वेदान् सेतिहासान् सपुराणान् सयुक्तिकान्। सपञ्चरात्रान् विज्ञाय विष्णुर्ज्ञेयो नचान्यथा" इति च ब्रह्मतर्के ॥*॥

॥*॥ इति प्रथममधिकरणम् ॥*॥

अनुव्याख्यानम्

च यथायोगं तथाऽप्या वस्तुनिर्णयात्। श्रवणं मननं चैव कर्तव्यं सर्वथैव हि ॥७१॥ मतिश्रुतिध्यानकालविशेषं गुरुरुत्तमः। वेत्ति तस्योक्तिमार्गेण[1] कुर्वतः स्याद्धि दर्शनम् ॥७२॥ श्रवणं दृष्टतत्त्वस्य मननं ध्यानमेव च। विशेषानन्दसम्प्राप्त्या अन्यस्यैतानि दृष्टये ॥७३॥ यदि तादृग् गुरुर्नास्ति निर्णीतश्रवणादिकम्। तत्सिद्धान्तानुसारेण निर्णयज्ञात् समाचरेत् ॥७४॥ श्रवणादि विना नैव क्षणं तिष्ठेदपि क्वचित्। अत्यशक्ये तु निद्रादौ पुनरेव समारभेत्[2] ॥७५॥ अभावे निर्णयज्ञस्य सच्छास्त्राण्येव सर्वदा। शृणुयाद् यदि सज्ज्ञानप्राचुर्यमुपलभ्यते ॥७६॥ महद्भ्यो विष्णुभक्तेभ्यो यथाशक्ति च संशयान्। छिन्द्यात् स्वतोऽधिकाभावे स्वयमेव समभ्यसेत्। ब्रूयादपिच शिष्येभ्यः सत्सिद्धान्तमहापयन् ॥७७॥ अशेषगुणपूर्णत्वं सर्वदोषसमुज्झितिः। विष्णोरन्यच्च तत्तन्त्रमिति सम्यग् विनिर्णयः ॥७८॥ स्वतन्त्रत्वं सदा तस्य तस्य भेदश्च सर्वतः। अदोषत्वस्य सिद्ध्यर्थं यदभेदे तदन्वयः ॥७९॥ तत्तन्त्रत्वं च मुक्तानामपि तद्गुणपूर्तये। मुक्तानामपि भेदश्च नहि भिन्नमभिन्नताम्। गच्छद् दृष्टं क्वचित् तस्याप्यभावोऽनुभवोपगः ॥८०॥ पूर्वाभेदे दोषवत्त्वमीशस्येत्यतिभिन्नता। नारायणेन मुक्तानामपि सम्यगिति स्थितिः ॥८१॥ भेदाभेदेऽप्यभेदेन दोषाणामपि सम्भवः। निर्दोषत्वं रमायाश्च तदनन्तरता तथा ॥८२॥ ब्रह्मा सरस्वती वीन्द्रशेषरुद्राश्च तत्स्त्रियः। शक्रकामौ तदन्ये च क्रमान्मुक्तावपीति च ॥८३॥ सत्सिद्धान्त इति ज्ञेयो निर्णीतो हरिणा स्वयम्। एतद्विरोधि यत् सर्वं तमसेऽन्धाय केवलम् ॥८४॥ अन्धं तमो विशन्तीति प्राह श्रुतिरतिस्फुटम्[3]। इत्येव श्रुतयोऽशेषाः पञ्चरात्रमथाखिलम् ॥८५॥ मूलरामायणं चैव भारतं स्मृतयोऽखिलाः। वैष्णवानि पुराणानि साङ्ख्ययोगौ परावपि ॥८६॥ ब्रह्मतर्कश्च मीमांसेत्यनन्तः शब्दसागरः।

---

१ "तस्योक्तमार्गेण" २ "समाचरेत्" इति प्र.पाठौ। ३ "श्रुतिरपि स्फुटम्" इति क्वचित् पठ्यते।

भाष्यम्

सर्वैर्वेदैर्ज्ञेयो नोपास्योऽशक्यत्वादित्यत आह—

॥ उपसंहारोऽर्थाभेदाद् विधिशेषवत् समाने च ॥६॥

सर्ववेदोक्तान् गुणान् दोषाभावांश्चोपसंहृत्यैव परमात्मोपास्यः।

"उपास्य एकः परतः परो यो वेदैश्च सर्वैः सह चेतिहासैः। सपञ्चरात्रैः सपुराणैश्च देवः सर्वैर्गुणैस्तत्रतत्र प्रतीतैः" इति हि भाल्लवेयश्रुतिः।

आग्नेये च—

"विधिशेषाणि कर्माणि सर्ववेदोदितान्यपि। यथा कार्याणि सर्वैश्च सर्वाण्येवाविशेषतः। एवं सर्वगुणान् सर्वैर्दोषाभावांश्च[1] यत्नतः। योजयित्वैव भगवानुपास्यो नान्यथा क्वचित्" इति।

समानविषये चोपसंहारः। नतु "सोऽरोदीत्" इत्यादीनाम्।

"गुणैरेव स तूपास्यो नैव दोषैः कथञ्चन। गुणैरपि नतूपास्यो ये पूर्णत्वविरोधिनः" इति हि बृहत्तन्त्रे[2] ॥*॥

॥ अन्यथात्वं[3] शब्दादिति चेन्नाविशेषात् ॥७॥

"आत्मेत्येवोपासीत" इति शब्दादुपसंहारस्यान्यथात्वमिति चेत्, न। एते गुणा नोपास्या इति विशेषवचनाभावात्।

"सर्वैर्गुणैरेक एवेशिताऽसावुपासितव्यो नतु दोषैः कदाचित्" इति विशेषवचनाच्च।

"आत्मेत्येव" इत्यवधारणमनात्मत्वनिवृत्त्यर्थम् ॥*॥

॥*॥ इति द्वितीयमधिकरणम्[4] ॥*॥

॥ नवा प्रकरणभेदात् परोवरीयस्त्वादिवत् ॥८॥

प्रकरणभेदान्नवोपसंहारः कार्यः। परोवरीयस्त्वादिषु तावदेव ह्युक्तम् ॥*॥

॥ सञ्ज्ञातश्चेत् तदुक्तमस्ति तु तदपि ॥९॥

अनुव्याख्यानम्

अनन्ता युक्तयश्चैव प्रत्यक्षागममूलकाः॥८७॥ प्रत्यक्षमैश्वरं चैव रमादीनामशेषतः। मुक्तानामप्यमुक्तानामेतमेवार्थमुत्तमम् ॥८८॥ अन्यावकाशरहितं प्रकाशयति सादरम्। एतदेव च सच्छास्त्रं दुःशास्त्रं तु ततः परम् ॥८९॥ सच्छास्त्रमभ्यसेन्नित्यं दुःशास्त्रं च[5] परित्यजेत्। असंशयेन तत्त्वस्य निर्णये ब्रह्मदर्शनम् ॥९०॥ सम्यग्विषमविज्ञानतारतम्यानुसारतः। फलं भवेत् तारतम्यात् सुखदुःखात्मकं नृणाम्॥९१॥ सम्यक् चाधिकविज्ञानात् सुखाधिक्यं भवेन्नृणाम्। अतो यथात्मशक्त्यैव श्रवणं मननं तथा। कृत्वाऽथ कुर्वन्नपि वा निदिध्यासनमाचरेत् ॥९२॥*॥

---

१ "सर्वदोषाभावांश्च" २ "इति बृहत्तन्त्रे" इति प्र. पाठौ। ३ "अन्यथात्वं च शब्दात्" इति प्र. सूत्रपाठः। ४ प्र.पाठे नाधिकरणान्तरम्। ५ "दुःशास्त्रं तु" इति प्र. पाठः।

भाष्यम्

सर्वविद्या उक्त्वा " सोऽहं नामविदेवास्मि नाऽत्मवित् " इति वचनात् सर्वस्य ब्रह्मनामत्वादुपसंहारः कार्यः ।

" नामत्वात् सर्वविद्यानां गुणानामुपसंहृतिः। कार्यैव ब्रह्मणि परे नात्र कार्या विचारणा"
इति च ब्रह्मतर्के इति चेत्,

सत्यम् । उक्तो ह्युपसंहारः । तत्प्रमाणमप्यस्त्येव ।

"नाम वा एता ब्रह्मणः सर्वविद्यास्तस्मादेकः सर्वगुणैर्विचिन्त्यः"इति कौण्डिन्यश्रुतौ॥*॥

॥*॥ इति तृतीयमधिकरणम्॥*॥

॥ प्राप्तेश्च समञ्जसम् ॥१०॥

युज्यते चोपसंहारोऽनुपसंहारश्च योग्यताविशेषात् ।

" गुणैः सर्वैरुपास्योऽसौ ब्रह्मणा परमेश्वरः। अन्यैर्यथाक्रमं चैव मानुषैः कैश्चिदेव तु "
इति भविष्यत्पर्वणि[३] ॥*॥

॥ सर्वाभेदादन्यत्रेमे ॥११॥

सर्वगुणयुक्तत्वेनोपासनादन्यत्रैव फले ब्रह्मादयो भवन्ति ।

" सम्पूर्णोपासनाद् ब्रह्मा सम्पूर्णानन्दभाग् भवेत् । इतरे तु यथायोगं सम्यङ् मुक्तौ भवन्ति हि " इति पाद्मे ॥*॥

॥*॥ इति चतुर्थमधिकरणम् ॥*॥

सर्वेषां मुमुक्षूणां कियन्नियमेनोपास्यमिति आह[४]—

॥ आनन्दादयः प्रधानस्य ॥१२॥

प्रधानफलस्य मोक्षस्यार्थं आनन्दो ज्ञानं सदात्मेत्युपास्या एव ।

" सच्चिदानन्द आत्मेति ब्रह्मोपासा विनिश्चिता । सर्वेषां च मुमुक्षूणां फलसाम्यादपेक्षिता " इति ब्रह्मतर्के ॥*॥

॥*॥ इति पञ्चममधिकरणम् ॥*॥

॥ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥१३॥

फलभेदार्थमुपचयापचययोर्भावान्न सर्वेषां प्रियशिरस्त्वादिगुणोपासाप्राप्तिः ।

" नैव सर्वगुणाः सर्वैरुपास्या मुक्तिभेदतः । विरिञ्चस्यैव यन्मुक्तावानन्दस्य सुपूर्णता "
इति हि वाराहे[५] ॥*॥

॥ इतरे त्वर्थसामान्यात् ॥१४॥

इतरे गुणाः फलसाम्यापेक्षयोपसंहर्तव्याः ॥*॥

॥*॥ इति षष्ठमधिकरणम्[६] ॥*॥

---

१ "नामत्वात् तदुपसंहारः" इति प्र. पाठः । २ प्र.पाठेऽत्र द्वितीयमधिकरणम् । ३ प्र. पाठेऽत्र तृतीयाधिकरणपूर्तिः । ४ "इत्यत आह" ५ "इति वाराहे" इति प्र. पाठौ । ६ प्र. पाठेऽत्र षष्ठाधिकरणपूर्तिः । ७ प्र. पाठेऽत्र सप्तममधिकरणम् ।

भाष्यम्

उपसंहारानुपसंहारप्रमाणमाह—

॥ आध्यानाय प्रयोजनाभावात् ॥१५॥

आध्यानार्थं हि सर्वे गुणा उच्यन्ते। प्रयोजनान्तराभावात्—

"ज्ञानार्थमथ ध्यानार्थं गुणानां समुदीरणात्[1]। ज्ञातव्याश्चैव ध्यातव्या गुणाः सर्वेऽप्यतो हरेः। नान्यत् प्रयोजनं ज्ञानाद् ध्यानात् कर्मकृतेरपि। श्रवणाच्चाथ पाठाद् वा विद्याभिः किञ्चिदिष्यते" इति परमसंहितायाम्। "गुणाः सर्वेऽपि वेत्तव्या ध्यातव्याश्च न संशयः। नान्यत् प्रयोजनं मुख्यं गुणानां कथने भवेत्। ज्ञानध्यानसमायोगाद् गुणानां सर्वशः फलम्। मुख्यं भवेन्नचान्येन फलं मुख्यं क्वचिद् भवेत्" इति बृहत्तन्त्रे ॥*॥

॥ आत्मशब्दाच्च ॥१६॥

"आत्मेत्येवोपासीत" इत्यनुपसंहारे[2]प्रमाणम् ॥*॥[3]

॥ आत्मगृहीतिरितरवदुत्तरात् ॥१७॥

नच "आनन्दादयः प्रधानस्य" इत्युक्तिविरोधः। यतः "सत्यं ज्ञानमनन्तं ब्रह्म", "विज्ञानमानन्दम्[4]" इतिवदेवाऽऽत्मशब्दगृहीतिः। "अत्र ह्येते सर्वे एकं भवन्ति[5]" इत्युत्तरात्।

"आनन्दानुभवत्वाच्च निर्दोषत्वाच्च भण्यते। नित्यत्वाच्च तथाऽऽत्मेति वेदवादिभिरीश्वरः" इति हि बृहत्तन्त्रे[6] ॥*॥[7]

॥ अन्वयादिति चेत् स्यादवधारणात् ॥१८॥

सर्वगुणानामन्वय आत्मशब्दे भवति। "आतत्यातेरात्मशब्दः परमस्य प्रयुज्यते" इति वचनादिति चेत्, सत्यम्। स्याच्चैवम्। "आत्मेत्येव" इत्यवधारणात्। अन्यथा सर्वोपसंहारवचनविरोधात् ॥*॥

॥*॥ इति सप्तममधिकरणम् ॥*॥

॥ कार्याख्यानादपूर्वम् ॥१९॥

"अलौकिकास्तस्य गुणा ह्युपास्या अलौकिकं मुक्तिकार्यं यतोऽस्य" इति कार्याख्यानादन्यत्रादृष्टा एव गुणा उपास्याः ॥*॥

॥*॥ इत्यष्टममधिकरणम् ॥*॥[8]

॥ समान एवञ्चाभेदात् ॥२०॥

अपूर्वत्वेऽपि समानानामेवोपसंहारः। नतु त्रिविक्रमत्वादीनां कादाचित्कानां पृथक्त्वेन। नित्यविक्रान्त्यादिष्वन्तर्भावात् ॥*॥

॥*॥ इति नवममधिकरणम् ॥*॥[9]

---

१ "समुदीरणा" २ "अनुपसंहारे प्रमाणम्" इति प्र. पाठौ। ३ प्र. पाठेऽत्राष्टममधिकरणम्। ४ "विज्ञानमानन्दं ब्रह्म" ५ "एकीभवन्ति" ६ "इति बृहत्तन्त्रे" इति प्र. पाठः। ७ प्र. पाठेऽत्र नवममधिकरणम्। ८ प्र. पाठेऽत्र दशममधिकरणम्। ९ प्र. पाठेऽत्रैकादशमधिकरणम्। १० प्र.पाठेऽत्र नाधिकरणपूर्तिः।

भाष्यम्

## ॥ सम्बन्धादेवमन्यत्रापि ॥२१॥

परमात्मसम्बन्धित्वेन नित्यत्वात् त्रिविक्रमत्वादिष्वप्युपसंहार्यत्वं युज्यते ।

" गुणास्त्रैविक्रमाद्याश्च संहर्तव्या न संशयः । विरिञ्चस्यैव नान्येषां स हि सर्वगुणाधिकः " इति हि बृहत्तन्त्रे[1] ॥*॥

॥*॥ इति दशममधिकरणम्[2] ॥*॥

## ॥ नवा विशेषात् ॥२२॥

नवाऽऽत्मशब्देन सर्वगुणगृहीतिः । अधिकारिविशेषात् ॥*॥

## ॥ दर्शयति च ॥२३॥

"सर्वान् गुणानात्मशब्दो ब्रवीति ब्रह्मादीनामितरेषां नचैव" इति च भालुवेयश्रुतिः[3] ॥*॥

॥*॥ इत्येकादशमधिकरणम्[4] ॥*॥

## ॥ सम्भृतिद्युव्याप्त्यपि चातः ॥२४॥

सम्भृतिद्युव्याप्ती अपि देवादीनामुपसंहर्तव्ये । नान्येषाम् । अत एव योग्यताविशेषात् ।

" देवादीनामुपास्यास्तु भृतिव्याप्त्यादयो गुणाः । आनन्दाद्यास्तु सर्वेषामन्यथाऽनर्थकृद् भवेत् " इति च ब्रह्मतर्के[5] ॥*॥

॥*॥ इति द्वादशमधिकरणम्[6] ॥*॥

यस्यां विद्यायां महागुणा उच्यन्ते सोत्तमानामितरा अन्येषामिति[7] चेत्, न—

## ॥ पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॥२५॥

पुरुषसूक्तोक्तविद्यायामपि केषाञ्चिद् गुणानामनाम्नानात् ।

" सर्वतः पौरुषे सूक्ते गुणा विष्णोरुदीरिताः । तत्रापि नैव सर्वेऽपि तस्मात् कार्योपसंहृतिः " इति ब्रह्मतर्के ॥*॥

## ॥ वेधाद्यर्थभेदात् ॥२६॥

" भिन्धि विद्धि[9] शृणीहीति फलभेदेन सर्वशः । यत्यादीनां तेष्वयोगान्नाधिकार्यैकर्ता[10] भवेत् । अयोग्योपासनादीयुरनर्थं चार्थनाशनम् " इति बृहत्तन्त्रे ॥*॥

॥*॥ इति त्रयोदशमधिकरणम्[11] ॥*॥

---

१ "इति बृहत्तन्त्रे" इति प्र. पाठः । २ प्र. पाठेऽत्र द्वादशमधिकरणम् । ३ " इति भालुवेयश्रुतिः " इति प्र.पाठः । ४ प्र. पाठेऽत्र त्रयोदशमधिकरणम् । ५ "इति ब्रह्मतर्के" ६ प्र. पाठेऽत्र चतुर्दशमधिकरणम् । ७ "इतराऽन्येषामिति" इति प्र.पाठः । प्राचीनपाठे त्वितरा विद्या इति बहुवचनम् । ८ प्र. पाठेऽत्र पञ्चदशमधिकरणम् । ९ "विध्य" इति प्र. पाठः । यद्यपि "ताभिर्विध्य हृदये यातुधानान्" इति श्रुत्यनुसारात् "विध्य" इत्येवोचितम् । तथाऽपि विध्येत्यैतत् विद्धीति व्याख्यायते । ज्ञानार्थो वेत्तिः हिंसायामपि वर्तत इति वक्तव्यम् । यथा हन्तिर्गतौ च हिंसायां च वर्तते । यथात्र हन्तेर्हिंसायामेव भूरिप्रयोगस्तथा वेत्तेर्ज्ञान एवेति न । १० "नाधिकारैकता" इति प्र. पाठः । ११ प्र. पाठेऽत्र षोडशमधिकरणम् ।

भाष्यम्

मुक्तस्योपासना कर्तव्या नवेत्यतोऽब्रवीत्[1]—

॥ हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत् तदुक्तम् ॥

नियतस्वाध्यायानन्तरं स्वेच्छया कुशाग्रहणस्तुत्युपगानवदेव मोक्ष उपासनादिः[2]। "ब्रह्मविदाप्नोति परम्" इति मोक्षवाक्यशेषत्वादितरेषाम्। तच्चोक्तम्— "एतत् साम गायन्नास्ते" इत्यादि। ब्रह्मतर्के च—

"मुक्ता अपि हि कुर्वन्ति स्वेच्छयोपासनं हरेः। नियमानन्तरं विप्राः कुशाद्यैरप्यधीयते" इति। "कृष्णो मुक्तैरिज्यते वीतमोहैः" इति च भारते ॥*॥

॥ साम्पराये तर्तव्याभावात् तथा ह्यन्ये ॥२८॥

स्वेच्छयेत्यङ्गीकर्तव्यम्। मुक्तस्य तीर्णत्वात्।

"तीर्णो हि तदा सर्वाञ्छोकान् हृदयस्य भवति" इति ह्यन्ये पठन्ति।

वायुप्रोक्ते च —

"स्थितप्रज्ञत्वमाप्ता ये ज्ञानेन परमात्मनः। ब्रह्मलोकं गताः सर्वे ब्रह्मणा च परं गताः। तीर्णतर्तव्यभागाश्च स्वेच्छयोपासते परम्" इति ॥*॥

॥*॥ इति चतुर्दशमधिकरणम्[3] ॥*॥

कर्मापि कुर्वन्ति नवेति? आह[4]—

॥ छन्दत उभयाविरोधात् ॥२९॥

स्वेच्छया कुर्वन्ति नवा। बन्धप्रत्यवाययोरभावात् ॥*॥

॥ गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥३०॥

बन्धप्रत्यवायाभावे हि मोक्षस्यार्थवत्त्वम्। अन्यथा मोक्षत्वमेव न स्यात्।

कदाचित् कर्म कुर्वन्ति कदाचिन्नैव कुर्वते। नित्यज्ञानस्वरूपत्वान्नित्यं ध्यायन्ति केशवम्। तीर्णतर्तव्यभागा ये प्राप्तानन्दाः परात्मनः। प्रत्यवायस्य बन्धस्याप्यभावात् स्वेच्छया भवेत्" इति हि ब्रह्माण्डे[5] ॥*॥

॥ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥३१॥

उपपन्नश्चैवम्भावः। प्राप्तत्वात् तल्लक्षणस्य फलस्य। यथा लोके विध्यर्थत्वेन विष्णुक्रमणादिकं कृत्वा समाप्तकर्मेच्छया करोति न करोति च ॥*॥

॥*॥ इति पञ्चदशमधिकरणम्[6] ॥*॥

॥ अनियमः सर्वेषामविरोधाच्छब्दानुमानाभ्याम् ॥३२॥

प्राप्तज्ञानानामपि केषाञ्चिन्मुक्तिप्राप्तिः, केषाञ्चिन्न, यथोपसंहारनियम इति न मन्तव्यम्।

"सर्वे गुणा ब्रह्मणैव ह्युपास्या नान्यैर्देवैः किमु सर्वैर्मनुष्यैः" इत्युपसंहारविरोधादत्रा-

---

१ "ब्रवीति" २ "उपासनादि" इति प्र. पाठौ। ३ प्र. पाठेऽत्र सप्तदशमधिकरणम्। ४ "नवेत्यत आह" ५ "इति ब्रह्माण्डे" इति प्र. पाठौ ६ प्र. पाठेऽत्राष्टादशमधिकरणम्।

भाष्यम्

विरोधात्[1]। "न कश्चित् ब्रह्मवित् सृतिमनुभवति मुक्तो ह्येव भवति तस्मादाहुः सृतिहेति" इति कौण्डिन्यश्रुतेश्च।

यथा केषाञ्चिन्मोक्ष एवमन्येषामित्यनुमानाच्च ॥*॥

॥*॥ इति षोडशमधिकरणम्[2] ॥*॥

## ॥ यावदधिकारमवस्थितिराधिकारिकाणाम् ॥३३॥

यथा यथाऽधिकारो विशिष्यत एवं मुक्तावानन्दो विशिष्यते।

"मनुष्येभ्यो गन्धर्वाणां गन्धर्वेभ्य ऋषीणामृषिभ्यो देवानां देवेभ्य इन्द्रस्येन्द्राद् रुद्रस्य रुद्राद् ब्रह्मण एष ह्येव शतानन्दः" इति हि चतुर्वेदशिखायाम्[3]।

अध्यात्मे च—

"ज्ञानं चोपासनं चैव मुक्तावानन्द एव च। यथाधिकारं देवानां भवन्त्येवोत्तरोत्तरम्" इति ॥*॥

## ॥ अक्षरधियां त्वविरोधः सामान्यतद्भावाभ्यामौपसदवत् तदुक्तम् ॥३४॥

नचासमत्वेन विरोधो भवति। ब्रह्मधीत्वाद् दोषाभावसाम्यादुत्तमेभ्योऽन्येषां भावाच्च। औपसदवत् शिष्यवत्। उक्तं च तुरश्रुतौ—

"नानाविधा देवसङ्घा[4] विमुक्तौ नचैव तेषां ब्रह्मधियां विरोधः। दोषाभावाद् गुरुशिष्यादिभावाल्लोकेऽपि नासौ किमु तेषां विमुक्तेः" इति ॥*॥

॥*॥ इति सप्तदशमधिकरणम्[5] ॥*॥

## ॥ इयदामननात् ॥३५॥

नामाद्यारभ्य प्राणान्तमुत्तरोत्तरोत्तमत्वमुक्तम्। न प्राणात् किञ्चिद् भूय उक्तम्। तथाऽपि पूर्ववत् स्यादपीति[6] न वाच्यम्।

"प्राणो वाव सर्वेभ्यो भूयान् नहि प्राणाद् भूयान् प्राणो ह्येव भूयांस्तस्माद् भूयान् नाम" इति कौण्ठरव्यश्रुतेः ॥*॥

## ॥ अन्तरा भूतग्रामवदिति चेत् तदुक्तम् ॥३६॥

यथा भूतग्राम एकस्मादेक उत्तमोऽस्त्येव, एवं प्राणादपि परमात्मानमन्तरा विद्यत इति चेत्, न। प्राणादुत्तमाभावे प्रमाणमुक्तम्। अन्यत्रोत्तमाभावे न प्रमाणम्। दृश्यते चान्यत्रोत्तमत्वम् ॥*॥

## ॥ अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् ॥३७॥

प्राणस्य सर्वोत्तमत्वे परमात्मना भेदानुपपत्तिरिति चेत्, न। श्रुत्युपदिष्टवदुपपत्तेः। अन्येभ्यः प्राणस्योत्तमत्वं तस्मात् परमात्मनो ह्युपदिष्टम् ॥*॥[7]

---

१ "उपसंहारे विरोधादन्यत्राविरोधात्" इति प्र. पाठः। २ प्र. पाठेऽत्रैकोनविंशमधिकरणम्। ३ "इति चतुर्वेदशिखायाम्" ४ "जीवसङ्घाः" ५ प्र. पाठेऽत्र विंशमधिकरणम्। ६ "स्यादिति" इति प्र॰ पाठः। ७ प्र. पाठेऽत्रैकविंशमधिकरणम्।

भाष्यम्

नेति चेत्, न—

॥ व्यतिहारो विशिंषन्ति हीतरवत् ॥३८॥

उक्तं प्राणात् परमात्मन उत्तमत्वं पूर्वोक्ताध्याहारेण। "एष तु वा अतिवदति" इति विशिंषन्ति हि। यथेतरेषु विशेषणम्।

"उत्तमत्वं हि देवानां मुक्तावपि हि मानवात्। तेभ्यः प्राणस्य तस्माच्च नित्यमुक्तस्य वै हरेः" इति च बृहत्तन्त्रे[1] ॥*॥[2]

कृतिर्निष्ठा (वि)[3] ज्ञानमित्यादीनां भेदाद् बहव उत्तमा इति चेत्, न—

॥ सैव हि सत्यादयः ॥३९॥

सत्यादिगुणास्तस्या एव परदेवतायाः स्वरूपभूताः। ब्रह्मतर्के च—

"नामादिप्राणपर्यन्ताद् योऽधि[4] सत्यादिरूपवान्। तस्मै नमो भगवते विष्णवे सर्वजिष्णवे" इति। "सत्याद्या अहमात्मान्ता यद्गुणाः समुदीरिताः। तस्मै नमो भगवते यस्मादेव विमुच्यते" इति चाध्यात्मे ॥*॥

॥*॥ इत्यष्टादशमधिकरणम्[5] ॥*॥

प्रकृतेरपि जन्मादेः संसारप्राप्तेः किमिति नामादिष्वपाठ इत्यत्रोच्यते—

॥ कामादितरत्र तत्र चाऽयतनादिभ्यः ॥४०॥

स्वेच्छयैव मूलस्थाने स्थिताऽन्यत्र चावतारान्[6] करोतीश्वरेच्छानुसारेण।

"सर्वायतना सर्वकाला सर्वेच्छा न बद्धा बन्धका[7] सैषा प्रकृतिरविकृतिः" इति वत्सश्रुतेः।

"नामादयस्तु बद्धत्वान्मोचकत्वात् परोऽपि च। उभयोरप्यभावेन यथाऽव्यक्तं नतूदितम्। श्रुतौ तथा जीवपरावुच्येते किञ्चनेतरत्। नोच्यते च तदा तत्त्वद्वयं वै समुदाहृतम्" इति ब्रह्मतर्के[8] ॥*॥

॥ आदरादलोपः ॥४१॥

अबद्धत्वेऽपि भक्तिविशेषादेवोपासनाद्यलोपस्तस्या भवति।

"यथाश्रीर्नित्यमुक्ताऽपि प्राप्तकामाऽपि सर्वदा। उपास्ते नित्यशो विष्णुमेवं भक्तो हरेर्भवेत्" इति हि बृहत्तन्त्रे ॥*॥

॥ उपस्थितेस्तद्वचनात् ॥४२॥

अनादिकालभगवत्सम्बन्धित्वाद्[9] युज्यते च नित्यमुक्तत्वम्[10]।

"द्वावेतावनादिनित्यावनादियुक्तौ नित्ययुक्तावनादिकृतौ[11] नित्यकृतौ योऽयं परमो या

---

१ "इति बृहत्तन्त्रे" इति प्र. पाठः। २ प्र पाठेऽत्र द्वाविंशमधिकरणम्। ३ प्राचीनकोशेषु विज्ञानमिति स्थाने ज्ञानमित्येव पठ्यते। ४ "यो हि" इति प्र- पाठः। ५ प्र. पाठेऽत्र त्रयोविंशमधिकरणम्। ६ "अन्यत्रावतारान्" ७ "सर्वेच्छा सर्वज्ञा न बद्धा बन्धिका" ८ "इति बृहत्तन्त्रे" ९ "अनादिकाले भगवत्सम्बन्धित्वात्" १० "नित्यमुक्तत्वं तस्याः" ११ "नित्यमुक्तौ" इति प्र. पाठः।

भाष्यम्

च प्रकृती रमते ह्यस्यां परमो रमते ह्यस्मिन् प्रकृतिः स्वस्मिन् हि रमते परमो न स्वस्मिन् प्रकृतिरत एनमाहुः परम इति" इति गौपवनश्रुतिवचनात् ॥*॥

॥*॥ इत्येकोनविं[1]शमधिकरणम् ॥*॥

दर्शनार्थं ह्युपासनम्। तच्च श्रवणादेरेव भवति। अतः किमर्थमित्यत्रोच्यते—

॥ तन्निर्धारणार्थनियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥४३॥

तत्त्वनिश्चयो वेदार्थनियमश्च ब्रह्मदृष्टेः पृथगेव। हिशब्देन—"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति श्रुतिं सूचयति। श्रवणादिफलं चाज्ञानविपर्ययादिदर्शनप्रतिबन्धनिवृत्तिः। ब्रह्मतर्के च—

"श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ। संशयं च पराणुद्य लभते ब्रह्मदर्शनम्" इति ॥*॥

॥*॥ इति विंश[2]मधिकरणम् ॥*॥

॥ प्रदानवदेव[3] तदुक्तम् ॥४४॥

नच श्रवणादिमात्रेण [4]दृष्टिर्भवति। किन्तु सेतिकर्तव्येन। यथा गुरुदत्तं तथैव भवति। "आचार्यवान् पुरुषो वेद" इति ह्युक्तम् ॥*॥

॥*॥ इत्येकविंश[5]मधिकरणम् ॥*॥

गुरुप्रसादः स्वप्रयत्नो वा बलवानिति निगद्यते—

॥ लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि ॥४५॥

ऋषभादिभ्यो विद्यां ज्ञात्वाऽपि सत्यकामेन "भगवांस्त्वेव मे कामे ब्रूयाच्छ्रुतं ह्येव मे भगवद्दृशेभ्य आचार्याद्धैव[6] विद्या विदिता साधिष्ठं प्रापति" इति वचनात्, "अत्र ह न किञ्चन वीयाय" इत्यनुज्ञानादुपकोसलवचनाच्च लिङ्गभूयस्त्वाद् गुरुप्रदानमेव बलवत्[7]। तर्हि तावताऽलमिति च न मन्तव्यम्[8]। "श्रोतव्यो मन्तव्यः" इत्यादेस्तदपि कर्तव्यम्। वाराहे च—

"गुरुप्रसादो बलवान् न तस्माद् बलवत्तरम्। तथाऽपि श्रवणादिश्च कर्तव्यो मोक्षसिद्धये" इति ॥*॥[9]

॥ पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत् ॥४६॥

नच पूर्वप्राप्त एव गुरुरिति नियमः। समग्रानुग्रहं चेत् पश्चात्तनः प्र[10]करोति स्वयमेव तदा विकल्पः स्यात्। मानसक्रियावत्, यथोभयोर्ध्यानयोः समयोः।

"पूर्वस्मादुत्तमो लब्धः स्वयमेव गुरुर्यदि। गृह्णीयादविचारेण विकल्पः समयोर्भवेत्।

---

१ प्र. पाठेऽत्र चतुर्विंशमधिकरणम्। २ प्र. पाठेऽत्र पञ्चविंशमधिकरणम्। ३"प्रदानवदेव हि" इति प्र.सूत्रपाठः। ४ "ब्रह्मदृष्टिर्भवति" इति प्र. पाठः। ५ प्र. पाठेऽत्र षड्विंशमधिकरणम्। ६ "आचार्याद्ध्येव" ७ "गुरुप्रसाद एव बलवान्" ८ "इति न मन्तव्यम्" इति प्र. पाठाः। ९ प्र.पाठेऽत्र सप्तविंशमधिकरणम्। १० "पश्चात्तनः करोति" इति प्र· पाठः।

भाष्यम्

समग्रानुग्रहाभावात् सत्यकामः स्वकं गुरुम्। ऋषभाद्यनुज्ञया चैव प्राप तस्माद्धि युज्यते" इति हि बृहत्तन्त्रे[1]। "समग्रानुग्रहं कश्चित् स्वयमेव समो यदि। कुर्यात् पुनश्च गृह्णीयादविरोधेन कामतः। ध्यानयोः समयोर्यद्वद् विकल्पः कामतो भवेत्। एवं गुरोर्द्वितीयस्य विकल्पो ग्रहणेऽपिच" इति महासंहितायाम् ॥*॥

॥ अतिदेशाच्च ॥४७॥

"ब्रह्मोपास्व ब्रह्मोपचरस्व तच्छृणुहि तत् त्वामवतु यथा ब्रह्मोपचरेर्यथा मामुपचरेर्यैं चान्येऽस्मद्विधाः श्रेयसश्च तानुपास्व तानुपचरस्व तेभ्यः शृणुहि ते त्वामवन्तु" इति पौष्यायणश्रुतावतिदेशाच्च ॥*॥

॥*॥ इति द्वाविंशमधिकरणम्[2] ॥*॥

नच "कर्मणैव हि संसिद्धिमास्थिता जनकादयः" इत्यादिनाऽन्यन्मोक्षसाधनम्—

॥ विद्यैव तु निर्धारणात् ॥४८॥

"तमेवं[3] विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय[4]" इति निर्धारणाद् विद्ययैव मोक्षः ॥*॥

॥ दर्शनाच्च ॥४९॥

न केवलविद्यया[5]; किन्तु ? अपरोक्षज्ञानेनैव च[6]।

"सर्वान् परो माययाऽयं सिनीते दृष्ट्वैव तं मुच्यते नापरेण" इति कौशिकश्रुतेः ॥*॥[7]

॥ श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥५०॥

सावधारणा बलवती श्रुतिः।

"इन्द्रोऽश्वमेधाञ्छतमिष्ट्वाऽपि राजा ब्रह्माणमीड्यं समुवाचोपसन्नः। न कर्मभिर्न धनैर्नैव चान्यैः पश्ये[8] सुखं तेन तत्त्वं ब्रवीहि" इति बलवल्लिङ्गम्। "नास्त्यकृतः कृतेन" इत्युपपत्तिश्च। "कर्मणा बद्ध्यते जन्तुर्विद्यया च विमुच्यते। तस्मात् कर्म न कुर्वन्ति यतयः पारदर्शिनः" इति युक्तिमद् भगवद्वचनम्।

अतो न प्रमाणान्तरबाधः। "कर्मणैव" इत्ययोगव्यवच्छेदः[9] ॥*॥

॥*॥ इति त्रयोविंशमधिकरणम्[10] ॥*॥

॥ अनुबन्धादिभ्यः ॥५१॥

न केवलं श्रवणादिभिर्गुरुप्रसादेन च ब्रह्मदर्शनम्। किन्तु ? भक्त्यादिभिश्च।

---

१ "इति बृहत्तन्त्रे" इति प्र. पाठः। २ प्र.पाठेऽत्राष्टाविंशमधिकरणम्। ३ "तमेवम्" ४ "विद्यते अयनाय" ५ "न केवलं विद्यया" ६ "ज्ञानेन च" इति प्र. पाठाः। ७ प्र. पाठेऽत्रैकोनत्रिंशमधिकरणम्। ८ "पश्येत्" इति प्र.पा. ९ यद्यपि प्राचीनकोशेषु "कर्मणेत्ययोगव्यवच्छेदः" इति पठ्यते। किन्त्वर्थस्वारस्याय चैवकारसहित एव पाठो युक्तः। हृषीकेशतीर्थीये तु गलितम्। तत्त्वदीपिकायां चायमेव पाठः समादृत इति कोशेषु स्खलनं सम्भाव्यते। १० प्र. पाठेऽत्र त्रिंशमधिकरणम्।

भाष्यम्

"सर्वलक्षणसम्पन्नः सर्वज्ञो विष्णुतत्परः। यद् गुरुः सुप्रसन्नः सन् दद्यात् तन्नान्यथा भवेत्। तथाऽप्यनादिसंसिद्धो[1] भक्त्यादिगुणपूगतः। लभेद् गुरुप्रसादं च तस्मादेव च तद् भवेत्" इति। "भक्तिर्विष्णौ गुरौ चैव गुरोर्नित्यप्रसन्नताम्। दद्याच्छमदमादिं[2] च तेन चैते गुणाः पुनः। तैः सर्वैर्दर्शनं विष्णोः श्रवणादिकृतं भवेत्" इति च नारायणतन्त्रे ॥*॥

॥*॥ इति चतुर्विंशमधिकरणम्[3] ॥*॥

अनुव्याख्यानम्

विषयेषु च संसर्गाच्छाश्वतस्य च संशयात्। मनसा चान्यदाकाङ्क्षात् परं न प्रतिपद्यते॥९३॥ इति भारतवाक्यं हि तेनैतद्दोषवर्जितः। सदोपासनया युक्तो वासुदेवं प्रपश्यति॥९४॥ दोषा अनादिसम्बद्धास्ते मुक्तिपरिपन्थिनः। सन्त्येव प्रायशः पुंसु तेन मोक्षो न जायते॥९५॥ सर्वे त एते जीवेषु दृश्यन्ते तारतम्यतः। ऋजूनामेक एवास्ति परमोत्साहवर्जनम्। स गुणाल्पत्वमात्रत्वान्नर्जुत्वेन विरुद्ध्यते॥९६॥ अतो विष्णौ परा भक्तिस्तद्भक्तेषु रमादिषु। तारतम्येन कर्तव्या पुरुषार्थमभीप्सता॥९७॥ स्वादरः सर्वजन्तूनां संसिद्धो हि स्वभावतः। ततोऽधिकः स्वोत्तमेषु तदाधिक्यानुसारतः॥९८॥ कर्तव्यो वासुदेवान्तं सर्वथा शुभमिच्छता। न कदाचित् त्यजेत् तं च क्रमेणैनं विवर्धयेत्॥९९॥ समेषु स्वात्मवत् स्नेहः सत्स्वन्यत्र ततो दया। कार्यैवमापरोक्ष्येण दृश्यते क्षिप्रमीश्वरः॥१००॥ तत् तमोऽन्धं व्रजेद् विष्णुसमत्वं योऽनुपश्यति। रमाब्रह्मशिवादीनामपि मुक्तौ कथञ्चन॥१०१॥ किमुताऽधिक्यं[4] दृष्टेस्तद्-गुणाभावमतेरपि। दोषवेत्तुरभेदस्य द्रष्टुर्द्रष्टुस्तथोभयोः॥१०२॥ इत्याह सच्छ्रुतिस्तेन सम्प्रोक्तगुणसंयुतम्[5]। उपासीत हरिं दृष्ट्वा मुक्तिस्तेनैव जायते॥१०३॥ द्वेषाद् यन्मुक्तिकथनं श्रुतिवाक्यविरोधि तत्। रिपवो ये तु रामस्य विमुखत्वान्निरामिणः। अभिद्रोहपदे नित्यमन्धे तमसि ते स्थिताः॥१०४॥ हरिद्विषस्तमो यान्ति ये चैव तद्भेदिनः। तन्निर्गुणत्ववेत्तारस्तस्य दोषविदोऽपि च॥१०५॥ इत्यादिश्रुतिसन्दर्भाद् द्वेषिणस्तम ईयते। हिरण्यकशिपुश्चापि भगवन्निन्दया तमः। विविक्षुरत्यगात् सूनोः प्रह्लादस्यानुभावतः॥ १०६ ॥ यदनिन्दत् पिता मह्यं त्वद्भक्ते मयि चाघवान्। तस्मात् पिता मे पूयेत दुरन्ताद् दुस्तरादघात्॥१०७॥ निन्दां भगवतः शृण्वंस्तत्परस्य जनस्य वा। ततो नापैति यः सोऽपि यात्यधः सुकृताच्च्युतः॥१०८॥ अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्। परं भावमजानन्तो मम भूतमहेश्वरम्॥१०९॥ मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः। राक्षसीमासुरीं चैव प्रकृतिं मोहनीं[6] श्रिताः॥११०॥ मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः। तानहं द्विषतः क्रूरान् संसारेषु नराधमान्। क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु॥१११॥ आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि। मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्॥११२॥

---

१ "अनादिसंसिद्धभक्त्यादि—" इति प्र॰ पाठः। २ "शमदमादींश्च" इति प्र.पाठः। क्वचित् "शमदमादिश्च" इति। ३ प्र. पाठेऽत्रैकत्रिंशमधिकरणम्। ४ "दृष्टेस्तु" ५ "सम्प्रोक्तगुणसंयुतः" ६ "मोहिनीम्" इति प्र. पाठः।

अनुव्याख्यानम्

यो द्विष्याद् विबुधश्रेष्ठं देवं नारायणं प्रभुम् । कथं स न भवेद् द्वेष्य आलोकान्तस्य[1] कस्य-चित् ॥११३॥ यो द्विष्याद् विबुधश्रेष्ठं देवं नारायणं प्रभुम् । मज्जन्ति पितरस्तस्य नरके शाश्वतीः समाः । इत्यादिवाक्यसन्दोहाद् द्वेषिणस्तम एव तु ॥११३॥*॥ नैव मोक्ष इति प्राहुर्लोकायतमते स्थिताः । भोगः शरीरपर्यन्तं भस्मीभावस्ततो भवेत् ॥११५॥ इति तत् केन मानेन दृष्टं प्रत्यक्षवादिना । नहि प्रत्यक्षमानेन मोक्षाभावोऽवसीयते ॥११६॥ घटते मुक्तिदृष्टिस्तु पुरुषेण महीयसा । नेति वक्तुर्महत्त्वं तु कथञ्चन न विद्यते ॥११७॥ साधयन् सर्वसामान्यं कथमेव विशेषवान् । दृश्यन्ते पुरुषा लोके परावरविदोऽपिच[2] ॥११८॥ अपरोक्ष-दृशो योगनिष्ठाश्चामलचक्षुषः । प्रत्यक्षं देवतां दृष्ट्वा[3] तत्प्रसादात्तभूतयः ॥११९॥ ज्ञानविज्ञानपा-रज्ञा निषिद्ध्यन्ते कथं नृभिः । दृश्यते चातिमाहात्म्यं तेषामतिमहौजसाम् ॥१२०॥ यदि तेऽपि निषिद्ध्यन्ते किं नोक्तिस्ते निषिद्ध्यते । यदुक्तवाक्यप्रामाण्यं प्रत्यक्षेणोपलभ्यते ॥१२१॥ वरादयोऽपि तद्दत्ताः सदा सत्या भवन्ति हि । अप्रामाण्यं तदुक्तेश्च वृथावाचाऽसीयते ॥१२२॥ नहि प्रयोजनं किञ्चित् परलोकनिवारणात् । वृथावाचं वृथा हन्याद् यदि तस्य किमुत्तरम् । स्वजीवनविरोधाय वदन् किं नाम बुद्धिमान् ॥१२३॥ प्रामाण्ये संशयः किं स्यात् तयोः पुरुषयोरपि । स्वजीवनविरुद्धोक्तिरज्ञो दृष्टस्य चापि यः ॥१२४॥ यश्चातीन्द्रियदेवोक्तिश्रोता दृष्टपरावरः । अतीतानागतं सर्वं लोकानुभवमापयन् । अतः प्रत्यक्षगम्यत्वाद् वेदमात्वस्य च स्फुटम् ॥१२५॥ यद्यागमस्य नो मात्वमक्षजस्य तथा भवेत् । यद्यक्षजस्य मात्वं स्यादागमस्य कथं न तत् । लोकवाक्याद् विशेषश्चाव्यभिचारेर्ण[4] सिद्ध्यति ॥१२६॥ अस्ति मोक्षोऽपि धर्मेण यथार्थज्ञानतोऽपि च । प्रामाण्यमनुमायाश्च जिनस्याऽतत्वसाधने ॥१२७॥ तद्वाक्याद् धर्मसज्ज्ञानविज्ञप्तिर्भवतीति च । धर्मोऽहिंसापरो नान्यो ज्ञानं पुद्गलदर्शनम् ॥१२८॥ इति जैनाः कथं तत् स्यात् प्रमाणमनुमानतः । विषयान् प्रति स्थितं ह्यक्षं प्रत्यक्षमिति गीयते । प्रत्यक्षशब्दानुसारादनुमेति प्रकीर्तिता ॥१२९॥ आ समन्ताद् गमयति धर्माधर्मौ परं पदम् । यच्चाप्यतीन्द्रियं त्वन्यत् तेनासावागमः स्मृतः ॥१३०॥ एतेन कारणेनैव तत्तन्मानत्वमिष्यते । स्वरूपं हि तदेतेषामन्यथाऽसिद्धिमानतः ॥१३१॥ अतोऽनुमा कथं धर्मं पुद्गलं चापि दर्शयेत् । स्वरूपे पुद्गलस्योक्ता[5] दोषा आनन्दमेव च । न मन्यते पुद्गलं[6] स दुःखाभावः सुखं त्विति ॥

---

१ अत्र नयचन्द्रिका—"आलोकान्तस्य अल्पजनाधमस्य । आङ ईषदर्थेऽपि वर्तमानत्वात् । अति-प्राकृतस्यापीत्यर्थः" इत्यर्थः । २ "परापरविदोऽपिच" इति प्र. पाठः । ३ "देवता दृष्ट्वा" इति क्वचित् पठ्यते । ४ प्राचीनकोशे "व्यभिचारेण" इति पठ्यते । स्खलनमपि स्यात् । अथवैवं व्याख्येयम्—लोकवाक्या-दस्य विशेषश्च लोकवाक्यस्य व्यभिचारदर्शनेनास्य तदभावेनैव सिद्ध्यतीति । ५-६ अत्र सुधायां पुद्गलस्यापुद्गलस्येति पुद्गलमपुद्गलमितिचाकारप्रश्लेषेण द्वेधा च्छेदः कृतः । प्राचीनटीकासु पुद्गलस्य पुद्गलमित्येव । यद्यपि पुद्गलास्तिकाय इति भूतचतुष्टयसङ्घात एवोच्यते परमाणुवर्जमिति जैना मन्यते । तेन पुद्गल इति देह एव भवेन्न जीवः । तथाऽपि यद्वर्जं[1] यस्य जैनैरर्थ उक्तस्तस्य तस्मिन्नेवार्थे "पुद्गलाः परमाणवः" इति पुराणादिवचनदर्शनात् परमवैदिको भगव-त्पादोऽपि देहपरिमाणत्वाभावं जीवस्य द्योतयन्नणुवाचकं पुद्गलपदं परसिद्धान्तप्रतीपतया जीवे प्रायुङ्क्तेत्यपि सुवचम् ।

अनुव्याख्यानम्

॥१३२॥ मात्राभोगातिरेकेण सुखाधिक्यस्य दर्शनात्। सुखस्याभावता केन नच स्यात् किं विपर्ययः॥१३३॥ यदि भावोऽपि कश्चित् स्यात् तस्यैवाभावता कुतः। यदि सर्वेऽप्यभावाः स्युरन्योन्यमिति भावता॥१३४॥ अभावाभावता यत् स्यात्[1] किं नहिच्छन्नं तदा भवेत्। भावत्वं विधिरूपत्वं निषेधत्वमभावता॥१३५॥ निषेधस्य निषेधोऽपि भाव एव बलाद् भवेत्। प्रथमप्रतिपत्तिस्तु भावाभावनियामिका॥१३६॥ नच पुद्गलविज्ञानं मोक्षदं भवति क्वचित्। अस्वातन्त्र्यात् पुद्गलस्य ज्ञातोऽपि सुखदो नहि॥१३७॥ नहि दुःखिपरिज्ञानाद् दुःखित्वं विनिवर्तते। यदि पुद्गलविज्ञानाददुःखी स्यात् कथञ्चन। देहवानपि नादुःखी किं ज्ञानादुत्तरं सदा॥१३८॥ ईशकॢप्त्यनुसारेण स्यात् कालादीशवादिनः। कर्महेतुत्वमपि तु निश्चैतन्यान्नहि क्वचित्॥१३९॥ अशेषदुःखविलये नेदानीं कारणं यथा। तथोत्तरं च नैव स्याद्[2] दृष्टिपूर्वाऽनुमा यतः॥१४०॥ शक्तस्यान्यस्य विज्ञानं तत्प्रीतिजनकं यदि। तयैव बन्धहानिः स्यादिति किं नाम दूषणम्॥१४१॥ स्वज्ञानाद् बन्धहानिस्तु दृश्यते कस्य कुत्रचित्। अहिंसायाश्च धर्मत्वं केन मानेन गम्यते। हिंसाया एव धर्मत्वमित्युक्ते स्यात् किमुत्तरम्॥ ॥१४२॥ धर्मस्य सुखहेतुत्वमपि केनावगम्यते। हत्याया मोक्षहेतुत्वं कुतो मानान्निवार्यते॥ ॥१४३॥ नच शून्यपरिज्ञानाच्छून्यभावनयाऽपि च। मोक्षः कथञ्चन भवेद् यदीदानीं कथं न सः॥१४४॥ परप्रसादनेच्छोस्तु विळम्बो[3] नाम युज्यते। पुमिच्छाधीनता नो चेद् विळम्बः[4] किङ्कृतो भवेत्॥१४५॥ अन्यत्रापि विळम्बास्तु[5] स्युरीशेच्छानिमित्ततः। अन्यथा कारणं चेत् स्यात् किं कार्यं नोपजायते। कारणे सति कार्यस्य भावः सुनियतोऽस्य हि॥१४६॥ विज्ञानवादिनश्चैव विज्ञानाद्वैतवेदनात्। विज्ञानभावनाच्चैव मोक्षो न घटते क्वचित्॥१४७॥ अन्तर्ज्ञानस्य बाह्ये च क्षणिकत्वस्य वेदनात्। भावनाच्चोक्तमार्गेण मानाभावान्न मुच्यते॥१४८॥ प्रकृतेः पुरुषस्यापि विवेको मुक्तिसाधनम्। इति साङ्ख्या नचैतस्मिन् मानमीशाप्रसादतः॥ ॥१४९॥ श्रुतयः स्मृतयश्चैव यदीशस्य[6] प्रसादतः। वदन्ति नियमान्मुक्तिं तमृतेऽतः कुतो भवेत्॥१५०॥ कणादयोगाक्षपादा अपीशस्य प्रसादतः। मुक्तिं ब्रुवाणा अप्याहुर्भोगादेव च कर्मणाम्। क्षयं प्राहुः कुतश्चैतत् प्रसन्ने जगदीश्वरे॥१५१॥ भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥१५२॥ भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि दृष्ट एवाऽऽत्मनीश्वरे। इति श्रुतिपुराणादिवचनेभ्योऽन्यथागतेः॥१५३॥ नच पाशुपताद्युक्तशिवादीनामनुग्रहात्। नान्यः पन्था इति ह्युक्तं पुरुषज्ञानतः श्रुतौ॥१५४॥ सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि। एवं पुरुषशब्दश्च प्रयुक्तोऽभिधशये हरौ॥१५५॥ न तस्येशे कश्चन तस्य नाम महद् यशः। इति चाधिपतिस्तस्य प्रतिषिद्धः स्वयं श्रुतौ॥१५६॥ विश्वतः परमां नित्यं विश्वं नारायणं हरिम्। इति सर्वाधिकत्वोक्त्या समोऽपि विनिवारितः। समाधिकस्य राहित्यान्नोपचारपुमानसौ॥१५७॥ पुरुष

---

१ "अभावाभावतैव स्यात्" २ "नचैव स्यात्" ३-४ "विलम्बः" ५"विलम्बास्तु" इति प्र. पाठाः।
६ "यदेशस्य" इति प्र.पाठः। प्राचीनपाठे यत् ईशस्य इति च्छेदः। नतु यदीति।

अनुव्याख्यानम्

एवेदं सर्वं यद् भूतं यच्च भव्यं। उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥१५८॥ मुक्तामुक्तपरेशत्वमिति तस्याऽह ·सा श्रुतिः। अमृतेशानवचनात् सर्वस्येशानतोदिता ॥१५९॥ यदि सर्वत्वमुदितमुतेश इति तद् वृथा। उतशब्दो वदेदेष हीशत्वस्य समुच्चयम् ॥१६०॥ पुरुषेणेदं व्याप्तमिति ब्राह्मणं चाऽह तं प्रति। एतावानस्य महिमेति महिम्नो वचो हि तत् ॥ ॥१६१॥ सोऽमृतस्याभयस्येशो मर्त्यमन्नं यदत्यगात्। इत्यमुक्ताधिपत्यं तु पूर्वार्धोक्तमनूद्य च ॥१६२॥ उतामृतस्येश इति विधत्ते मुक्तिगेशताम्। अतो विष्णुपरिज्ञानादेव मुक्तिर्नचान्यतः। तद् यथेति श्रुतेश्चैव ततः कर्मक्षयो भवेत् ॥१६३॥ यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन। ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा ॥१६४॥ सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज। अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः। इत्यादिभगवद्वाक्यैरुक्तार्थश्चावसीयते ॥१६५॥ नित्यनैमित्तिकं कर्म कुर्वन्नन्यत् परित्यजन्। मुच्यते संसृतेश्चैतदप्येतेन निराकृतम्। विद्यैवेतीममेवार्थं स्वयमेवाऽह वेदराट् ॥१६६॥ विना कर्म न मोक्षः स्याज्ज्ञानेनेत्यपि सा श्रुतिः। नान्यः पन्था इति ह्येव निवारयति सादरम् ॥१६७॥ अन्यथोपासनमपि तमेवमितिवादिनी। निवारयत्यादरेण न प्रतीक इति प्रभुः ॥१६८॥ अन्धं तमः प्रविशन्ति येऽविद्यामुपासते[2]। इति श्रुतिविरोधाच्च नान्यथोपासनं भवेत् ॥१६९॥ नचाप्येकत्वविज्ञानादुक्तन्यायेन मुच्यते। इति सर्वं प्रविज्ञाय सर्वैस्तर्कसदागमैः[3]। उपासीत हरिं नित्यं गुणैरेव स्वयोग्यतः ॥१७०॥ ब्रह्मा सर्वैर्गुणैश्चैव[4] क्रियासामान्यतश्च गीः। गुणसामान्यतो रुद्रो द्रव्यसामान्यतः परे ॥१७१॥*॥ अधिकारविशेषेण भक्तिज्ञानसुखादिभिः। विशेषो देवतादीनां मोक्षे चैव विशेषतः ॥१७२॥ न तावता विरोधोऽस्ति निर्दोषत्वात् समस्तशः। आभासत्वात् परेषां तदवराणां च सर्वशः ॥१७३॥ यतोऽवराणां सर्वेऽपि गुणाः सर्वाः क्रिया अपि। नियमेनैव पूर्वेषां सुप्रसादनिबन्धनाः। अतः सच्छिष्यवत् तेषां नैवेर्ष्यादिः कथञ्चन ॥१७४॥ नच संसारिदेवानां[5] कालेयत्तापरे इमे। सूत्रे ह्यारब्धमात्रस्य भोगेनैव क्षयो ध्रुवः ॥१७५॥ अनारब्धकार्ये भोगेन त्वितरे इति चोदितः। पौनरुक्त्येन तेनैते उक्तार्थे इति निश्चयः ॥१७६॥*॥ उषाः स्वाहा च पर्जन्यो मित्रोऽग्निर्वरुणो विधुः। प्रवहोऽनिरुद्ध इन्द्रोमे रुद्रो वाणी च मारुतः। उत्तरोत्तरतस्त्वेते गुणैः सर्वैश्च मुक्तिगाः॥१७७॥ सूर्यधर्मौ यथा सोमो मनुर्दक्षो बृहस्पतिः। शची रतिश्चानिरुद्धसमास्तारा च मित्रवत्॥१७८॥सोमवच्छतरूपा तु प्रसूतिर्वह्निवद् विराट्। पर्जन्यवद् वारुणी च तथा सञ्ज्ञा च रोहिणी॥१७९॥ धार्मी च मित्रवत्त्वेन प्रावही परिकीर्तिता। मित्रपर्जन्यमध्यस्थावश्विनौ विघ्नवित्तपौ ॥१८०॥ भृगुरग्निसमो मित्रतन्मध्ये ब्रह्मपुत्रकाः। वरुणाग्न्यन्तरा तत्र नारदः प्राय इन्द्रवत् ॥१८१॥ कामः सुपर्णी चोमावद् वीन्द्रो रुद्रवदीरितः। निर्ऋतिर्मित्रसदृशो[6] विश्वामित्रः कसूनुवत् ॥१८२॥ वैवस्वतो

---

१ "पुरुषेणैवेदम्" २ "ये त्वविद्यामुपासते" ३ "तर्कैः सदागमैः" ४ "सर्वगुणैश्चैव" इति प्र. पाठाः। ५ "संसारिजीवानाम्" इति क्वचित् पठ्यते। ६ "निर्ऋतिः" इति प्र. पाठः। निऋतिरिति च भवति। तथाचान्यत्रापि– "नासत्यौ निऋतिर्मरुद्गणयुताः" इत्यादि।

भाष्यम्

॥ प्रज्ञान्तरपृथक्त्ववद् दृष्टिश्च तदुक्तम् ॥५२॥

उपासनाभेदवद् दर्शनभेदः। तच्चोक्तं कमठश्रुतौ—

"अन्तर्दृष्टयो बहिर्दृष्टयोऽवतारदृष्टयः सर्वदृष्टय इति देवा वाव सर्वदृष्टयस्तेषु चोत्तरोत्तरमा ब्रह्मणोऽन्येषु तु यथायोगं[1] यथा ह्याचार्या आचक्षते" इति।

अध्यात्मे च—

"दृष्ट्यैव ह्यवताराणां मुच्यन्ते केचिदञ्जसा। दर्शनेनाऽन्तरेणान्ये देवाः सर्वत्र दर्शनात्। तेषां विशेषमाचार्यो वेत्ति सर्वज्ञतां गतः" इति ॥*॥[2]

॥ न सामान्यादप्युपलब्धेर्मृत्युवन्नहि लोकापत्तिः ॥५३॥

न सामान्यदर्शनमात्रेण मुक्तिः। यथा मृत्युमात्रात्। नहि लोकापत्तिमात्रं मुक्तिः।

"सामान्यदर्शनाल्लोका मुक्तिर्योग्यात्मदर्शनात्" इति हि नारायणतन्त्रे[3]। "मुच्यते नात्र सन्देहो दृष्ट्या तु स्वात्मयोग्यया" इति[4]। "दर्शनेनाऽत्मयोग्येन मुक्तिर्नान्येन केनचित्" इति चाध्यात्मे ॥*॥

॥*॥ इति पञ्चविंशमधिकरणम्[5] ॥*॥

"भक्तिरेवैनं नयति भक्तिरेवैनं दर्शयति भक्तिवशः पुरुषो भक्तिरेव भूयसी" इति माठरश्रुतेर्न परमात्मना दर्शनमिति चेत्, न। "तस्यैष आत्मा विशते ब्रह्मधाम" इति श्रुतेः।

कथं तर्ह्येषा श्रुतिः—

॥ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥५४॥

परमात्मैव भक्त्या दर्शनं प्राप्य मुक्तिं ददाति[6]। प्रधानसाधनत्वाद् भक्तिः करणत्वेनोच्यते।

अनुव्याख्यानम्

मनुश्चाश्विपश्चादन्ये ततोऽवराः। च्यवनोचथ्यवैन्याश्च शशबिन्दुश्च हैहयः। तद्वच्च विप्रराजन्यविशेषोऽत्रापि कश्चन ॥१८३॥ तद्वत् प्रियव्रतश्चापि तदन्याः शतदेवताः। पर्जन्यमित्रान्तराले[7] तदन्ये तु ततोऽवराः ॥१८४॥ एतेभ्योऽभ्यधिका श्रीस्तु सदा मुक्ता विशेषतः। तत्समो नास्ति परमो हरिरेव नचापरः ॥१८५॥ संहितायां बृहत्यां तु स्वयं भगवतोदितम्। तदेतदखिलं प्राण आहङ्कारिक एव च। इन्द्रादनन्तरो दृष्टिरपि योग्यानुसारतः ॥१८६॥*॥ सम्यग् गुरुप्रसादश्च मुख्यतो दृष्टिकारणम्। श्रवणादि च कर्तव्यं नान्यथा दर्शनं क्वचित् ॥ १८७॥ गुणाधिकं गुरुं प्राप्य तद्धीनं नाऽप्नुयात् क्वचित्। विपर्ययस्तु कर्तव्यः सर्वथा मुक्तिमिच्छता[8] ॥१८८॥ समे विकल्प एव स्यात् पूर्वानुज्ञा च सर्वथा। तदुत्तमगुरुप्राप्त्यै पूर्वानुज्ञा न मृग्यते ॥१८९॥ गुरुर्ब्रह्माऽखिलानां च विद्या चैव

---

१ "अन्येषु यथायोगम्" इति प्र. पाठः। २ प्र. पाठेऽत्र द्वात्रिंशाधिकरणपूर्तिः। ३ "इति नारायणतन्त्रे" ४ "इति च" इति प्र. पाठौ। ५ प्र पाठेऽत्र त्रयस्त्रिंशमधिकरणम्। ६ "ददातीति प्रधान—" इत्यादि प्र.पा. ७ "पर्जन्यमित्रान्तराले" ८ "शुभमिच्छता" इति प्र.पाठौ।

भाष्यम्

मायावैभवे च—

"भक्तिस्थः परमो विष्णुस्तयैवैनं वशं नयेत् । तयैव दर्शनं यातः प्रदद्यान्मुक्तिमेतया । स्नेहानुबन्धो यस्तस्मिन् बहुमानपुरस्सरः । भक्तिरित्युच्यते सैव करणं परमीशितुः[1]" इति । सर्वशब्दानां ब्रह्मणि प्रवृत्तेश्च ॥*॥

॥*॥ इति षड्विंशमधिकरणम्[2] ॥*॥

जीवांशानां पृथगुत्पत्तेर्नानादियोग्यतापेक्षेति न मन्तव्यम् । कुतः ?—

॥ एक आत्मनः शरीरे भावात् ॥५५॥

अंशांशिनोरेकत्वमेव । अंशिकर्मनिर्मितशरीर एवांशस्य भावात् ॥*॥

॥ व्यतिरेकस्तद्भावभावित्वान्नतूपलब्धिवत् ॥५६॥

ज्ञानादिभेदे विद्यमानेऽपि नांशांशिनोः पृथग्भाव एव । तदुपासनादिभोगादंशस्य । परमसंहितायां च—

"अंशिनस्तु पृथग् जाता अंशास्तस्यैव कर्मणा । पुनरैक्यं प्रपद्यन्ते नात्र कार्या विचारणा" इति ॥*॥

॥*॥ इति सप्तविंशमधिकरणम्[3] ॥*॥

॥ अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥५७॥

ब्रह्माद्यङ्गदेवतावबद्धोपासनादि प्रतिशाखं प्रतिवेदं च नोपसंह्रियते । हिशब्दात्—

"समत्वाद् वोत्तमत्वाद् वा नाङ्गदेवाद्युपासनम् । उपसंहार्यमित्याहुर्वेदसिद्धान्तवेदिनः" इति ब्रह्मतर्कवचनात् ॥*॥

॥*॥ इत्यष्टाविंशमधिकरणम्[4] ॥*॥

॥ मन्त्रादिवद् वाऽविरोधः ॥५८॥

अनुव्याख्यानम्

सरस्वती । देवता भगवान् विष्णुः सर्वेषामविशेषतः ॥१९०॥ तत्प्रसादेन मुक्तिः स्यान्नान्यथा तु कथञ्चन । स्वोत्तमास्तु क्रमेणैव सर्वेषां गुरवः श्रुताः[5] । उपदेशो ब्रह्मणस्तु सर्वेषामेव मुक्तये ॥१९१॥*॥ साधनेभ्योऽधिका भक्तिर्नैवान्यत् तादृशं क्वचित् । भक्तिश्चैव हरावेव मुख्याऽन्यत्र यथाक्रमम् ॥१९२॥ स्वाधिका[6] त्वेव सर्वत्र स्वोत्तमेषु क्रमेण च । अनुवर्तते च सा भक्तिर्मुक्तावानन्दरूपिणी । तत्पूर्वकोपासनैवं[7] कर्तव्या मुक्तये गुणैः ॥१९३॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीमद्ब्रह्मसूत्रानुव्याख्याने
— तृतीयाध्यायस्य तृतीयः पादः—

---

१ "परमेशितुः" इति प्र. पाठः । २ प्र. पाठेऽत्र चतुस्त्रिंशमधिकरणम् । ३ प्र. पाठेऽत्र पञ्चत्रिंशमधिकरणम् । ४ प्र. पाठेऽत्र नाधिकरणपूर्तिः । ५ "स्मृताः" ६ "स्वाधिकत्वेन" ७ "तत्पूर्विकोपासनैवम्" इति प्र. पाठाः ।

भाष्यम्

सर्वदेवतामन्त्रा यथाऽधीयन्ते, एवमविरोधो वा ।

"उपासनाऽङ्गदेवानां परमाङ्गतया भवेत् । उपसंहृतिर्विशेषे तु फलानामन्यथा नतु । पुरुषाणां विशेषाद् वा यथायोगं भविष्यति" इति च बृहत्तन्त्रे[१] ॥*॥

॥*॥ इत्येकोनत्रिंशमधिकरणम्[२] ॥*॥

## ॥ भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति ॥५९॥

सर्वगुणेषु भूमगुणस्य ज्यायस्त्वं क्रतुवत् सर्वत्र सहभावात्[३] ।

"भूमैव देवः परमो ह्युपास्यो नैवाभूमा फलमेषां विधत्ते । तस्माद् भूमा गुणतो वै विशिष्टो यथा क्रतुः कर्ममध्ये विशिष्टः" इति च गौपवनश्रुतिः[४] ॥*॥

॥*॥ इति त्रिंशमधिकरणम्[५] ॥*॥

## ॥ नाना शब्दादिभेदात् ॥६०॥

"शब्दोऽनुमा तथैवाक्षो योग्यताभेदतः सदा । ब्रह्मादीनामेकमर्थं बहुधा दर्शयन्ति हि । अतः पूर्णत्वमीशस्य नानैवैषां प्रदृश्यते । अतः फलस्य नानात्वं नानैवोपासनं यतः" इति हि ब्रह्मतर्के[६] ।

अतो भूमत्वमपि नानैवोपास्यते ॥*॥

॥*॥ इत्येकत्रिंशमधिकरणम्[७] ॥*॥

## ॥ विकल्पो विशिष्टफलत्वात् ॥६१॥

स्वयोग्योपासनानन्तरं सामान्यस्यापि कस्यचिदुपासनं विकल्पेन भवति विशिष्टफलापेक्षया ।

"मुक्त्यर्थमात्मयोग्यं हि कार्यमेव ह्युपासनम् । नृसिंहादिकमन्यच्च दुरितादिनिवृत्तये । उपास्यते[८] यथायोगं नवा फलविभेदतः" इति च ब्रह्मतर्के[९] ॥*॥

॥*॥ इति द्वात्रिंशशमधिकरणम्[१०] ॥*॥

## ॥ काम्यास्तु यथाकामं समुच्चीयेरन् नवा पूर्वहेत्वभावात् ॥६२॥

"यस्य यस्य हि यः कामस्तस्य तस्य ह्युपासनम् । तादृशानां गुणानां च समाहारं प्रकल्पयेत् । अकामत्वान्मुमुक्षूणां नवा तेषामुपासनम् । तुष्ट्यर्थमीश्वरस्यैव नैवोपासा[११] विदुष्यति" इति च बृहत्तन्त्रे[१२] ।

॥*॥ इति त्रयस्त्रिंशमधिकरणम्[१३] ॥*॥

---

१ "इति बृहत्तन्त्रे" इति प्र. पाठः । २ प्र. पाठेऽत्र षट्त्रिंशमधिकरणम् । ३ इतः परं प्र. पाठे "दीक्षाप्रायणीयोदयनीयसवनत्रयावभृथात्मकः क्रतुः।" इत्यधिकं पठ्यते । ४ "इति गौपवनश्रुतिः" इति प्र.पाठः । ५ प्र पाठेऽत्र सप्तत्रिंशमधिकरणम् । ६ "इति ब्रह्मतर्के" इति प्र- पाठः । ७ प्र. पाठेऽत्राष्टत्रिंशमधिकरणम् । ८ "उपासते" ९ "इति ब्रह्मतर्के" इति प्र.पाठौ । १० प्र. पाठेऽत्रैकोनचत्वारिंशमधिकरणम् । ११ "नैवोपासा" इति प्र. पाठः। तत्त्वदीपिकाकृताम्– "नचोपासा" इति पाठो विवक्षित इति भाति । १२ "इति बृहत्तन्त्रे" इति प्र. पाठः । १३ प्र. पाठेऽत्र चत्वारिंशमधिकरणम् ।

भाष्यम्

॥ अङ्गेषु यथाऽऽश्रयभावः ॥६३॥

अङ्गदेवतानां यथा यथा परमेश्वराङ्गाश्रयत्वम्— "चक्षोः सूर्यो अजायत" इत्यादि, तथा भावना कर्तव्या ॥*॥

॥ शिष्टेश्च ॥६४॥

"यस्मिन् यस्मिन् यो हि चाङ्गे निविष्टः परस्य चिन्त्यः स तथा तथैव" इति पौत्रायणश्रुतेः ॥*॥

॥ समाहारात् ॥६५॥

"अङ्गैः पराद् ये हि देवा विसृष्टास्तत्तद्गुणान् परमे संहरेत । तांश्चापि तत्रैव विचिन्त्य देवान् तत्स्थानं मुमुक्षुः परमं व्रजेत" इति च काषायणश्रुतौ[1] समाहारवचनाच्च ॥*॥

॥ गुणसाधारण्यश्रुतेश्च ॥६६॥

"साधारण्यात् सर्वगुणाः परस्य समाहार्यास्तत्त्ववशो मुमुक्षोः" इति माण्डव्यश्रुतेश्च ॥*॥

॥*॥ इति चतुस्त्रिंशमधिकरणम्[2] ॥*॥

॥ नवाऽतत्सहभावश्रुतेः ॥६७॥

नवाऽङ्गदेवतोपसंहारः कार्यः । उपसंहारस्य सहाश्रवणात् ॥*॥

॥ दर्शनाच्च ॥६८॥

"सत्यो ज्ञानः परमानन्दरूप आत्मेत्येवं नित्यदोपासनं स्यात् । नान्यत् किञ्चित् समुपासीत धीरः सर्वैर्गुणैर्देवगणा उपासते" इति कमठश्रुतौ ॥*॥

॥*॥ इति पञ्चत्रिंशमधिकरणम्[3] ॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीमद्ब्रह्मसूत्रभाष्ये
— तृतीयाध्यायस्य तृतीयः पादः —

---

ॐ॥ ज्ञानसामर्थ्यमस्मिन् पाद उच्यते ।

॥ पुरुषार्थोऽतः शब्दादिति बादरायणः ॥१॥

यद्दर्शनार्थमुपासनोक्ता तस्माद् दर्शनात् सर्वपुरुषार्थप्राप्तिरिति बादरायणो मन्यते ।

"यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान् । तं तं लोकं जयते तांश्च कामांस्तस्मादात्मज्ञं ह्यर्चयेद् भूतिकामः" इति शब्दात् ॥*॥

अनुव्याख्यानम्

ॐ ॥ एवमुत्पन्ननिर्दोषभगवद्दर्शनात् सदा । अपेक्षितफलप्राप्तिरारब्धस्यानतिक्रमात् ॥१॥
देवर्षिमानुषादीनां तत्तज्ज्ञात्यनुसारतः । जैमिन्युक्तं मानुषाणां तद्विशेषाश्च केचन ॥२॥

---

१ "इति काषायणश्रुतौ" इति प्र. पाठः । २ प्र पाठेऽत्रैकचत्वारिंशमधिकरणम् । ३ प्र. पाठेऽत्र द्विचत्वारिंशमधिकरणम् ।

भाष्यम्

॥ शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॥२॥

अस्त्येव मोक्षसाधनत्वम्[1]। स्वर्गादिषु तत्साधनकर्मशेषत्वेन ।

" स्वर्गं धनाद् देहतो वै गृहाच्च प्राप्स्यन्ति धीरा नत्वधीराः कुतश्चित् " इतिवदिति जैमिनिः ॥*॥

॥ आचारदर्शनात् ॥३॥

ज्ञानिनामेव देवादीनामाचारदर्शनात् ॥*॥

॥ तच्छ्रुतेः ॥४॥

" यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति " इति शेषत्वश्रुतेः ॥*॥

॥ समन्वारम्भणात् ॥५॥

" कर्मैव देहं दैविकं मानुषं वाऽप्यन्वारभेन्नापरस्तत्र हेतुः । भोगांस्तदीयांश्च यथाविभागं ददाति कर्मैव शुभाशुभं यत् " इति माठरश्रुतेश्च ।

संशब्दः प्राधान्यं दर्शयति ॥*॥

॥ तद्वतो विधानात् ॥६॥

" ज्ञानी च कर्माणि सदोदितानि कुर्यादकामः सततं भवेत " इति कमठश्रुतौ ज्ञानवतोऽपि विधानात् ॥*॥

॥ नियमाच्च ॥७॥

" कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः । एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे " इति ॥*॥

॥ अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥८॥

" ज्ञानादेव स्वर्गो ज्ञानादेवापवर्गो ज्ञानादेव [सर्वे][2] कामाः सम्पद्यन्ते[3]ऽथापि यथायथा कर्म कुरुते तथातथाऽधिको भवति " इति कौण्ठरव्यश्रुतेः, युधिष्ठिरादीनां राजसूयादिना फलाधिक्यदर्शनाच्चेति बादरायणमतम्[4] ॥*॥

॥ तुल्यं तु दर्शनम् ॥९॥

राजसूयादिकृतावकृतौ च सममेव तेषां ज्ञानम्[5] ।

" विज्ञातमेतत् सर्वेषां मुनीनां तत्त्वदर्शनात्[6] । स्यादेव मोक्षो नान्यस्मादिति तत्रापि चित्रता । स्वर्गादयः कर्मणैव नान्येनेत्यपरे विदुः । ज्ञानेनाऽधिक्यमित्याहुर्जैमिन्याद्यास्तु केचन । अदृष्टमेव ज्ञानेन दृष्टं नैवोपलभ्यते । इति केचिद् विदः प्राहुर्व्यास-

अनुव्याख्यानम्

सामान्यं भगवत्प्रोक्तं देवादीनां विशेषतः । बलवद्विरोधिसद्भावे जैमिन्याद्युक्तिरिष्यते ॥३॥*॥

---

१ "मोक्षसाधनत्वं ज्ञानस्य" इति प्र.पाठः । २ प्राचीनपाठे "सर्वे" इत्येतन्न पठ्यते । ३ " सम्पद्यन्ते तथाऽपि" ४ "बादरायणस्य मतम्" ५ "विज्ञानम्" ६ "ब्रह्मदर्शनात्" इति प्र. पाठाः।

भाष्यम्

शिष्या इमेऽखिलाः । यस्माद् व्यासमतं सर्वं[1] सत्यमेव ततोऽखिलम् । यथाऽऽकाशस्त्वनन्तोऽपि व्यामो हस्तावधिस्तथा । प्रादेशोऽपि हि सत्येन तथैतेषां मतानि तु । स्वयं तु भगवान् व्यासो व्याप्तज्ञानमहांशुमान् । अनन्ताकाशवत् पश्यन् निखिलं पुरुषोत्तमः । ज्ञानेनैवाऽप्यते सर्वं कर्मणा त्वधिकं[1] भवेत् । इति प्राह महायोगी पुमर्थानां विनिर्णयम्" इति भविष्यत्पर्वणि । "ज्ञानिनामपि देवानां विशेषः कर्मभिर्भवेत् । चीर्णेऽकृते वा ज्ञानस्य न विशेषोऽस्ति[2] कर्मणि " इति च ब्रह्मतर्के[3] ॥*॥

॥*॥ इति प्रथममधिकरणम् ॥*॥

सर्वेषां पुरुषार्थापेक्षित्वाज्ज्ञानाधिकारितेत्यत आह—

॥ असार्वत्रिकी ॥१०॥

न सर्वेषामधिकारः ॥*॥

॥ विभागः शतवत् ॥११॥

"नवकोटयो हि देवानां तेषां मध्ये शतस्य तु । सोमाधिकारो वेदोक्तो ब्रह्मणी द्वे शताधिके । यथा तथैत्रासङ्ख्येयाः प्रजास्तासु कियान् जनः । ज्ञानाधिकारी सम्प्रोक्तो विष्णुपादैकसंश्रयः" इति वचनात् सुखापेक्षासाम्येऽपि विभाग इष्यतेऽधिकारार्थम् ॥*॥

कस्याधिकारः ?—

॥ अध्ययनमात्रवतः ॥१२॥

"अवैष्णवस्य वेदेऽपि ह्यधिकारो न विद्यते । गुरुभक्तिविहीनस्य शमादिरहितस्य च । नच वर्णावरस्यापि तस्मादध्ययनान्वितः । ब्रह्मज्ञाने तु वेदोक्तेऽप्यधिकारी[4] सतां मतः" इति हि ब्रह्मतर्के[5] । "पठेद् वेदानथार्थानधीयीताथ विचार्य ब्रह्म विन्देत्" इति च कौषारवश्रुतिः[6] ॥*॥[7]

॥ नाविशेषात् ॥१२॥

न सामान्येनाधिकारो देवादीनाम् ।

"अथ पुमर्थसाधनान्यर्थो धर्मो ज्ञानमित्युत्तरोत्तरं तत्राधिकारिणो मनुष्या ऋषयो देवा इत्युत्तरोत्तरम्" इति हि कौण्डिन्यश्रुतिः[8] ॥*॥

॥*॥ इति द्वितीयमधिकरणम्[9] ॥*॥

"अथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः स ब्राह्मणः केन स्याद् येन स्यात् तेनेदृश एव" इति ज्ञानिनो यथेष्टचरणं[10] विधीयत इत्यत आह—

---

१ "चाधिकम्" इति क्वचित् कोशे पठ्यते । २ "विशेषो हि" इति क्वचित् । ३ "इति ब्रह्मतर्के" ४ "वेदोक्ते ह्यधिकारी" ५ "इति ब्रह्मतर्के" ६ "इति कौषारवश्रुतिः" इति प्र. पाठाः। ७ प्र. पाठेऽत्र द्वितीयाधिकरणपूर्तिः । ८ "इति कौण्डिन्यश्रुतिः" इति प्र. पाठः । ९ प्र. पाठेऽत्र तृतीयमधिकरणम् । १०"यथेष्टाचरणम्" इति प्र. पाठः ।

भाष्यम्

॥ स्तुतयेऽनुमतिर्वा ॥१४॥

न विधिः। ज्ञानिस्तुतयेऽनुमतिमात्रं वा। युज्यते च ॥*॥

॥ कामकारेण चैके ॥१५॥

"कामचराः कामभक्षाः कामवादाः कामेनैवेमं देहमुत्सृज्याथ परात् परमीयुरनारम्भणम्" इति च चैके पठन्ति ॥*॥

॥ उपमर्दं च ॥१६॥

"ओमित्युच्चार्यान्तरिममात्मानमभिपश्योपमृद्य पुण्यं च पापं च काममाचरन्तो ब्रह्मानुव्रजन्ति" इति च तुरश्रुतौ ॥*॥

॥ ऊर्ध्वरेतस्सु च शब्दे हि ॥१७॥

न तावता कामचाराणां ज्ञानाधिकारः।

"य इमं परमं गुह्यमूर्ध्वरेतस्सु भाषयेत्। न तथा विद्यते भूयान् यं प्राप्यान्येऽपि भूयसः" इति माठरश्रुतेः ॥*॥

अनुव्याख्यानम्

विकर्मलेपो नैवास्ति सम्यग्दृष्टिमतां क्वचित्। गुणहानिश्च नैवास्ति ब्रह्मणस्त्वविकर्मतः॥ ॥४॥ देवानामपि न प्रायः क्लृप्तस्य तु कथञ्चन। प्राप्तह्रासो भवेत् क्वापि महता तु विकर्मणा। तथाऽपि तत् क्लृप्तमेव तस्मान्न नियमोज्झितिः॥५॥ चन्द्रसुग्रीवयोश्चैव स्वोच्चदारपरिग्रहात्। प्राप्तहानिरभूत्नैव क्लृप्तहानिः यथञ्चन॥६॥ ह्रासोऽपि मानुषादीनामानन्दस्य विकर्मणा। भवेन्मुक्तौ विशेषेण स्वोच्चानामपराधतः॥७॥ ज्ञानोत्तरस्य पापस्य चतुर्थेऽलेप उच्यते। अशुचित्वादिकं तस्य न भवेदिति तत्फलम्। अत्र ज्ञानफलस्यैव मुक्तेर्नियतत्तोच्यते॥८॥ प्रारब्धकर्मजस्यैव विषभक्षान्मृतेरिव। प्राप्तस्याप्यनिवर्त्यस्य किञ्चिद् भुक्तस्य संविदा। उपमर्द इह प्रोक्तो देवादीनां यथाक्रमम्॥९॥ सर्वात्मना त्वभोगो हि प्रारब्धस्यैव कर्मणः। न ब्रह्मदर्शिनोऽपि स्यात् फलह्रासस्तु विद्यते॥१०॥ सर्वात्मना फलह्रासो यदि नाऽरब्धकर्मणः। स्यात् काम्यविधिवैयर्थ्यमित्युक्तनियमो भवेत्। एवमाद्यपि सम्प्रोक्तं तन्त्रभागवते स्फुटम्॥११॥ तारतम्यं फले नो चेद् ब्रह्मादीनां कथं श्रुतिः। अवृजिनोऽकामहत इति मुक्तिं निगद्य च। आनन्दतारतम्यं च तेषां ब्रूयात् पृथक् पृथक्॥१२॥ संसार एव चेदेतत् तारतम्यं न मुख्यतः। अकामहतशब्दार्थोऽवृजिनत्वं च नो भवेत्॥१३॥ कामस्य यत्राऽत्ताः कामास्तत्र माममृतं कृधि। इति यल्लक्षणं मुक्तेः श्रुतिराह बलीयसी॥१४॥ कामाहतिः कुतोऽन्यत्र प्राप्तकामस्य सा भवेत्। अप्रयत्नेन कामानामवाप्तिः सा यदा भवेत्। तदैवाकामहतता कुत एवान्यथा भवेत्॥१५॥ चेतनस्य त्वसुप्तस्य कुत्र दृष्टा ह्यकामता। अव्यक्तिरेव

१ "ज्ञानिनः स्तुतये" इति प्र॰ पा॰, २ "कामचराः" प्र॰ पाठः। तत्त्वदीपिकायां तु "कामचाराः" इति दृश्यते। ३ "अथच" इति क्वचित् प्राचीनपाठः। ४ "ज्ञानेऽधिकारः" इति प्र॰ पाठः। ५ "अन्ये च" इति च क्वचित्। ६ "चास्य" इति प्र॰ पाठः। प्राचीनकोशेष्वपि क्वचित् तथा। ७ "यथा क्रमः" इति प्र॰ पाठः।

भाष्यम्

॥ परामर्शं जैमिनिरचोदना चापवदति हि ॥१८॥

"प्रातरुत्थायाथ सन्ध्यामुपासीत यत् सन्ध्यामुपासते ब्रह्मैव तदुपासतेऽथ देवान् नमेज्जुहुयाद् वेदानावर्तयीत नान्यत् किञ्चिदाचरेन्न सुरां पिबेन्न पैलण्डु भक्षयीत न भृशं वदेन्न विस्मरेताऽऽत्मानं सोमं पिबेद्धुतशेषेण वर्तयेत्" इत्युक्ताचारपरामर्शेन विधि-बन्धवर्जितत्वेन कामत एव तस्य चरणं कामचार इति जैमिनिर्मन्यते। नच निषिद्धं कर्तव्यमेवेति चोदना। "ब्राह्मणो न हन्तव्यः" इत्याद्यपवादश्च ॥*॥

अनुव्याख्यानम्

कामानां न नाशो मोहसुप्तयोः॥१६॥ यत्कामः स्वापमाप्नोति तदेवोत्थापितः पुनः। अवशोऽपि व्याहरति कुतः सुप्तावकामता ॥१७॥ सर्वकामानवाप्नोति ब्रह्मणा सह मुक्तिगः। पर्येति तत्र जक्षंश्च क्रीडन् रतिमवाप्नुवन् ॥१८॥ कामान्नी कामरूपी सन्निमान् लोकांश्च सञ्चरन्। आस्ते गायन् साम मुक्त इत्यादिश्रुतिसद्बलात् ॥१९॥ अकामः स्यात् कथं मुक्तः कामा येऽस्य हृदि श्रिताः। इत्यन्तःकरणस्थानां कामानां मोक्षमेव हि। आह श्रुतिर्हृदीत्येव न चेद् व्यर्थं विशेषणम् ॥२०॥ हृद्येव तेषां श्रयणमिति पक्षो न भासते। मुक्तानां कामितामाह पृथक्छाखासु यच्छ्रुतिः ॥२१॥ अतोऽकामहतत्वं तु मुक्तानामेव मुख्यतः। मुख्यार्थस्य वृथा त्यागो मायिनामेव भूषणम् ॥२२॥ अपापत्वमदुःखत्वं चावृजिनत्वमिहोदितम्। अप्रियं वृजिनं दुःखमकं तोद इतीर्यते ॥२३॥ तत्कारणत्वात् पापं वा वृजिनं नाम कथ्यते। इत्युक्तः स्वय-मीशेन नामार्थः शब्दनिर्णये ॥२४॥ अपापत्वं च नैवास्ति यावत्संसारमस्य हि। आरब्धपाप-मस्त्येव दुःखं च ज्ञानिनोऽपि हि ॥२५॥ तस्मात् तस्मादकामत्वमिति चाश्रुतकल्पना। अका-महत इत्युक्तेः श्रुतहानिरपि स्फुटा ॥२६॥ कुत्रचित् कामिनः पुंसः कामाभावात् क्वचित् क्वचित्। इन्द्रादिसुखभोगोऽस्तीत्यनुभूतिर्हि कुप्यति ॥२७॥ तस्मादमुक्तसुखगं तारतम्यं पृथक् पृथक्। उक्त्वा यश्चेति मुक्तानां तारतम्यं सुखे श्रुतिः। आहेति पेशलं तच्च चशब्दा-देव गम्यते ॥२८॥ राद्धः संसिद्ध इत्येव मुक्त एवावगम्यते। साधुना विष्णुना युक्तो मुक्तः साधुयुवा मतः ॥२९॥ यौवनं नित्यमेतस्य मुक्तस्येति युवा स च। फलमध्ययनस्याऽऽप्तं तेनाध्यायकं ईरितः ॥३०॥ निर्ह्रासानन्दसम्प्राप्त्या चाऽऽशिष्ठ इति गीयते। स्थितस्यानन्यथा-

---

१ "प्रातरुत्थाय सन्ध्याम्–" इत्यादि प्र.पाठः। २ "पलाण्डुम्" इति प्र. पाठः। "पलण्डुम्" इत्यपि क्वचित्। ३ "न विस्मरेदात्मानम्" इति प्र.पाठः। ४ "आवर्तयेत्" इति क्वचित्। ५ "निषिद्धं कर्म" ६ "रतिमवाप्नुयात्" इति प्र. पाठौ। ७ प्राचीनकोशेषु सर्वत्र "इत्युक्ते" इत्येव पठ्यते। खर्परे शरीत्यस्यो-पलक्षणत्वेन विसर्गलोपो वा वक्तव्यः। उक्तमिति भावे क्तः, उक्ते वचने श्रुतस्य हतशब्दस्य हानिरिति वा व्याख्येयम्। ८ "राद्धसंसिद्धः" इति प्राचीनकोशेषु पठ्यते। स्खलनमिति स्फुटम्। ९ "नित्यमेवास्य" इति क्वचित् पठ्यते। १० अत्र "अध्यायकः" इति च्छेदो हृषीकेशतीर्थादिसम्मतः। तदेतत् तैत्तिरीयभाष्ये स्फुटम्। सुधारीत्या तु आध्यायकः इति।

भाष्यम्

॥ अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥१९॥

अनुष्ठेयानां मध्य एव कामतश्चरणं कामतो निवृत्तिरिति बादरायणो मन्यते । "केन स्याद् येन स्यात् तेनेदृश एव" इति साम्यश्रुतेः ।

"यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः। आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते"
इति भगवद्वचनाच्च ॥*॥

॥ विधिर्वा धारणवत् ॥२०॥

"केन स्याद् येन स्यात्" इति विधिर्वा । यथा वेदधारणं त्रैवर्णिकानां विहितं नान्येषाम्, एवं स्वमतानुसारिणी प्रवृत्तिर्ज्ञानिनां विहिता, न तत्राधर्माशङ्का[1] कार्या, नान्येषामिति वा ।

"स्वेच्छयैव प्रवृत्तिस्तु ब्रह्मणो विधिचोदिता । नाऽशङ्क्यं तन्मतं क्वापि विष्णोः प्रत्यक्षचोदना । इतरेषां न विहिता स्वेच्छावृत्तिः कथञ्चन" इति हि ब्राह्मे[2] ॥*॥

॥ स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥२१॥

स्तुतिमात्रमेव स्वेच्छाचरणम्, न विधिः, तैरपि सामान्यविधिस्वीकरणादिति[3] चेत्, न । अपूर्वत्वात्, परवशत्वात् । सर्वविध्यतिक्रमेण स्तुतिमात्रविषयत्वं परब्रह्मण एव हि ।

"विधीनां विषयास्त्वन्ये ब्रह्मणः स्वेच्छया कृतौ । परस्य ब्रह्मणो ह्येव सर्वविध्यतिदूरता" इति हि ब्रह्मतर्के[4] ॥*॥

॥ भावशब्दाच्च ॥२२॥

"यथाविधानमपरे विधिर्भावे प्रजापतेः । ब्रह्मणः परमस्यैव सर्वविध्यतिदूरता" इति च तुरश्रुतौ ॥*॥

अनुव्याख्यानम्

प्राप्तेर्द्रढिष्ठ इति चोदितः ॥३१॥ बलिष्ठश्च स्वभावेन मुक्तो भवति केवलम् । तस्येयं पृथिवीत्यादि पूर्वभावव्यपेक्षया ॥३२॥ स एक इति संसारगतमुक्त्वा सुखं पुनः। श्रोत्रियस्येति वदति मुक्ताच्छतगुणात्मताम्॥३३॥ संसारगाच्च संसारगतस्यैव शताधिकम् । मुक्तान्मुक्तस्य युक्तं स्याच्छ्रुत्युक्तमभिवीक्षतः ॥३४॥ युक्तं च साधनाधिक्यात् साध्याधिक्यं सुरादिषु । नाधिक्यं यदि साध्ये स्यात् प्रयत्नः साधने कुतः ॥३५॥ यत्नश्च दृश्यते तेषां महानेव महात्मनाम् । यत्र साधनबाहुल्यं साध्यबाहुल्यमत्र च । दृष्टं नियमतो नो चेन्न यत्नं कुर्युरञ्जसा ॥३६॥ कृच्छ्रेण साधनादेव न मुक्तवदुदीर्यते । दशकल्पं तपश्चीर्णं रुद्रेण लवणार्णवे । त्यक्त्वा सुखानि सर्वाणि क्लिष्टेन लवणाम्भसा ॥३७॥ शक्रेण वर्षकोटीश्च धूमः पीतोऽतिदुःखतः। वर्षायुतं च सूर्येण तपोऽवाक्छिरसा[5] कृतम् ॥३८॥ सुदुःखेन सुखं त्यक्त्वा धर्मेणाऽकाशशायिना । पीता मरीचयो वर्षसाहस्रमतिसादरम्॥३९॥अतिकृच्छ्रेण कुर्वन्ति यत्नं ब्रह्मविदोऽपि हि[6] । इत्येतदखिलं मोक्षविशेषाभावतः[7] कथम् ॥४०॥ दैवी सम्पद् विमोक्षाय निबन्धायाऽसुरी

---

१ "अधर्मशङ्का" २ इति ब्राह्मे" ३ "स्वीकारादिति" ४"इति ब्रह्मतर्के" ५ "अर्वाक्छिरसा"
६ "विदोऽपि च" इति प्र. पाठाः । ७ "मोक्षे विशेषाभावतः" इति क्वचित् पठ्यते ।

भाष्यम्

॥ पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥२३॥

" केन स्याद् येन स्यात् " इत्यादयः स्थिरत्वनिवृत्त्यर्था इति चेत्, न ।

"त्रेधा ह ज्ञानिनो विधिनियता[1] अनियताः स्वेच्छानियता इति । विधिनियता मनुष्या अनियता हि देवा ब्रह्मैव स्वेच्छानियतः " इति गौपवनश्रुतौ विशेषितत्वात् ॥*॥

॥ तथाचैकवाक्योपबन्धात् ॥२४॥

एवं सति विधिवाक्यानां स्वेच्छावृत्तिवाक्यानां(च[2]) सम्बन्धो भवति ॥*॥

॥ अत एवचाग्नीन्धनाद्यनपेक्षा ॥२५॥

अत एव ज्ञानस्य मोक्षदाने नाग्निहोत्राद्यपेक्षा । ब्रह्मतर्के च—

"येषां ज्ञानं समुत्पन्नं तेषां मोक्षो विनिश्चितः। शुभकर्मभिराधिक्यं विपरीतैर्विपर्ययः । स्वेच्छानुवृत्त्यैव भवेद् ब्रह्मणः प्रायशस्तथा । देवानामपि सर्वेषां विशेषादुत्तरोत्तरम्" इति ॥*॥

अनुव्याख्यानम्

मता । इति मोक्षविशेषश्च स्वयं भगवतोदितः॥४१॥ तमेव यूयं भजताऽत्मवृत्तिभिर्मनोवचः-कायगुणैः स्वकर्मभिः। अमायिनः कामदुघाङ्घ्रिपङ्कजं यथाधिकारावसितार्थसिद्धये ॥४२॥ अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः । आदघ्नास उपकक्षास उ त्वे ह्रदा इव स्नात्वा उ त्वे ददृश्रे ॥४३॥ इत्यादीनि च वाक्यानि तारतम्यं विमुक्तिगम्। व्यक्तं वदन्ति तत् केन साम्यं मुक्तेषु गम्यते ।॥४४॥ दुःखाद्यभावसाम्यं च साम्यवाक्यार्थ ईयते । भक्त्यादिगुणसद्भावे ह्यतुल्यत्वं च भारते। उक्तं साधनवैशेष्यमपि[3] सर्वत्र कथ्यते ॥४५॥ दुर्ज्ञेयं घोररूपस्य त्रैलोक्यध्वंसिनः प्रभोः। दैवतैर्मुनिभिः सिद्धैर्महायोगिभिरेव च ॥४६॥ नित्ययुक्तैर्महाभागैर्विमुक्तक्लेशसाध्वसैः[4] । महोत्साहैर्महाधैर्यैः सत्त्वस्थैर्व्यवसायिभिः ॥४७॥ अतीतानागतज्ञानप्रभवाप्ययवेदिभिः । शौचस्वाध्यायसन्तोषतपस्सत्यदयान्वितैः[5] ॥४८॥ किमु मर्त्यैर्भयभ्रान्तिध्वंसमोहरुजान्वितैः । अल्पायुर्वीर्यधीसत्त्वव्यवसायश्रुतिव्रतैः ॥४९॥ कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति । ब्रह्मैव किञ्चिज्जानाति न तदन्यो हि कश्चन ॥५०॥ मुक्तानामपि सिद्धानां नारायणपरायणः । सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामते ॥५१॥ इयं विसृष्टिर्यत आ बभूव यदि वा दधे यदि वा न। यो अस्याध्यक्षः परमे व्योमन् त्सो अङ्ग वेद यदि वा न वेद ॥५२॥ यः स्वात्ममायाविभवं स्वयं गतो नाहं नभस्वांस्तमथापरे कुतः । ब्रह्माऽपि यं वेत्ति नैवेह[6] सम्यगन्ये कुतो देवमुनीन्द्रमर्त्याः ॥५३॥ नमस्तेऽमिततत्त्वाय धर्मादीनां[7] च

---

१ "त्रेधा हि ज्ञानिनो ह वाव भवन्ति विधिनियताः" इत्यादि प्र. पाठः। "त्रेधा हि ज्ञानिनो भवन्ति" इत्यादि क्वचित् । २ प्राचीनकोशेषु चकारो न पठ्यते । स्खलितमेव स्यात् । ३ "वैचित्र्यमपि" ४ "विमोहक्लेशसाध्वसैः" ५"-सत्त्वदयान्वितैः" ६"नचेह" ७ "ब्रह्मादीनाम्" इति प्र. पाठाः।

भाष्यम्

॥ सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥२६॥

सर्वधर्मापेक्षा च ज्ञानस्योत्पत्तौ "विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति श्रुतेः। यथा गतिनिष्पत्त्यर्थमश्वादयोऽपेक्ष्यन्ते न विनिष्पन्नगतेर्ग्रामादिप्राप्तौ ॥*॥

॥ शमदमाद्युपेतः स्यात् तथाऽपि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥२७॥

यद्यपि ज्ञानेनैव मोक्षो नियतः, तथाऽपि ज्ञानी शमदमाद्युपेतः स्यात्।

"आचार्याद् विद्यामवाप्यैतमात्मानमभिपश्य[1] शान्तो भवेद् दान्तो भवेदनुकूलो भवेदाचार्यं परिचरेत् परिचरेदाचार्यम्" इति माठरश्रुतौ ज्ञानिनोऽपि तद्विधेः। "ब्राह्मीं वाव त उपनिषदमब्रूमेति। तस्यै तपो दमः कर्मेति प्रतिष्ठा। वेदाः सर्वाङ्गानि सत्यमायतनम्। यो वा एतामेवं[2] वेद" इति ज्ञानाङ्गतया तेषामवश्यानुष्ठेयत्वात्। "यस्य

अनुव्याख्यानम्

सूतये। निर्गुणाय च सत्काष्ठां[3] नाहं वेदापरे कुतः ॥५४॥ नाहं परायुर् ऋषयो न मरीचिमुख्या जानन्ति यद्विरचितं खलु सत्त्वसङ्गाः[4]। यन्मायया मुषितचेतस ईशदैत्यमर्त्यादयः किमुत शश्वदभद्रवृत्ताः ॥५५॥ अहं महेन्द्रो निर्ऋतिः प्रचेताः सोमोऽग्निरीशः पवनोऽर्को विरिञ्चः। आदित्यविश्वे वसवोऽथ साध्या मरुद्गणा रुद्रगणाः ससिद्धाः॥५६॥अन्ये च ये विश्वसृजोऽमरेशा भृग्वादयोऽस्पृष्टरजस्तमस्काः। यस्येहितं न विदुः स्पृष्टमायाः सत्त्वप्रधाना अपि किं ततोऽन्ये ॥५७॥ सर्वस्यादौ स्मृतो ब्रह्मा तस्माद् देवादनन्तरः। जानाति देवप्रवरं भूयश्चातोऽधिकं नृप ॥५८॥ न त्वामतिशयिष्यन्ति मुक्तावपि कथञ्चन। मद्भक्तियोगाज्ज्ञानाच्च सर्वानतिशयिष्यसि ॥५९॥ यथा भक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे। तथा मुक्तिविशेषोऽपि ज्ञानिनां लिङ्गभेदने ॥ ६० ॥ सायुज्यं समनुप्राप्ता अपि देवादयोऽखिलाः। तारतम्याद्धि तिष्ठन्ति तारतम्यं हि साधने ॥६१॥ मनुष्याणां सहस्रेषु कश्चिद् यतति सिद्धये। यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥६२॥ य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति। भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥६३॥ नच तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः। भविता नच मे तस्मादन्यः प्रियतरो भुवि॥६४॥ अध्येष्यते च य इमं धर्म्यं संवादमावयोः। ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः॥६५॥ श्रद्धावाननसूयुश्च[5] शृणुयादपि यो नरः। सोऽपि मुक्तः शुभान् लोकान् प्राप्नुयात् पुण्यकर्मणाम्[6]॥६६॥ ध्यानेनाऽत्मनि पश्यन्ति केचिदात्मानमात्मना। अन्ये साङ्ख्येन योगेन कर्मयोगेन चापरे॥६७॥ अन्ये त्वेवमजानन्तः श्रुत्वाऽन्येभ्य उपासते। तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥६८॥ सुसूक्ष्मैरप्यशेषैश्च विशेषैः

---

१ "अभिपश्यन्" २ "एतामुपनिषदमेवम्" इति प्र. पाठौ। ३ पेजावरमठीयप्राचीनकोशे "यत्काष्ठाम्" इति पठ्यते। "यत्काष्ठां यत्पूर्णताम्" इति नयचन्द्रिकाऽत्र संवदते। ४"सत्त्वसङ्गाः" इति प्र. पाठः। सत्त्वगुणसङ्गिन इति प्राचीनपाठार्थः। ५ "अनसूयश्च" ६ "पुण्यकर्मणा" इति प्र.पाठौ

भाष्यम्

ज्ञानं तस्य मोक्ष इति नात्र विचारणा। तस्य शान्त्यादयोऽङ्गानि तस्मात् तेषामनुष्ठितिः। अवश्यकरणीया स्यादन्यथाऽल्पफलं भवेत्'' इति चाऽऽग्नेये[1]।

तुशब्दः पूर्णफलार्थत्वं सूचयति ॥*॥

॥ सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥२८॥

''यदि हवा[2] एवंविन्निखिलं भक्षयीत एवमेव स भवति'' इति सर्वान्नानुमतिः प्राणात्ययविषया। ''नवा अजीविष्यमिमानखादन्निति होवाच कामो म उदपानम्'' इति दर्शनात् ॥*॥

॥ अबाधाच्च ॥२९॥

''अन्याय्यचरणाभावे[3] नहि ज्ञानस्य बाधनम्। अतो विद्वानपि न्याय्यं वर्तेतोत्कर्षसिद्धये'' इति च ब्रह्मतर्के[4] ॥*॥

॥ अपि स्मर्यते ॥३०॥

''अतीतानागतज्ञानी त्रैलोक्योद्धरणक्षमः। एतादृशोऽपि नाऽऽचारं श्रौतं स्मार्तं[5] विसर्जयेत्[6]'' इति हरिवंशेषु ॥*॥

अनुव्याख्यानम्

सह पश्यति। स्वात्मानं भगवान् विष्णुः सर्वरूपोऽपि सर्वदा ॥६९॥ सर्वत्र चान्यदप्येवं तेनादृष्टं नहि क्वचित्। सर्वत्र सर्वदैवेशं पश्यत्येव रमाऽपि तु ॥७०॥ नतु सर्वैर्विशेषैस्तं पश्यन्त्यप्यन्यतोऽधिकम्। स्वात्मानमन्यच्चाशेषं पश्यत्येव हि सर्वदा ॥७१॥ ब्रह्मा तु सर्वगं पश्येद् गुणानप्यन्यतोऽधिकम्। नतु सर्वेषु कालेषु तथा पश्यत्यमुक्तिगः ॥७२॥ मुक्तस्तु सर्वदा पश्येत् सर्वगत्वेन चापि तु। न रमावद् विशेषाणां दर्शनं शक्नुयात् क्वचित् ॥७३॥ स्वात्मानमन्यच्च सदा विशेषैरखिलैरपि पश्यन्त्यज्ञस्तथा[7] वाणी विशेषांस्तावतो नतु। त्रैगुण्यात् परतः पश्येद् व्याप्तं शतगुणं[8] हरिम् ॥७४॥ गिरिशो गरुडश्चैव तमोमात्रगतं हरिम्। पश्येद् विशेषानपि हि वाणीदृष्टान् न पश्यति ॥७५॥ उमा सुपर्णी च महत्तत्वं यावत् प्रपश्यति। रुद्रदृष्टान् विशेषांश्च नैव पश्येत् कदाचन ॥७६॥ स्वरूपमन्यरूपं च मुक्ता देवाः समस्तशः। जानन्तीन्द्रश्च कामश्च ब्रह्म यावदहङ्कृतिः ॥७७॥ पश्यन्तो मनुदक्षाद्या बुद्धितत्वस्थितं हरिम्। पश्यन्ति सोमसूर्यौ तु मनस्थं परमेश्वरम् ॥७८॥ अन्ये भूतस्थितं विष्णुं देवाः पश्यन्ति सर्वदा। बहुसाहस्रवर्षेण महत्तत्वे क्वचित् क्वचित् ॥७९॥ अन्ये चैव यथायोग्य[9]मण्डान्तर्वर्तिनं हरिम्। श्वेतद्वीपपतिं चैव हृद्येवान्ये तु केचन। कदाचिदेव तत्रापि केचित् पश्यन्ति केशवम् ॥८०॥ उमा यावदनन्तांशान्[10] पूर्वदृष्टेभ्य एव तु। विशेषान् वासुदेवस्य पश्चादुक्ता विचक्षते ॥८१॥ शक्रकामा-

---

१ ''इत्याग्नेये'' २ ''यदि हवा अप्येवंवित्'' इति प्र.पाठौ। ३ ''अन्यायचरणाभावे'' इति क्वचित् पठ्यते। ४ ''इति ब्रह्मतर्के'' इति प्र.पाठः। ५ ''श्रौतस्मार्तम्'' इति प्राचीनकोशेषु पठ्यते। ६ ''परित्यजेत्'' इति प्र.पाठः। ७ ''पश्यत्यज्ञः'' इति प्र.पा.। प्राचीनपाठे पश्यन्ती वाणी। ८ ''शतगुणैः'' इति क्वचित्। ९ ''यथायोगम्'' १० ''अनन्ताशांत्'' इति प्राचीनपाठः। तत्पक्षे अनन्तांशानां मध्ये एकांशेन विशेषान् विचक्षत इत्यर्थः।

भाष्यम्

## ॥ शब्दश्चातोऽकामकारे[1] ॥३१॥

"स य एतदेवंविदेवं मन्वान एवं पश्यन् न कामचरितं चरेन्न कामं भक्षयीत न काममनुवर्तेत" इति कौण्डिन्यश्रुतौ ।

अत इत्यल्पफलत्वं सूचयति ।

"न निषिद्धानि वर्तेत पूर्णज्ञानफलेच्छया" इति च पाद्मे[2] ॥*॥

## ॥ विहितत्वाच्चाऽश्रमकर्मापि ॥३२॥

न[3] केवलनिषिद्धाकरणेन पूर्यते । कर्तव्यं च वर्णाश्रमविहितं कर्म ।

"पश्यन्नपीममात्मानं कुर्यात् कर्माविचारयन् । यदात्मनः सुनियतमानन्दोत्कर्षमाप्नुयात्" इति कौषारवश्रुतौ विहितत्वाच्च ।

अपिशब्दो वर्णधर्मसमुच्चयार्थः ॥*॥

## ॥ सहकारित्वेन च ॥३३॥

"यथा राज्ञः सहकार्येव मन्त्री तथाऽप्यृते तं क्षितिपः कार्यमृच्छेत् । एवं ज्ञानं कर्म

अनुव्याख्यानम्

दयश्चैव विशेषान् ब्रह्मणि स्थितान् । उमादिभिः प्रबुद्धेभ्यः शतांशानेवं[4] चक्षते ॥८२॥ इत्यादिवेदस्मृतिगवचनेभ्यो यथार्थतः । तारतम्यं विमुक्तानां[5] साधनानां च दृश्यते ॥८३॥ साध्यसाधनवैरूप्यमदृष्टं केन कल्प्यते । वैषम्यं निर्घृणत्वं च तेन स्यातां परस्य च । सापेक्षत्वादिति च तौ विद्याधीशेन वारितौ ॥८४॥ तारतम्यात् साधनानां साध्यतादृक्त्वमीशतः । अवैषम्यादिहेतुः स्यात् सदैव परमेश्वरे ॥८५॥ स्वातन्त्र्ये विद्यमानेऽपि साधनादौ परेशितुः । अपेक्ष्यानादिवैचित्र्यं न दोष इति तद्वचः । नानादित्वादिति ह्युक्तमुपपद्यत इत्यपि ॥८६॥ अपेक्ष्योपायवैषम्यमुपेयस्य तथा स्थितिः । मया कया विरुद्धा स्याद् राजादावपि दृश्यते ॥ ॥८७॥ त्यागो दृष्टस्य चादृष्टकल्पनेति सुदुष्करौ । मायिभ्योऽन्येन केनापि तत् किमन्यैश्च वादिभिः ॥८८॥ मायिनोऽत्रानुगम्यन्ते श्रुतहान्यश्रुतग्रहौ । अन्यत्र मायिनां लिङ्गे तत् के दोषास्ततोऽधिकाः ॥८९॥ निश्शेषगतदोषाणां बहुभिर्जन्मभिः पुनः । स्याद्वापरोक्ष्यं हि हरेर्द्वेषेर्ष्यादिस्ततः कुतः ॥९०॥ भवेयुर्यदि चेर्ष्याद्याः समेष्वपि कुतो न ते । तप्यमानाः समान् दृष्ट्वा द्वेषेर्ष्यादियुता अपि । दृश्यन्ते बहवो लोके दोषा एवात्र कारणम् ॥ ९१ ॥ यदि निर्दोषता तत्र किमाधिक्येन दूष्यते । यद्यन्यदर्शनाभावादीर्ष्यादिर्विनिवार्यते । अदर्शनादरत्यादिः कथं तेन निवार्यते ॥ ९२ ॥ ब्रह्मणोऽप्यरतिर्दृष्टा पूर्वमेकाकिनः श्रुतौ । नैव रेमे स चैकाकी तस्मान्न रमते क्वचित् । द्वितीयमैच्छत् तेनासाविति श्रुतय ऊदिरे ॥९३॥ यदीच्छा तत्र नैवास्तीत्येवं[6] तत् कल्प्यते मृषा । श्रुत्युक्तनिर्दोषतैवं[7] किं

---

१ "अकामचारे" इति प्र. सूत्रपाठः । २ "इति पाद्मे" ३ "न केवलम्" इति प्र. पाठौ । ४ "शतांशेन विचक्षते" इति क्वचित् पठ्यते । ५ "च मुक्तानाम्" ६ "नैव तत्रास्तीत्येव" ७ "निर्दोषतैवम्" इति प्र. पाठाः ।

भाष्यम्

विनाऽपि कार्यं सहायभूतं न विचारः कुतश्चित्" इति कमठश्रुतौ सहकारित्वोक्तेश्च। "ज्ञानान्मोक्षो भवत्येव सर्वाकार्यकृतोऽपि तु। आनन्दो ह्रसतेऽकार्याच्छुभं कृत्वा[1] च वर्धते" इति च [2]ब्रह्माण्डे। "सर्वदुःखनिवृत्तिस्तु ज्ञानिनो निश्चितैव हि। उपासया कर्मभिश्च भक्तया चाऽनन्दचित्रता" इति च [3]बृहत्तन्त्रे। "धर्मस्वरूपचित्रत्वाद् यो यो देवमनोगतः। स एव धर्मो विज्ञेयो नह्येते लोकसम्मिताः" इति च पाद्मे ॥*॥

॥*॥ इति तृतीयम[4]धिकरणम् ॥*॥

## ॥ सर्वथाऽपि तु त एवोभयलिङ्गात् ॥३४॥

सर्वप्रकारेणोत्साहेऽपि ये ज्ञानयोग्यास्त एव ज्ञानं प्राप्नुवन्ति नान्ये।

"य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" इति श्रुत्याचार्योपदेशसाम्येऽपि विरोचनो विपरीतज्ञानमापेन्द्रः सम्यग्ज्ञानमित्युभयविधलिङ्गात् ॥*॥

अनुव्याख्यानम्

नाङ्गीक्रियते स्वयम् ॥९४॥ तारतम्यं च कामं च श्रुतमेवातिहाय तु। अश्रुता समता केन कल्प्यते युक्तिमानिना ॥९५॥ किं तन्मानं समत्वे ते मुक्तानामुपलभ्यते। वृथाऽयमाग्रहः केन श्रुतहान्यश्रुतग्रहे ॥९६॥ मोक्षेऽपि तारतम्येतश्चेतनत्वात् पुरा यथा[5]। इत्युक्त उत्तरं किं ते कल्पनामात्रवादिनः ॥९७॥ नच दुःखादिकं कल्प्यं निर्दुःखत्वश्रुतेर्बलात्। शोकं तरत्यात्मवेत्ता तीर्णः सर्वानदुःखभाक् ॥९८॥ येनाऽनन्द्येव भवति न शोचति कदाचन। किल्बिषस्पृत् पितुषणिररं हित इहेश्वरः ॥९९॥ यं यमन्तमभिप्रेप्सुः स सङ्कल्पाद् भवेदिह। इत्यादिश्रुतयो मानं निर्दुःखत्वादिसम्पदि ॥१००॥ अतो दुःखाद्यनुमया नावकाशोऽत्र लभ्यते। तारतम्यानुमा तेन[6] भवेन्नातिप्रसङ्गिनी ॥१०१॥ श्रुतियुक्तिब[7]लादेवं तारतम्यं विभाव्यते। मुक्तावपि ततः केऽत्र विरोधं कर्तुमीशते ॥१०२॥*॥ अनादियोग्यतां चैव कलिवाणीश्वरावधिम्। को निवारयितुं शक्तो युक्त्यागमबलोद्धताम्॥१०३॥ब्रह्मणोऽन्यत आधिक्ययुक्तः कालो विवादवान्। कालो ह्ययं यथेत्यादि माऽनुमामानिनो भवेत् ॥१०४॥ अन्यशब्दो हरिश्रीस्वसमेभ्योऽन्यविवक्षया। प्रयुक्तो नैव दोषाय रुद्रादिषु च युक्तितः ॥१०५॥ उत्तमत्वं तु मुक्तानामपि न ब्रह्मणो भवेत्। व्यक्तिः सुखस्य तु भवेन्नत्वाधिक्यं सुखस्य च ॥१०६॥ बलज्ञानाधिकत्वं [8]च ते[9]भ्यो हि ब्रह्मणः सदा। आधिक्यस्य त्वनित्यत्वे न किञ्चिन्मानमीयते ॥१०७॥ शृण्वे वीर उग्रमुग्रं दमायन्नन्यमन्यमतिनेनीयमानः। एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान् ॥१०८॥ परा पूर्वेषां सख्या वृणक्ति वितर्तुराणो अपरेभिरेति। अनानुभूतीरवधून्वानः पूर्वीरिन्द्रः शरदस्ततरीति ॥१०९॥ दिवेदिवे सदृशीरन्यमर्धं कृष्णा असेधदप सद्मनो जाः। अहन् दासा वृष[10]भो

---

१ "कृत्वा तु" २ "इति ब्रह्माण्डे" ३ "इति बृहत्तन्त्रे" इति प्र. पाठाः। ४ प्र. पाठेऽत्र चतुर्थमधिकरणम्। ५ "यथा पुरा" ६ "तस्मात्" ७ "—बलादेव" ८ "—अधिकत्वं तु" इति प्र. पाठाः। ९ "तेभ्योऽपि" इति क्वचित् प्राचीनपाठः। १० मूलकोशे "वृषभः" इति न पठ्यते। स्फुटं स्खलनम्।

भाष्यम्

॥ अनभिभवं च दर्शयति ॥३५॥

"दैवीमेव सम्पत्तिं देवा अभिगच्छन्त्यासुरीमेव चासुरा नैतयोरभिभवः[1] कदाचित् स्वभाव एव ह्यवतिष्ठन्ते" इति स्वभावानभिभवं च दर्शयति ॥*॥

॥ अन्तरा चापि तु तद्दृष्टेः ॥३६॥

सम्यग्ज्ञानविपरीतज्ञानयोरन्तरा स्थितानामपि देवासुरभावयोर्दार्ढ्यदृष्टेः ॥*॥

॥ अपि स्मर्यते ॥३७॥

"असुरा आसुरेणैव स्वभावेन च कर्मणा। ज्ञानेन विपरीतेन तमो यान्ति विनिश्चयात्। देवा दैवस्वभावेन कर्मणा चाप्यसंशयम्। सम्यग्ज्ञानेन परमां गतिं गच्छन्ति वैष्णवीम्। नानयोरन्यथाभावः कदाचित् क्वापि विद्यते। मानुषा मिश्रमतयो विमिश्रगतयोऽपिच" इति स्कान्दे ॥*॥

॥ विशेषानुग्रहं च ॥३८॥

"शृण्वे वीर उग्रमुग्रं दमायन्नन्यमन्यमतिनेनीयमानः। एधमानद्विळुभयस्य राजा

अनुव्याख्यानम्

चस्नयन्तोद्व्रजे वर्चिनं शम्बरं च ॥११०॥ तं भूतिरिति देवा उपासाञ्चक्रिरे ते बभूवुस्तस्माद्धा-प्येतर्हि सुप्तो भूर्भूरित्येव प्रश्वसित्यभूतिरित्यसुरास्ते ह पराबभूवुः॥१११॥ तद् यथा पेशस्करी पेशसो मात्रामपादाया[2]न्यन्नवतरं कल्याणतरं रूपं तनुत एवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वाऽन्यन्नवतरं कल्याणतरं रूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वान्येषां वा भूतानाम्[3] ॥११२॥ प्रयान्ति परमां सिद्धिमैहिकामुष्मिकीं द्रुतम्। या न प्राप्याऽसुरैः सर्वैरक्षर्या[4] क्लेशवर्जिता। न तां गतिं प्रपद्यन्ते विना भागवतान् नरान्॥११३॥अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्। परं भावमजानन्तो मम भूतमहेश्वरम् ॥११४॥ मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः। राक्षसीमासुरीं चैव प्रकृतिं मोहनीं[5] श्रिताः ॥११५॥ महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः। भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥११६॥ अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः। दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ ॥११७॥ अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम्। दया भूतेष्वलोलुत्वं[6] मार्दवं ह्रीरचापलम्। ॥११८॥ तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता। भवन्ति सम्पदं दैवीमभिजातस्य भारत ॥११९॥ डम्भो दर्पोऽतिमानश्च[7] क्रोधः पारुष्यमेव च। अज्ञानं चाभिजातस्य पार्थ सम्पदमासुरीम् ॥१२०॥ मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः। तानहं द्विषतः क्रूरान् संसारेषु नराधमान्। क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥१२१॥ आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि। मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ १२२ ॥

---

१ "नैवैतयोरभिभवः" २ "मात्रामुपादाय" ३ "अन्येषां भूतानाम्" ४ "अक्षय्या" ५ "मोहिनीम्" इति प्र. पाठः। ६ "अलोलुप्त्वम्" इति क्वचित् पठ्यते। ७ "दम्भो दर्पोऽभिमानश्च" इति प्र· पाठः।

भाष्यम्

चोष्क्रूयते विश इन्द्रो मनुष्यान्" इति विशेषानुग्रहं च दर्शयति देवेषु परमेश्वरस्य। " असुरान् दमयन् विष्णुः स्वपदं च सुरान् नयन्। पुनःपुनर्मानुषांस्तु सृतावावर्तयत्यसौ " इति च भविष्यत्पर्वणि[1] ॥*॥

॥ अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥३९॥

देवभागादसुरभाग एव बहुलः। "तस्मान्न जनमियात्[2]" इति लिङ्गात्। चशब्दात्— " ततः कानीयसा[3] एव देवा ज्यायसा असुराः " इति श्रुतेश्च।

"असुरा बहुला यस्मात् तस्मान्न जनतामियात् " इति च ब्राह्मे ॥*॥

अनुव्याख्यानम्

द्विविधो[4] भूतसर्गोऽत्र दैव आसुर एव च। विष्णुभक्तिपरो दैवो विपरीतस्तथाऽऽसुरः॥ ॥ १२३ ॥ देवानां परमो धर्मः सदा यज्ञादिकाः क्रियाः। स्वाध्यायस्तत्त्ववेदित्वं विष्णुपूजारतिः स्मृतिः ॥ १२४ ॥ दैत्यानां बाहुषाळित्वं[5] मात्सर्यं युद्धसत्क्रिया। नीतिशास्त्रप्रवेदित्वं शिवपूजारतिः स्मृतिः ॥ १२५ ॥ वर्णाश्रमाचारवत्त्वं स्वाध्यायो भक्तिरच्युते। शिवे सूर्ये तथा देव्यां स्वभावो मानुषः स्मृतः ॥१२६॥ अनादिवैष्णवा एव देवतास्तु स्वभावतः। विपरीतास्[6] ततो दैत्याः सदैवानादिकालतः ॥१२७॥ मानुषा मिश्रमतयो विमिश्रगतयोऽपि च[7]। इत्यादिवाक्यसन्दर्भे[8] ज्ञायतेऽनादियोग्यता ॥१२८॥ यद्यनादिर्विशेषो[9] न साम्प्रतं कथमेव सः। अदृष्टादेव चादृष्टं स्वीकृतं सर्ववादिभिः ॥१२९॥ आकस्मिको विशेषश्चेददृष्टे क्वचिदिष्यते। सर्वत्राऽकस्मिकत्वं स्यान्नादृष्टापेक्षता भवेत् । अदृष्टाच्चेद्[10]

१ "इति भविष्यत्पर्वणि इति प्र. पाठः। २ "जनतामियात्" इति प्र. पाठः। जनमियादित्येव वाजसनेयकेऽपि श्रुतिपाठः। ३ "कनीयसाः" इति प्र. पाठः।

४ अत्र मूलकोशयोरेव मूलव्याख्यात्रोरेव पाठे परस्परं विप्रतिपत्तिरिति महदिदमनिर्णयपदम्। तथा हि—हृषीकेशतीर्थीये तावत् "द्विविधो भूतसर्गोऽत्र" इत्येव पठ्यते। पद्मनाभतीर्थभट्टारकाणामपि सम्मतमेतत्। तथाहि सन्न्यायरत्नावळी——"द्विविधो भूतसर्ग इति विष्णुधर्मवचनम्" इति। सुधायामप्येवम्। परन्तु पेजावरमठीये प्रतनतरकोशे "द्वौ भूतसर्गौ भूपात्र" इति पाठः पठ्यते। पण्डिताचार्यसूनुवचनादस्य च प्रामाण्यमवगम्यते। तथाहि नयचन्द्रिका—"द्वौ भूतसर्गौ भूपेति विष्णुधर्मे। देवानामिति वामनपुराणे" इति। तथाऽपि संवादबाहुल्यात् "द्विविधो भूतसर्गोऽत्र" इति पाठ एवात्र समादृतः। ५ "बाहुशालित्वम्" इति प्र. पाठः। इदमत्रावगम्यते—बाहुषाळीति मूलं पदम्। बाहुशालीति तद्भवम्। कथमथ निर्वचनम्? बाहुभ्यां सलति गच्छति शत्रूनिति बाहुषाळी। षळ गताविति धातुपाठः। अत एव सर्वत्र तात्पर्यनिर्णयादिषु बाहुषाळीत्येवासकृत् प्रयोगः। न क्वचिदपि बाहुशालीति। ६ "विपरीताः स्मृताः" इति प्र. पाठः। ७ यद्यपि प्राचीनकोशे "मिश्रगतयो विमिश्रमतयोऽपिच" इति पठ्यते। तथाऽपि भाष्यानुसारेण मिश्रमतय इत्यादिरेव पाठः। साधीयानिति भाति। प्र. पाठ एव कोशान्तराणामपि संवादसौलभ्यम्। ८"वाक्यसन्दर्भैः"९"अनादिविशेषः" इति प्र.पाठौ। १० "अदृष्टाच्च" इति प्राचीनपाठः। तत्पक्षे यदीत्युपस्कर्तव्यम्।

भाष्यम्

॥ तद्भूतस्य तु तद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ॥४०॥

असुरजातेरेवासुरत्वं देवजातेरेव देवत्वं जैमिनेरपि सिद्धमेव।

"नासुरा दैवीं न देवा आसुरीं न मनुष्या दैवीमासुरीं च गतिमीयुरात्मीयामेव जातिमनु भवति[1]" इति नियमश्रुतेः। "नासुराणां दैवं रूपं न देवानामासुरं नचोभयं मनुष्याणां यो यद्रूपः स तद्रूपो निसर्गो ह्येवैष[2] भवति" इत्येतद्रूपत्वश्रुतेः। "तं भूतिरिति देवा उपासाञ्चक्रिरे ते बभूवुस्तस्माद्धाप्येतर्हि सुप्तो भूर्भूरित्येव प्रश्वसित्यभूतिरित्यसुरास्ते ह परा बभूवुः" इति देवासुराणां भावाभावश्रुतेश्च। "देवानां भूतिरित्येव मनो विष्णौ स्वभावतः। असुराणामभूतित्वेनैतन्नेयमतोऽन्यथा। देवाः शापाभिभूतत्वात् प्रह्लादाद्या बभूविरे। अतः सुगतिरेतेषां नान्यथा व्यत्ययो भवेत्" इति चाध्यात्मे ॥*॥

॥*॥ इति चतुर्थमधिकरणम्[3] ॥*॥

अनुव्याख्यानम्

विशेषोऽयमनादित्वं कुतो न तत् ॥१३०॥ नचान्यभेदवद् विष्णौ भेदस्तद्दर्शिनामपि। दृश्यते प्रत्यभिज्ञैत्र बहुरूपेषु दृश्यते ॥१३१॥ बहुत्वं च विशेषेण न भेदेन कथञ्चन। प्रत्यभिज्ञा च येषां न तेऽपि तन्मुग्धदृष्टयः ॥१३२॥ भेदं नैव प्रपश्यन्ति भेदमन्येभ्य एव च। पश्यन्त्येवं हरिस्तेषां सन्दर्शयति नान्यथा ॥१३३॥ एवं बृहत्संहितायां वचनं न पुराणगम्। लोकदर्शनवाद्येव वेदरोधाय शक्नुयात् ॥१३४॥ अपरीक्षितदृष्टिश्च परीक्षापूर्वदर्शनम्। निषेद्धुं शक्नुयात् क्वापि देवदत्तादिदृष्टिवत् ॥१३५॥ नच निश्चितभेदस्य दर्शनेऽस्ति पुराणगम्। वाक्यं कचिद्धि सम्मुग्धदर्शनं[4] तत्र गम्यते ॥१३६॥ अपरीक्षितमेवात्र वेधादिकमधीशितुः। परीक्षादर्शने नैव दृश्यते केनचित् क्वचित् ॥१३७॥ निर्दोषमेव तं ब्रह्मा ददर्शाशेषरूपिणम्। निर्दोषमेव रुद्रोऽद्राङ् निर्दोषं तं पुरन्दरः॥१३८॥ निर्दोषाण्यस्य रूपाणि दृष्टान्येवं सुरोत्तमैः। अन्ये सदोषाः सर्वेऽपि निर्दोषो हरिरेकलः। इति बर्कुश्रुतेश्चैव[5] सदोषं नास्य दर्शनम् ॥१३९॥ अविद्धो विद्धवद् विष्णुरजातो जातवन्मृषा। अबद्धो बद्धवच्चैव दर्शयत्यमितद्युतिः। इति पैङ्गिश्रुतिश्चैव प्राह निर्दोषतां हरेः ॥ १४० ॥ अपरीक्षितदृष्ट्यैव सदोषो दृश्यते हरिः। परीक्षादर्शने नैव दृश्यो दोषो[6] हरेः क्वचित्। इति पैङ्गिश्रुतिश्चाऽह प्रमाणं हि परीक्षितम् ॥ १४१ ॥ न परीक्षानवस्था स्यात् साक्षिसिद्धे त्वसंशयात्। मानसे दर्शने दोषाः स्युर्नैवे साक्षिदर्शने। सुदृढो निर्णयो यत्र ज्ञेयं तत्

---

१ "भवन्ति" इति प्र. पाठः। प्राचीनपाठे—आत्मीयामेव जातिमनुसृत्य गतिर्भवतीति व्याख्येयम्। २ "ह्येषः" इति प्र.पाठः। ३ प्र. पाठेऽत्र पञ्चममधिकरणम्। ४ "सम्मुग्धं दर्शनम्" ५ "बर्कश्रुतेश्चैव" ६ "नैव दोषो दृश्यः" इति प्र. पाठाः।

भाष्यम्

## ॥ नचाऽधिकारिकमपि पतनानुमानात् तदयोगात् ॥४१॥

नच परमात्मैश्वर्यादिकमाकाङ्क्ष्यम्। ब्रह्मादीनामपि नाऽऽकाङ्क्ष्यं किमु परस्येति सूचयितुमपि-शब्दः। चशब्दस्तु ज्ञानार्थिनां पूर्वोक्तादित्थम्भावान्तरसूचकः। अयोग्यमारो[1]ड्ढुं प्रयतन् पतन् हि दृश्यते। एवमयोग्यस्य परमात्मैश्वर्यस्य ब्रह्मादिपदस्य वाऽऽकाङ्क्षायां[2] पतनमनुमीयते।

"न देवपदमन्विच्छेत् कुत एव हरेर्गुणान्। इच्छन् पतति पूर्वस्मादधस्ताद् यत्र नोत्थितिः" इति ब्रह्माण्डे। "स्वकीयमिच्छमानं तु राजाद्याः पातयन्ति हि। एवमेव सुराद्याश्च हरिश्च स्वपदे[3]च्छकम्" इत्याद्यनुमानरूपवाक्याच्च। "मायाभिरुत्सिसृप्सत इन्द्र द्यामारुरुक्षतः। अव दस्यूँरधूनुथाः" इति च श्रु[4]तिः ॥*॥

अनुव्याख्यानम्

साक्षिदर्शनम् ॥१४२॥ इच्छा ज्ञानं सुखं दुःखभयाभयकृपाद[5]यः। साक्षिसिद्धा न कश्चिद्धि तत्र संशयवान् क्वचित्। यत् क्वचिद् व्यभिचारी स्याद् दर्शनं मानसं हि तत् ॥१४३॥ मनश्चक्षुर्दर्शनादेरपि यत्रैव साक्षिणा। प्रामाण्यं सुगृहीतं स्यात् तत् परीक्षितदर्शनम् ॥१४४॥ न ज्ञानदृष्टिमात्रेण प्रामाण्यं तस्य दृश्यते। नियमेन सुखाद्येषु प्रामाण्यं साक्षिगोचरम् ॥१४५॥ स्वप्रामाण्यं सदा साक्षी पश्यत्येव सुनिश्चयात्। ज्ञानस्य ग्राहकेणैव साक्षिणा मानतामितेः ॥ ॥१४६॥ दोषाभावे प्रमाणत्वं दोषाभावस्य साक्षिणा। निश्चितत्वं क्वचिच्चैव स्वतः प्रामाण्य-मिष्यते ॥१४७॥ अतो न सर्वमानानां प्रामाण्यं निश्चितं भवेत्। साक्षिणा निश्चितं यत्र तत् प्रामाण्यस्वलक्षण[6]म् ॥ १४८ ॥ नहि कश्चित् सुखाद्येषु संशयं कुरुते जनः। नचैवाखिलमानानि निश्चिनोत्यखिलो जनः ॥ १४९ ॥ तस्मादनुभवारूढं किमर्थमपलप्यते। दोषाभावादिकं चैव साक्षी सम्यक् प्रपश्यति ॥ १५० ॥ तत् परीक्षितमानेन न दोषो विष्णवि[7] क्वचित्। अपरीक्षितदृष्टिस्तु कस्मिन्नर्थे न विद्यते ॥ ॥ १५१ ॥ तत् प्रत्यक्षविरुद्धार्थे नागमस्यापि मानता। उपजीव्यमक्षजं यत्र तदन्यत्र विपर्ययः॥१५२॥ लौकिके व्यवहारेऽत्र प्रत्यक्षस्योपजीव्यता। अवतारादिदृष्टौ स्यादागमस्योप-जीव्यता॥१५३॥ आगमेन हि विष्णुत्वं ज्ञात्वा दोषोऽत्र कल्प्यते। न चेत् स्यात् दोषवानन्यः

---

१ **"अयोग्यमारोढुम्"** इति प्र. पाठः। "ढो ढे लोपः" इति सूत्रमविवक्षित्वा "आरोड्ढुम्" इत्युक्तम्। यथा "नहो धः" इत्येतदविवक्षया "उपानडादीनाम्" इति। २ **"चाऽऽकाङ्क्षायाम्"** ३ **"स्वपदेच्छुकम्"**. ४ **"इति श्रुतिश्च"** ५**"दुःखं भयाभयकृपादयः"** इति प्र. पाठः। प्राचीनकोशेष्वपि क्वचित्। ६ **"प्रामाण्यं स्वल-क्षणम्"** इति प्र. पाठः। एतदनुसारेण यत् सुधावचनम्—"प्रामाण्यं स्वलक्षणं प्रामाण्यस्वरूपम्" इति तदपि लिपिकृतां प्रमाद एव। "प्रामाण्यस्वलक्षणं प्रामाण्यस्वरूपम्" इत्येव पठनीयम्। अर्थस्वारस्यात्। ७ अत्र नयचन्द्रिका– "विष्णवीत्यत्र ङेरौदादेशाभावस्तु "यत् सोममिन्द्र विष्णवि" (ऋ.८-१२-१६) इत्यादिवदुपपद्यते। कथं वेदद्रष्टृणामुचितो वैदिकप्रयोगोऽत्र वर्तत इति च नाऽऽशङ्कनीयम्। करतळविलसितमहामाणिक्य-वदनाद्यनन्तकालमनाद्यनन्तवेदानवलोकयतः सर्वलोकगुरोः श्रुतिपतिभगवत्तमशिष्यसत्तमसमितिचूडामणेर्महाव्याकरण-सिद्धां वैदिकीं लौकिकीं च भङ्गीं प्रकाशयतो मध्वदेवस्यैवंविधाः प्रयोगा युज्यन्त एव" इति।

भाष्यम्

॥ उपपूर्वमपीत्येके भावशमनवत् तदुक्तम् ॥४२॥

उपदेवपदं च नापेक्ष्यमित्येके[1]। भावशमनवत्, ऋषिपदवदेव। तच्चोक्तमिन्द्रद्युम्नश्रुतौ—

"यथर्षीन् प्रजापतीन् न काङ्क्षेदेवं[2] न गन्धर्वान् न विद्याधरान् न सिद्धान्" इति।

बृहत्संहितायां च—

"न देवानभिकाङ्क्षेत कुत एव हरेर्गुणान्। प्राजापत्यान् नचाऽर्षांश्च गान्धर्वादीनपि क्वचित्। ऋष्यादिषु विशेषे तु दोषो नैवाविशेषितैः[3]" इति विशेषदर्शनार्थमेक इत्युक्तम् ॥*॥

अनुव्याख्यानम्

शास्त्रसिद्धं हि लक्षणम् ॥१५४॥ कस्यचिद् दोषवत्त्वं स्यादितिमात्रेऽक्षजं भवेत्। न विष्णोर्दोषवत्त्वे हि प्रत्यक्षं वर्तते स्वतः ॥१५५॥ केचित् पश्यन्ति दोषानित्यत्रापि स्यान्नचाक्षजम्। पौराणं वाक्यमेवात्र तच्छ्रुत्यैव विरुद्ध्यते ॥१५६॥ पुराणस्योपजीव्यश्च वेद एव नचापरः। तद्विरोधे कथं मानं तत् तत्र च भविष्यति ॥१५७॥ अपरीक्षितदृष्टिश्च कथमेवाक्षजं भवेत्। यद्येवं देवदत्तादिभ्रमः किं नाक्षजं भवेत् ॥१५८॥ यावच्छक्ति परीक्षायामुपजीव्यस्य बाधने। दोषो नाशोधिते दोष उपजीव्यत्वमस्त्वलम् ॥१५९॥ भ्रमेऽप्यभ्रमभागोऽस्ति तन्मात्रमुपजीव्य हि। बाधकज्ञानवृत्तिः स्यान्नचैवं सुपरीक्षिते। सर्वं तदुपजीव्यैव प्रमाणं वर्तते यतः ॥१६०॥ कथं ब्रह्मेति तज्ज्ञेयं सर्वज्ञत्वादिलक्षणम्। विहाय यस्मात्कस्माच्चित् स्वरूपस्यैव चेद् यदि ॥ ॥१६१॥ उपजीव्यत्वमेतस्माद् व्यावृत्तं यावता भवेत्। तावतैवोपजीव्यत्वं स्वरूपस्यैव न क्वचित् ॥१६२॥ सर्वलक्षणयुक्तं तु[4] स्वरूपं यदि भण्यते। अस्तु नो नैव हानिः स्यात् स्वपक्षश्चायमञ्जसा ॥१६३॥ यस्मादन्वित एवार्थः शब्दानामपि सर्वशः। विशेषसामान्यतया स्वरूपमखिलं भवेत् ॥१६४॥ पुरोवर्तित्वपूर्वाणि देवदत्तादिकभ्रमे। व्यावर्तयन्ति तद्रूपं चैत्रमात्राद् विनैव हि[5] ॥१६५॥ ब्रह्मणो निर्विशेषत्वाद् व्यावर्तयति किं पुनः। यस्मात्कस्माच्चिदप्यर्थात् तावच्चेत् सिद्धसाधनम् ॥१६६॥ चिन्मात्रत्वं च नैवेष्टमविशेषत्ववादिनः। तावन्मात्रं यदीष्टं स्यात् सर्वज्ञत्वं कुतो न तत् ॥१६७॥ चिन्मात्राभेदसाध्येऽपि सिद्धं तत् प्रतिवादिनः। स्वाभेदाङ्गीकृतेरेव चित्त्वं स्वस्यापि यन्मतम् ॥१६८॥ सर्वापेक्षतया सर्वज्ञत्वमित्येव तन्नहि। इति चेच्चेतनत्वं च ज्ञत्वं न ज्ञेयवर्जितम् ॥१६९॥ स्वज्ञेयत्वं च नैवासौ मन्यते सविशेषतः। स्वशब्दोऽपि परापेक्षस्तस्माद् व्यावृत्तिरेव हि। स्वशब्दार्थ इति प्रोक्तः स्वरूपं नाम किं न चेत् ॥१७०॥ रूपशब्देन पूर्णत्वात् तच्च सामान्यतावचः। न स्वरूपाभिधायि स्याद् वैयर्थ्यं स्वरवस्य[6] यत् ॥१७१॥ चेतनस्य स्वभावो हि चैतन्यमिति गीयते। तस्माद् विशेषबाहुल्यं चैतन्यस्य विशेषतः॥१७२॥ न ज्ञेयज्ञातृहीनं हि ज्ञानं नाम क्वचिद् भवेत्। ज्ञेयज्ञानविहीनश्च ज्ञ इत्यत्र च न प्रमा[7] ॥१७३॥ ज्ञातृज्ञेयविहीनं च ज्ञानं चेद् भोक्तृभोज्यतः[8]। हीनं भोजनमेव

---

१ "नाऽकाङ्क्ष्यमित्येके" इति प्र. पाठः। २ "नाऽकाङ्क्षेदेवम्" इति क्वचित्। ३ "नैवाविशेषतः" ४ "युक्तं च" ५ "विनैव तु" इति प्र. पाठाः। ६ "स्वपदस्य" इति प्र. पाठः। अर्थस्त्वविशिष्टः। ७ "नच प्रमा" ८ "भोक्तृभोग्यतः" इति प्र. पाठौ।

भाष्यम्

॥ बहिस्तूभयथाऽपि स्मृतेराचाराच्च ॥४३॥

देवर्षिगन्धर्वादिपदेभ्योऽन्यत्र शुभविषय आकाङ्क्षायामनाकाङ्क्षायां च न पतनम् ।

"देवर्षिगन्धर्वाणां पदाकाङ्क्षः[1] पतेद् ध्रुवम् । अन्यत्र शुभमाकाङ्क्षन् न पतेदविरोधतः" इति स्मृतेः । "नानात्वमेव कामानां नाकामः क्वच दृश्यते । अतोऽविरुद्धकामः स्यादकामस्तेन भण्यते" इत्याचाराच्च ॥*॥

॥*॥ इति पञ्चममधिकरणम्[2] ॥*॥

अनुव्याख्यानम्

स्यात् ताडनं कर्तृताडयतः ॥१७४॥ नित्यत्वात् तादृशं च स्यादिति चेन्नित्यवागपि । वाच्यवक्तृविहीना स्यान्नहि सा चैव तादृशी ॥१७५॥ द्रष्टारो वेदवाचो हि सन्ति वाच्यानि चाञ्जसा । नित्यो द्रष्टा च वाच्यश्च भगवानेव च स्वयम् ॥१७६॥ नहि वक्तृविहीना च वाच्यहीना[3]ऽपि वाक् क्वचित् । ज्ञातृज्ञेयविहीनं च ज्ञान[4]मेवं न तद् भवेत् ॥१७७॥ नहि नित्योऽपि वक्ताऽस्ति वाक्यवाच्यविवर्जितः । ज्ञानज्ञेयविहीनश्च ज्ञोऽप्येवं नैव विद्यते ॥१७८॥ किञ्च सर्वविलोपश्च केन मानेन गम्यते । सर्वेण सह तद् वाक्यमर्थश्च यदि गृह्यते । तदभावेन सर्वस्य नापलापो भवेत् तदा ॥१७९॥ न गृह्यते चेद् तन्न्यायादपलापो नहि क्वचित् । उपपत्तिविहीनस्य वाक्यस्यार्थो न गम्यते ॥१८०॥ उपक्रमादिलिङ्गानां बलीयो ह्युत्तरोत्तरम् । श्रुत्यादौ पूर्वपूर्वं च ब्रह्मतर्कविनिर्णयात् ॥१८१॥ प्रत्यक्षमुपपत्तिश्च बहवश्चाऽऽगमा यदा । विरुद्ध्यन्ते नचार्थोऽस्ति यत्र लिङ्गविरोधिता ॥१८२॥ स एवार्थः कथं ग्राह्य उपपन्नेऽविरोधिनी । मुख्यार्थे विद्यमाने तु क्व सार्वज्ञ्यं निषिद्ध्यते ॥१८३॥ अतः सर्वगुणैर्युक्तं ब्रह्माङ्गीकार्यमेव हि । अपलापोऽपि सर्वस्य न कथञ्चन युज्यते ॥१८४ अनादियोग्यता चोक्ता तेन ग्राह्यै[5]व सर्वथा । मुक्तानां तारतम्यं च मानैरुक्तैर्न चाल्यते ॥१८५॥ ज्ञानिनोऽपि यतो नित्यं कुर्वन्ति शुभमेव हि । तारतम्यं तु मुक्तौ च तेनैवाध्यवसीयते ॥१८६॥ तारतम्यं न चेन्मुक्तौ कुतः कुर्युः शुभं पुनः । कृच्छ्रेणापि तपो ज्ञानं कर्माण्येते चरन्ति हि ॥१८७॥ बिभ्यति स्माशुभान्नित्यं सकामाश्च शुभे सदा । नच स्वभाव एवायं भयपूर्वप्रवृत्तितः । कृच्छ्रेणाऽऽचरणाच्चैव शुभस्यैव पुनः पुनः ॥ ॥१८८॥ तादृशोऽपि स्वभावश्चेदज्ञस्यापि भवेत् तथा । फलवत्त्वे प्रमाणं चेत् तत्र ज्ञस्य समं हि तत् ॥१८९॥ निष्कामं ज्ञानपूर्वं च निवृत्तमिह चोच्यते । निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम् ॥१९०॥ शुभेनाऽऽनन्दवृद्धिः स्याद्ध्रासश्चैवाशुभेन हि । ज्ञानिनोऽपि यतस्तेन कर्तव्यं शुभमेव तैः ॥१९१॥ उपास्ते स य आत्मानं क्षीयते नास्य कर्म ह[6] । अस्माद्ध्येवाऽऽत्मनो यद्यत् कामयेत् सृजते च तत् ॥१९२॥ अविद्वान् बहुकर्माऽपि ह्यन्तवत् फलमाप्नुयात् ।

---

१ "पदाकाङ्क्षी" इति प्र.पाठः। २ प्र. पाठेऽत्र षष्ठमधिकरणम् । ३ "वाच्यहीना च" इति क्वचित् पाठः । ४"ज्ञानमेव" इति प्र.पाठः। ५ "ग्राह्या हि" इति क्वचित् पठ्यते। ६ "कर्म हि" इति प्र. पाठः । "न ह्यस्य कर्म क्षीयते" इति श्रुत्यानुगुण्याय "कर्म ह" इत्येव पठनीयम् ।

अनुव्याख्यानम्

यदेव विद्यया कुर्यात् तदेव ह्यतिवीर्यवत् । इत्यादिवाक्यसामर्थ्यात् तारतम्यं विमुक्तिगम् ॥ ॥१९३॥नचात्रोपासकस्यैव फलमक्षयमुच्यते । नहि ज्ञानं विना क्वापि फलस्याक्षयता भवेत्। ज्ञानद्वारेण चेत् तस्य नास्मत्पक्षप्रतीपता॥१९४॥ ज्ञानोत्तरस्यैवमपि ह्यक्षयत्वं नचान्यथा । पूर्वभाविशुभानां हि ज्ञानेनैव कृतार्थता ॥१९५॥ प्रारब्धानां तु भोगेन तज्ज्ञानोत्तरकर्मणाम् । मुक्तावनुप्रवेशः स्यादन्यथा तत्कृतिर्नहि॥१९६॥ ज्ञानात् पूर्वाणि सर्वाणि[1] शुभानि ज्ञानसिद्धये। अकाम्यानि निषिद्धानि ज्ञानरोधाय भुक्तये॥१९७॥योग्यताया बलाद् यच्च शुभबाहुल्यमादितः। ज्ञानबाहुल्यमेवैतत् कुर्यान्नान्यस्य कारणम् ॥१९८॥ ज्ञानस्य भक्तिभागत्वाद् भक्तिर्ज्ञान-मितीर्यते । ज्ञानस्यैव विशेषो यद् भक्तिरित्यभिधीयते ॥१९९॥ परोक्षत्वापरोक्षत्वे विशेषौ ज्ञानगौ यथा । स्नेहयोगोऽपि तद्वत् स्याद् विशेषो ज्ञानगोऽपरः ॥२००॥ इत्यभिप्रायतः प्रायो ज्ञानमेव विमुक्तये । वदन्ति श्रुतयः सोऽयं विशेषोऽपि ह्युदीर्यते ॥२०१॥ भक्तिर्ज्ञान-मिति क्वापि नहि द्वेषयुता दृशिः । पुरुषार्थाय भवति सर्वश्रुतिविरोधतः ॥२०२॥ चेतनस्य द्वयं भोग्यं संसारो मुक्तिरेव च । संसारस्त्रिविधस्तत्र स्वर्गो मध्यमधस्तथा ॥२०३॥ मुक्तिश्च द्विविधा तत्र सुखं नित्यं तथाऽपरम् । नित्यदुःखमिति ज्ञेयं साधनं संसृतावपि । काम्यं कर्म निषिद्धं च साज्ञानमिति निश्चयः ॥२०४॥ द्वेषो भक्तिश्च मुक्तौ तु मुक्तिद्वय-विधायकम् । इति पैङ्गिश्रुतेर्द्वेषो नैव सन्मुक्तिकारणम् ॥२०५॥ असन्मुक्तेः कारणं च मुक्ता-वित्यत्र केशवः । मुक्तिशब्दोदितो मोक्षं स्वभक्तानां करोति यत् ॥२०६॥ द्विषतोऽपि[2] विमुक्तिश्चेन्महातात्पर्यरोधनम्[3] । भक्त्या प्रसन्नतो देवान्मुक्तिरित्येव तद्गुणान् । वदन्ति श्रुतयः सर्वाः पुराणान्यागमा अपि ॥२०७॥ यदि द्वेषेण मुक्तिः स्याद् वक्तव्यो दोषसञ्चयः । स्मर्तव्यो भगवान् नित्यमित्यर्थेनैव हि कचित् । द्वेषादिव गुणानाह पुराणे क्रुद्धवाक्यवत् ॥२०८॥ यथा क्रुद्धः पिता पुत्रं मरेत्याक्षेपपूर्वकम् । प्रोक्तस्यान्यस्य कृत्यर्थं वदत्येवं पुराणगम् ॥२०९॥ वाक्यं श्रुतिविरोधेन स्वविरोधेन चाञ्जसा । बह्वागमविरोधाच्च न द्वेषान्मुक्तिवाचकम् ॥२१०॥ तमो द्वेषेण संयान्ति भक्त्या मुक्तिं तथैव च । विष्णौ विष्णुप्रसादेन विलोमत्वेन चाञ्जसा । इति षाड्गुण्यवचनमप्युक्तार्थनियामकम् ॥२११॥ महातात्पर्यरोधे च कथं वाक्यं प्रमाण-ताम् । याति सर्वार्थरूपं हि महातात्पर्यमिष्यते ॥२१२॥ वाचकत्वं हि तात्पर्यं यदर्था अखिला रवाः । सोऽर्थः कथं परित्याज्य एकशब्दस्य संशये । अतो विज्ञानभक्तिभ्यां पुरुषार्थः परो भवेत् ॥२१३॥ यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः २१४॥ भक्त्या ज्ञानं ततो भक्तिस्ततो दृष्टिस्ततश्च सा । ततो मुक्तिस्ततो भक्तिः सैव स्यात् सुखरूपिणी ॥२१५॥ भक्त्या प्रसन्नो भगवान् दद्याज्ज्ञानमनाकुलम् । तयैव दर्शनं यातः प्रदद्यान्मुक्तिमेतया ॥२१६॥ नाहं वेदैर्न तपसा न दानेन नचेज्यया । शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥२१७॥ भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥२१८॥ इत्यादिवाक्यतश्चैव सोऽयमुक्तार्थ ईयते । नच प्रसाद-

---

१ "कर्माणि" २ "द्वेषतोऽपि" ३ "-रोधेन" इति प्र. पाठाः ।

भाष्यम्

## ॥ स्वामिनः फलश्रुतेरित्यात्रेयः ॥४४॥

"ब्रह्मविदाप्नोति परम्" इत्यादिफलं स्वामिनां देवानामेव भवति ।

"यदु किञ्चेमाः प्रजाः शुभमाचरन्ति देवा एव तदाचरन्ति यदु किञ्चेमाः प्रजा विजानते देवा एव तद् विजानते देवानां ह्येतद् भवति स्वामी हि फलमश्नुते नास्वामी कर्म कुर्वाणः" इति माध्यन्दिनायनश्रुतेरित्यात्रेयो मन्यते ॥*॥

अनुव्याख्यानम्

मामोति। द्वेषाद् भक्त्या तमाप्नुयात्। इति दृष्टानुसारित्वमप्यस्मिन्नर्थ ईयते ॥२१९॥ ये पृथग् विहिता विष्णोर्गुणा वेदेन सादरम्। त एव दृष्टवैलोम्यादङ्गीकार्या नचापरम् ॥२२०॥ अन्यद् दृष्टानुसारेण वासुदेवेऽपि गृह्यते। दोषाभावाश्च ये वेदैरुदिता अविहाय तान् ॥२२१॥ अनुक्ता अपिच ग्राह्या महातात्पर्यशक्तितः। एवं बृहत्संहितावाक् सिद्धान्तो हि तदीरितः ॥ ॥२२२॥ तारतम्येन तद्भक्तेष्वपि भक्तिर्विनिश्चयात् । कर्तव्यैषाऽपि तद्भक्तिर्लोकवेदानुसारतः॥ ॥२२३॥ यो हि भक्तः प्रधाने स्यात् तदीयेष्वपि भक्तिमान्। दृश्यतेऽसौ नियमतो विपरीतो विपर्यये ॥२२४॥ व्यभिचारो यदि क्वापि भक्तिह्रासोऽत्र कल्प्यते। भक्तिदोषो ह्यसौ यन्न तद्भक्तेष्वपि भक्तिमान् ॥२२५॥ तारतम्येन तेष्वद्धा भक्तिर्दृष्टानुसारतः। विष्णुप्रसादानुसारात् कार्या दोषस्तदन्यथा ॥२२६॥ स्वप्रीत्यनुसृतौ प्रीतिर्लोकेऽप्यद्धैव दृश्यते। तारतम्यपरिज्ञानमप्येतेनैव साधनम् ॥२२७॥ लक्ष्मीविरिञ्चवाणीशगिरिजेन्द्राङ्गिरस्सुताः[1]। सूर्यादयश्च क्रमशो भगवत्प्रीतिगोचराः ॥२२८॥ तेषु भक्तिः क्रमेणैव कार्या नित्यं मुमुक्षुभिः। सर्वेऽपि गुरवश्चैते पुरुषस्य सदैव हि ॥ २२९ ॥ तस्मात् पूज्याश्च नम्याश्च ध्येयाश्च परितो हरिम्। इति षाड्गुण्यवचनादप्येषोऽर्थोऽवसीयते ॥ २३० ॥ हरिभक्तिः क्रमेणैव तदीयेषु हरिस्मृतिः। हरिस्तुतिस्तत्स्मृतिश्च तत्स्तुतिर्हरिपूजनम् ॥ २३१ ॥ तत्पूजाऽविहितैत्याग[2] इति मुक्तेः क्रमेण हि। नियमात् साधनान्येव नित्यसाध्यानि चाखिलैः ॥ २३२ ॥ इति प्रवृत्तवचनं साधनस्य विनिर्णये। प्रवृत्ते पञ्चरात्रे हि साधनस्यातिनिश्चयः[3] ॥ २३३ ॥ हरिद्वेषो न शुभदः सद्द्वेषत्वाद् यथा गुरोः। क्रमाद् भक्तिर्हरिप्रीतिकारणं तत्प्रियोपगा। भक्तिर्यतो यथा स्वस्मिन्नित्याद्या युक्तिरत्र च ॥२३४॥ प्राधान्यतारतम्यानुसारिणी भक्तिरुत्तमा। प्रीतिर्देव हरेर्यस्माद् भक्तिः सा स्वोपगा यथा ॥२३५॥ इति वा ॥*॥ ज्ञानकर्मादिफलं चैषु क्रमोपगम्। स्वातन्त्र्यतारतम्येन फलं हि फलिनां भवेत् ॥२३६॥ अशुभं त्वशुभेऽप्येषां स्वातन्त्र्यात् प्रीतितो हरेः। आज्ञया चान्यगं नैव भोगाय भवति क्वचित् ॥२३७॥ पुण्यमेवामुमाप्नोति न देवान् पापमाप्नुयात्। इत्यादिश्रुतयो मानमुक्तेऽर्थे युक्तयोऽपराः[4] ॥

---

१ "—गिरिजेन्द्रा गिराम्पतिः" इति प्र.पाठः। उभयथाऽपि बृहस्पतिरित्यर्थः। "वाचस्पतिराङ्गिरसो बृहस्पतिः" इति ह्यभिधानम्। २ "तत्पूजा विहितात्यागः" ३ "साधनस्यातिनिर्णयः" इति प्र. पाठौ। ४ तत्त्वदीपिकायाम्—"युक्तयः पराः" इति पठ्यते।

भाष्यम्

॥ आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॥४५॥

सत्रयागेष्वृत्विजामपि फलदर्शनादल्पं फलं प्रजानामपि भवतीत्यौडुलोमिर्मन्यते। तदर्थं देवैः क्रियमाणत्वात् ॥*॥

॥ सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥४६॥

तृतीयः स्वपक्षः। देवानां ज्ञापनादिकर्मणि[1] सहकार्यन्तरत्वेन प्रजा विधीयन्ते। यथा प्रजावतो राज्ञः प्रजाः सहकारित्वेन विधीयन्ते। यथा चाऽऽचार्यस्य[2] शिष्याः। वाराहे च—

"ज्ञानादिदानं देवानां विष्णुना साधु चोदितम्। वेदे च[3] तेषां विहितं तत्राऽऽचार्यो महत्तरः। विहितः सहकारित्वे सहकार्यन्तरं प्रजाः। पात्रत्वेन[4] यथा राज्ञो यथा शिष्या गुरोरपि तस्माच्छ्रुतं फलं तासामाचार्याणां महत्तरम्। ततो महत्तरं प्रोक्तं देवानामुत्तरोत्तरम्" इति ॥*॥

॥*॥ इति षष्ठमधिकरणम्[5] ॥*॥

॥ कृत्स्नभावात्तु गृहिणोपसंहारः ॥४७॥

"कुडुम्बे[6] शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधत्" इत्युक्त्वा "नच पुनरावर्तते नच पुनरावर्तते" इति गृहिणोपसंहारः क्रियते।

तस्माद् गृहस्थस्यैवोत्तमत्वमिति न वाच्यम्। यतः कृत्स्नगृहस्थान् देवानपेक्ष्यैवोपसंहारः क्रियते।

" कृत्स्ना ह्येवं[7] गृहिणो देवाः कृत्स्ना एते[8] यतयोऽत एषां[9] न पुत्रा दायमुपयन्ति नचैते गृहान् विसृजन्त्यरागा अद्वेषा अलोभाः सर्वभोगाः सर्वज्ञाः सर्वकर्तारः" इति हि पौत्रायणश्रुतिः[10] ॥*॥

अनुव्याख्यानम्

॥२३८॥ उपासनाधर्मफलं यतो देहान्तरे स्थितिः। वासुदेवाज्ञया चैव पूर्वकर्मानुसारतः॥
॥२३९॥ प्रेरयन्ति हि ते जीवान् पुण्यपापेषु नित्यशः। अरागद्वेषतश्चैव कथं दोषानवाप्नुयुः॥
॥२४०॥ हर्याज्ञाकरणादेव पुण्यमेभिरवाप्यते। हरिपूजेति चोद्देशात् कथं न शुभमाप्नुयुः॥
॥२४१॥ अतो यथाक्रमं धर्मज्ञानयोः फलमञ्जसा। सर्वप्राणिगतं देवाः प्राप्नुवन्त्या विरिञ्चतः॥
॥२४२॥देवा एव हि देवानां विशिष्टा विनियामकाः। ब्रह्मा त्वखिलदेवानां नराणां च नियामकः।
अतः सर्वगुणानेष प्राप्नोत्यधिकमन्यतः[11] ॥२४३॥ द्रव्यस्वातन्त्र्यविज्ञानप्रयत्नैरधिकं[12] फलम्।

---

१ "ज्ञानादिकर्मणि" २ "वाऽऽऽचार्यस्य" ३ "वेदेषु" इति प्र. पाठाः। ४ "पातृत्वेन" इति प्र॰ पाठः। प्राचीनपाठे ज्ञापनादिकर्मणि पालनादिकर्मणि च पात्रत्वेनेत्यर्थः। ५ प्र॰ पाठेऽत्र सप्तमधिकरणम्। ६ "कुटुम्बी" इति प्र.पाठः। "कुटुम्बे" इति च। ७ "ह्येते" ८ "ह्येते" ९ "एतेषाम्" १० "इति पौत्रायणश्रुतिः" ११ प्राचीनपाठे "अखिलमन्यतः" इति पठ्यते। तत्त्वदीपिकायां बहुषु च कोशेषु "अधिकमन्यतः" इत्येव पाठात् स एवाऽऽदृतः। १२ अत्रापि क्वचित् प्राचीनकोशे "प्रयत्नैरखिलम्" इति पठ्यते।

भाष्यम्

॥ मौनवदितरेषामप्युपदेशात् ॥४८॥

नचाऽऽश्रमद्वयमेव देवानाम्—

"देवा एव ब्रह्मचारिणो देवा गृहस्था[1] देवा वनस्था यथा ह्येते मुनय एवं सर्ववर्णाः सर्वाश्रमाः सर्वं ह्येते कर्म कुर्वन्ति" इति कौण्ठरव्यश्रुतौ यतित्वदृष्टान्तेनान्येषामप्युपदेशात् ॥*॥

॥*॥ इति सप्तममधि[2]करणम् ॥*॥

॥ अनाविष्कुर्वन्नन्वयात् ॥४९॥

"एतां विद्यामधीत्य ब्रह्मदर्शी वाव भवति । स एतां मनुष्येषु विब्रूयात् । यथा यथा ह वै ब्रूयात् तथातथाऽधिको भवति" इति माठरश्रुतौ विद्यादानं श्रूयते ।

तच्च बहूनां स्वीकरणार्थमाविष्कारेणेति न मन्तव्यम् । अन्वयाद् युक्तेः । आविष्कारेऽयोग्यानामपि स्वीकारप्राप्तिः । तच्च निषिद्धम्—

"मा नः स्तेनेभ्यो ये अभिद्रुहस्पदे निरामिणो रिपवोऽन्नेषु जागृधुः" इति[3] ।

"विद्या ह वै ब्राह्मणमा जगाम गोपाय मां शेवधिस्तेऽहमस्मि[4] । अनार्यकायानृजवे शठाय मा स्म ब्रूया[5] ऋजवे ब्रूहि नित्यम्" इति च ॥*॥

॥*॥ इत्यष्टममधि[6]करणम् ॥*॥

॥ ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥५०॥

"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति दर्शनार्थं श्रवणादि विधीयते ।

तच्च दर्शनमैहिकमेव प्रारब्धप्रतिबन्धाभावे ।

"श्रुत्वाऽऽत्मानं मतिपूर्वं ह्युपास्येहैवं[7] दृष्टिं परमस्य विन्देत् । यद्यारब्धं कर्म निबन्धकं स्यात् प्रेत्यैव पश्येद् योगमेवान्ववेक्ष्य" इति सौपर्णश्रुतौ दर्शनात्[8] । "अनादिजन्मसम्बंद्धं[9] निर्भेत्तुं पापपञ्जरम् । यावत्या सेवया शक्यं तावत् कार्यं न संशयः । यावद्

अनुव्याख्यानम्

देवानामन्यगं चापि तेषु यद् ब्रह्मणो हि तत्[10] ॥२४४॥ बृहत्तन्त्रोदितं वाक्यं हरिणा फलनिर्णये । लोकेऽप्येतादृशगुणैः फलाधिक्यं हि दृश्यते ॥२४५॥ एवञ्च कलिपूर्वाणामसुराणां महत् फलम् । अशुभेषु सदैव स्यान्मिथ्याज्ञानादिकेषु हि ॥ २४६ ॥ शुभाशुभफलं देवा

---

१"देवा एव गृहस्था देवा एव वनस्थाः" इति प्र.पाठः। २ प्र.पाठेऽत्राष्टममधिकरणम्। ३ इतः परं प्र.पाठे—"येषां नैतन्नापरं किञ्चनैकं ब्रह्मणस्पते ब्रूहि तेभ्यः कदाचित् । अथो शमेनोपरता मनुष्या ये धर्मिणो ब्रूहि तेभ्यः सदा नः । आ देवानामोहते विव्रयो हृदि बृहस्पते न परः साम्नो विदुः" इत्यधिकम् । ४ "शेवधिष्टेऽहमस्मि" ५ "न मां ब्रूयाः" इति प्र.पाठौ । ६ प्र. पाठेऽत्र नवममधिकरणम् । ७ "ह्युपास्य इहैव" इति प्र. पाठे विश्लिष्टं पठ्यते । ८ "तद्दर्शनात्" ९ "-सन्बन्धम्" १०"तेषु हि ब्रह्मणोऽधिकम्" इति प्र. पाठाः।

भाष्यम्

दूरे स्थितो गम्यात् तावद् गन्तव्यमेव हि। इह जन्मान्तरे वाऽपि तावत्यैव तु दर्शनम्। श्रवणं मननं चैव निदिध्यासनमेव च। परे गुरौ च या भक्तिः परिचर्यादिकं हरेः। एषा सेवेति सम्प्रोक्ता यया तद्दर्शनं भवेत्" इति च बृहत्संहितायाम्[1] ॥*॥

॥*॥ इति नवममधिकरणम्[2] ॥*॥

॥ एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥५१॥

एवमेव प्रारब्धकर्माभावे शरीरपातानन्तरमेव मोक्षः, तद्भावे जन्मातराणीत्यनियमः। "धर्मी स्वर्गं विधर्मी निरयमेत्येव ब्रह्मसंस्थोऽमृतमेत्येव ब्रह्मसंस्थोऽमृतम्[3]" इति ब्रह्मसंस्थस्य मोक्षस्यैवावधारणात्" "विद्वानमृतमाप्नोति नात्र कार्या विचारणा। अवसन्नं यदाऽऽरब्धं कर्म तत्रैव गच्छति। न चेद् बहूनि जन्मानि प्राप्यैवान्ते न संशयः" इति च नारायणाध्यात्मे[4] ॥*॥

॥*॥ इति दशममधिकरणम्[5] ॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते

[6]श्रीकृष्णद्वैपायनकृतब्रह्मसूत्रभाष्ये

तृतीयोऽध्यायः

---

[ [7]अध्याये सूत्राणि-१८९, अधिकरणानि-७४, आदितः आहत्य सूत्राणि-४८२, अधि.-१६६ ]

अनुव्याख्यानम्

असुराश्च समाप्नुयुः। क्रमेणैव यथाशक्ति यथा ये ये प्रयोजकाः ॥२४७॥ प्रेरका अपि पापानां न देवाः पापमाप्नुयुः। इति प्रकाशिकायां हि प्रोवाच हरिरञ्जसा ॥२४८॥ यद्यप्येवं सुराणां च दैत्यानां च महत् फलम्। शुभाशुभेभ्य एवञ्च कर्तुश्च स्याद् यथोदितम् ॥२४९॥ तस्मान्निरयमानुष्यस्वर्गमुक्त्युपभोगिनः। मानुषोत्तममारभ्य देवास्तु निरयं विना ॥२५०॥ असुरास्तु विना मुक्तिं तमोऽन्धमपि चाऽप्नुयुः। इति तत्त्वविवेको[8]क्तं स्वयं भगवता वचः[9] ॥२५१॥ ज्ञानदा अपिचाऽचार्या विशेषात् फलमाप्नुयुः। मुक्तावष्टगुणं शिष्याद् गुरुराप्नोति शोभनम्॥

---

१ "इति बृहत्संहितायाम्" इति प्र. पाठः। २ प्र. पाठेऽत्र दशमधिकरणम्। ३ "ब्रह्मसंस्थोऽमृतत्वमेत्येव ब्रह्मसंस्थोऽमृतत्वमेत्येवेति ब्रह्मसंस्थस्य" ४ "इति नारायणाध्यात्मे" इति प्र. पाठौ। ५ प्र. पाठेऽत्रै-कादशमधिकरणम्। ६ क्वचित् कोशे "इति निखिलगुणगणैकभाजनश्रीमद्व्यासकृतश्रीमद्ब्रह्मसूत्रभाष्य" इति पठ्यते। ७ प्र. पाठे एतदध्यायसूत्राणि १९०, अधिकरणानि ९३, आदितः सूत्राणि ४८४, अधिकरणानि १८८। ८ अत्र बहुलं प्राचीनकोशेषु "तत्त्वावलोकोक्तम्" इति पठ्यते। हृषीकेशतीर्थीये पत्रमेव गलितम्। परन्तु "तत्त्वविवेकवचनेन दर्शयति" इति सन्न्यायरत्नावळीवचनप्रामाण्यात् "तत्त्वविवेकोक्तम्" इत्येव पाठः स्वीकृतः। ९ "भगवतो वचः" इति प्र. पाठः।

अनुव्याख्यानम्

॥२५२॥ तद्रुद्रद्विगुणं तस्मात् सार्धं तावत् ततोऽपरे। देवाः सहस्रगुणितं क्रमात् तस्माद् यथोत्तरम् ॥२५३॥ ब्रह्मा महौघगुणितमेवं फलविनिर्णयः। इत्याह भगवाञ्छास्त्रे गुरुवृत्ताभिधे स्वयम्। युक्तं च तन्न गोदाता गोमात्रफलमाप्नुयात् ॥२५३॥य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति। भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥२५५॥ नच तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः। भविता नच मे तस्मादन्यः प्रियतरो[1] भुवि। इत्याह भगवानेवमपि पात्रमपेक्ष्यते ॥२५६॥*॥ एवमेवाविरोधेन प्रारब्धस्यैव कर्मणः। ज्ञानं दृष्टफलं प्रोक्तं मुक्तिश्चेहैवं[2] लभ्यते ॥२५७॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीमद्ब्रह्मसूत्रानुव्याख्याने
तृतीयोऽध्यायः

---

*

---

४ "प्रियतमः" इति प्र. पाठः। २ "मुक्तिश्चैवेह" इति प्र. पाठः। क्वचित् प्राचीनकोशे "मुक्तिश्चैवोपलभ्यते" इति पठ्यते।

ॐ॥ फलं निगद्यतेऽस्मिन्नध्याये। कर्मनाशाख्यं फलमस्मिन् पादे। नित्यशः कार्यं सर्वथा भाव्यं साधनं प्रथमत उच्यते। प्रायिकत्वाच्चाध्यायानां पादानां च न विरोधः।

॥ आवृत्तिरसकृदुपदेशात् ॥१॥

"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यादीनां नाग्निष्टोमादिवदेकवारेणैव फलप्राप्तिः। किन्तु? आवृत्तिः कर्तव्या। "स य एषोऽणिमैतदात्म्यमिदं सर्वम्" इत्याद्यसकृदुपदेशात् ॥*॥

॥ लिङ्गाच्च ॥२॥

"स तपोऽतप्यत", "पुनरेव वरुणं पितरमुपससार" इत्याद्यावर्तनलिङ्गाच्च।

"नित्यशः श्रवणं चैव मननं ध्यानमेव च। कर्तव्यमेव पुरुषैर्ब्रह्मदर्शनमिच्छुभिः"

इति हि बृहत्तन्त्रे ॥*॥

॥*॥ इति प्रथममधिकरणम् ॥*॥

॥ आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥३॥

आत्मेत्युपदेश उपासनं च मोक्षार्थिभिः सर्वथा कार्यमेव।

"नान्यं विचिन्तय आत्मानमेवाहं विजानीयामात्मानमुपास आत्मा हि ममैष भवति"

अनुव्याख्यानम्

ॐ॥ समन्वयाविरोधाभ्यां सिद्धे वस्तुनि साधने। विचारितेष्वशेषेषु साधनेषु विशेषतः ॥१॥ नित्यशः कार्यमत्यन्तमवश्यं भावि साधनम्। चिन्त्यते प्रथमं तत्र ॥*॥ श्रवणादिसकृत्क्रिया ॥२॥ आवृत्तिर्नेति सन्देहे कर्तव्याऽऽवृत्तिरेव हि। उपदेशोऽतत् त्वमसीत्यादिर्ह्यसकृदेव यत् ॥३॥ लिङ्गाल्लातप्यतः पूर्वमृजोर्ब्रह्मत्वतः शतात्। शुश्रावोग्रतपा नाम योग्यो रुद्रपदस्य यः ॥४॥ सार्द्धं परार्द्धं विष्णोस्तु गुणान् भक्त्या सदोद्यतः। तत्त्रिभागमुपासां च चक्रे सम्भृतमानसः ॥५॥ दशमन्वन्तरं शक्रपदयोग्यो गरुत्मतः। पदयोग्यात् सुमनसः सुनन्दो नाम चाशृणोत्। उपासां चक्र उद्युक्तो मन्वन्तरचतुष्टयम् ॥६॥ सूर्याचन्द्रमसोश्चैव पदयोग्यौ सुतेजसौ। सुरूपः शान्तरूपश्च मन्वन्तरचतुष्टयम्। अशृण्वतां सुमनसो मन्वन्तरमुपासताम् ॥७॥ ततः प्रोक्तास्तु ते सर्वे भक्त्योग्रतपआदयः। अपश्यन् परमं विष्णुं तत्प्रसादेर्धिताः सदा। इत्युक्तं विष्णुना साक्षाद् ग्रन्थे सत्तत्त्वसञ्ज्ञिते ॥८॥*॥ आत्मेति नाम कथितं साक्षान्नारायणस्य हि। आत्मा ब्रह्म महांस्तारः परमेशः शुचिश्रवाः ॥९॥ विष्णुर्नारायणोऽनन्त

१ "तत्प्रसादैर्धिताः" इति पाठान्तरम्।

भाष्यम्

इति ह्युपगच्छन्ति। "आत्मेत्येवोपास्वाऽत्मेत्येव विजानीहि नान्यं किञ्चन विजानथ[1] आत्मा ह्येष भवति" इति ग्राहयन्ति च। "आत्मेत्युपासनं कार्यं सर्वथैव मुमुक्षुभिः। नानाक्लेशसमायुक्तोऽप्येतावन्नैव विस्मरेत्" इति भविष्यत्पर्वणि। "आत्मा विष्णुरिति ध्यानं विशेषणविशेष्यतः। सर्वेषां च मुमुक्षूणामुपदेशश्च तादृशः। कर्तव्यो नास्य हानेन कस्यचिन्मोक्ष इष्यते" इति च ब्राह्मे[2] ॥*॥[3]

॥ न प्रतीके न हि सः ॥४॥

"नाम ब्रह्मेत्युपास्ते[4]" इत्यादिना शब्दभ्रान्त्या न प्रतीके ब्रह्मदृष्टिः कार्या। किन्तु? तत्स्थत्वेनैवो-[5]पासनं कार्यम्। ब्रह्मतर्के च—

"नामादिप्राणपर्यन्ते[6] उभयोः प्रथमात्वतः। ऐक्यदृष्टिरिति भ्रान्तिरबुद्धानां[7] भविष्यति। नामादिस्थितिरेवात्र ब्रह्मणो हि विधीयते। सर्वार्था प्रथमा यस्मात् सप्तम्यर्था ततो मता" इति ॥*॥[8]

अनुव्याख्यानम्

इति श्रीपतिरीर्यते। इति पिङ्गश्रुतिश्चैव[9] तथैव परमश्रुतिः ॥१०॥ ओमात्मा भगवान् विष्णुरात्मानन्दोऽक्षरः स्वराट्। विश्वत्राता नृसिंहोऽजो नारायण उरुक्रमः ॥११॥ अनसूया तथैवात्रेर्जज्ञे पुत्रानकल्मषान्। दत्तं दुर्वाससं सोममात्मेशब्रह्मसम्भवान्॥ १२ ॥ इति भागवते चैव तस्मादात्मा जनार्दनः। तस्मादुपास्यो विष्णुरिति ज्ञातव्यः सज्जनैः सदा ॥ १३ ॥ तथैवोपासते सन्तस्तथैवोपदिशन्ति च। आदानार्थत्वतश्चायमात्मशब्दः पतिं वदेत्। स्वामी मे विष्णुरित्येव नित्यदोपास्यमञ्जसा ॥ १४ ॥ स्वामी विष्णुरिति ध्यानं विशेषणविशेष्यतः। कर्तव्यं सर्वथैवैतन्न कथञ्चन विस्मरेत् ॥१५॥ इति सत्तत्त्ववचनं षाड्गुण्यवचनं परम्। मम स्वामी हरिर्नित्यं सर्वस्य पतिरेव च। इति ध्येयः सर्वदैव भगवान् विष्णुरव्ययः ॥१६॥ प्रतीकविषयत्वेन न कार्या विष्णुभावना। प्रतीकं नैव विष्णुर्यन्मिथ्योपासा ह्यनर्थदा ॥१७॥ योऽन्यथा सन्तमात्मेशमन्यथा प्रतिपद्यते। किं तेन न कृतं पापं चोरेणाऽत्मापहारिणा ॥१८॥ योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते। किं तेन न कृतं पापं चोरेणाऽत्मापहारिणा[10] ॥१९॥ योऽन्यथैव स्थितं विष्णुमन्यथा प्रतिपद्यते। किं तेन न कृतं पापं चोरेण ब्रह्महारिणा ॥२०॥ स्वात्मानं प्रतिमां वाऽपि देवातान्तरमेव वा। चेतनाचेतनं वाऽन्यद् ध्यायेद् यः केशवस्त्विति। किं तेन न कृतं पापं चोरेणेशापहारिणा॥२१॥ योऽन्यद् विष्णुरिति ध्यायेज्जानीयाद् वा हरिं तथा। अन्धे तमसि मज्जेत् स यत्र नैवोत्थितिः

---

१ "विजानथ" २ "इति ब्राह्मे" इति प्र.पाठौ। ३ प्र. पाठेऽत्र द्वितीयाधिकरणपूर्तिः। ४ "ब्रह्मेत्युपासीत" इति प्र. पाठः। ५ "तत्संस्थत्वेन" इति क्वचित्। ६ "—प्राणपर्यन्तम्" इति प्र. पाठः। प्राचीनपाठे—नामादिप्राणपर्यन्ते उपास्तिवाक्ये इति सप्तमी। "उभयोः प्रथमान्ततः" इति च क्वचित् कोशे। ७ "भ्रान्तिरबुधानाम्" इति क्वचित्। ८ प्र. पाठेऽत्र तृतीयाधिकरणपूर्तिः। ९ "पैङ्गिश्रुतिश्चैव" इति च पाठान्तरम्। १० "चोरेणेशापहारिणा" इति प्र. पाठः।

भाष्यम्

## ॥ ब्रह्मदृष्टिरुत्कर्षात् ॥५॥

ब्रह्मदृष्टिश्च सर्वथा कार्यैव परमेश्वरे । उत्कृष्टत्वात् ।

" ब्रह्मदृष्ट्या सदोपास्यो विष्णुः सर्वैरपि ध्रुवम् । महत्त्ववाची शब्दोऽयं महत्त्वज्ञानमेव हि । सर्वतः प्रीतिजनकमतस्तत् सर्वथा भवेत् । आत्मेत्येव यदोपासा तदा ब्रह्मत्वसंयुता । कार्यैव सर्वथा विष्णोर्ब्रह्मत्वं न परित्यजेत् " इति च ब्रह्मतर्के[1] ॥*॥[2]

अनुव्याख्यानम्

क्वचित् ॥२२॥ योऽन्यद् विष्णुरिति ध्यायेद् विष्णुरन्यदिति स्म वा । अन्यथा ध्यानदोषेण महातमसि[3] मज्जति ॥ २३ ॥ योऽन्यद् विष्णुरिति ध्यायेद् विष्णुरन्यदिति[4] स्म वा । महातमसि मग्नस्य तस्य नैवोत्थितिः क्वचित् ॥ २४ ॥ यत्किञ्चिदन्यथा संस्थमन्यथा ध्यातमञ्जसा । ध्यातुर्महादोषकरं किमु सर्वेश्वरो हरिः ॥ २५ ॥ यत्किञ्चिदन्यथा संस्थमन्यथा ज्ञातमञ्जसा[5] । महादोषकरं विष्णुः किमु सर्वेश्वरेश्वरः ॥ २६ ॥ यत्किञ्चिदन्यथा संस्थमन्यथा ज्ञातमञ्जसा । अनर्थकारणं लोके किमु सर्वेश्वरेश्वरः ॥२७॥ न किञ्चिदन्यथा ज्ञेयं ध्येयं वा तेन कुत्रचित् । किमु सर्वोत्तमो विष्णुर्ज्ञेयो[6] नीचतया क्वचित्॥ ॥२८॥ तस्माद् वस्तु यथारूपं ज्ञेयं ध्येयं च सर्वदा । कारणं पुरुषार्थस्य नान्यथा भवति क्वचित् ॥२९॥ इति श्रुतिपुराणोक्तिबलतो न प्रतीकता । ध्येया[7] विष्णोः क्वचिद् यस्मान्मिथ्याज्ञानमनर्थदम् ॥३०॥ इत्यभिप्रेत्य नहि स इत्याह भगवान् प्रभुः । प्रतीकसंस्थितत्वेन ध्येयो विष्णुर्नचान्यथा ॥ ३१ ॥ ब्रह्मेति च सदा ध्येयो भगवान् विष्णुरञ्जसा । उत्कृष्टो ब्रह्मशब्दार्थः पूर्णत्वं ब्रह्मता यतः ॥ ३२ ॥ आधिव्याधिनिमित्तेन विक्षिप्तमनसोऽपि तु । ध्येयैव ब्रह्मता नित्यं विष्णोर्भक्त्या निरन्तरम् । इति प्रकाशिकायां च वचनं विष्णुनेरितम् ॥३३॥ नाऽत्मेति सूत्रमीशस्य जीवत्वप्रतिपादकम् । आत्मशब्दं यतो हेतुं कृत्वा जीवं न्यवारयत् । स्वशब्दात् प्राणभृच्चैव नोक्त इत्येव वेदराट् ॥३४॥ यद्यात्मशब्दो जीवेऽपि कथं स विनिवारयेत् । आत्मशब्दोदितस्तस्माद् विष्णुरेव नचापरः ॥३५॥ आत्मब्रह्मादयः शब्दास्तमृते विष्णुमव्ययम् । न वदन्ति यतो नाऽसा क्वापि तैर्गुणपूर्णता । नारायणाध्यात्मगतमिति यद् वैष्णवं वचः ॥३६॥ यदि जीवेशयोर्वेदपतिरैक्यं च मन्यते । आत्मशब्दं कथं तस्मान्निवारयति युक्तितः ॥३७॥ भेदस्य व्यपदेशं च स्थितिं चादनमेव च भेददार्ढ्ये हेतुमाह सतात्पर्यं जगत्पतिः ॥३८॥ व्यावहारिकभेदश्चेत् क्वासावव्यावहारिकः । व्यावहारिकमित्येव वचनं व्यावहारिकम् ॥३९॥ उत नेति विकल्पे तु यदि स्याद् व्यावहारिकम् । तस्यापि बाध्यता चेत् स्याद् भेदः स्यात् पारमार्थिकः ॥४०॥ अव्यावहारिकत्वं चेद् भेदो[8]ऽयं सत्यतां गतः । एकस्यासत्यतायां हि द्वयोरेव विरुद्धयोः। अन्यस्य सत्यतैव स्यादिति

---

१ "इति ब्रह्मतर्के" इति प्र. पाठः । २ प्र. पाठेऽत्र चतुर्थाधिकरणपूर्तिः । ३"सोऽन्धे तमसि" इति प्र. पाठः।
४ "विष्णुमन्यदिति" इति क्वचित् पठ्यते । ५"ध्यातमञ्जसा"इति प्र. पाठः। ६ "ध्येयः"इति च क्वचित्।
७ "ज्ञेया" इति क्वचित्। ८ "भेदो यः" इति प्र.पाठः ।

भाष्यम्

## ॥ आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥६॥

"चक्षोः सूर्यो अजायत" इत्याद्युपासनं च देवानां कार्यमेव। स्वोत्पत्तिस्थानत्वात् स्वाश्रयत्वान्मुक्तौ तत्र लयस्यापेक्षितत्वाच्चोपपन्नं तथोपासनम्[1]। नारायणतन्त्रे[2] च—

"आधिव्याधिनिमित्तेन विक्षिप्तमनसोऽपि तु। गुणानां स्मरणाशक्तौ विष्णोर्ब्रह्मत्वमेव तु। स्मर्तव्यं सततं तत्तु न कदाचित् परित्यजेत्। अत्र सर्वगुणानां च यतोऽन्तर्भाव इष्यते। स्वोत्पत्त्यङ्गं च देवानां विष्णोश्चिन्त्यं सदैव तु। तेषां तत्र प्रवेशो हि मुक्तिरित्युच्यते बुधैः। तदाश्रिताश्च ते नित्यं ततश्चिन्त्यं विशेषतः" इति ॥*॥

॥*॥ इति द्वितीयमधिकरणम्[3] ॥*॥

## ॥ आसीनः सम्भवात् ॥७॥

सर्वदोपासनं कुर्वन्नप्यासीनो विशेषतः कुर्यात्। तदा विक्षेपाल्पत्वेन सम्भवात् ॥*॥

अनुव्याख्यानम्

केन निवार्यते ॥४१॥ असत्यं नोक्तमित्युक्ते सत्यमुक्तमिति प्रजाः। जानन्त्युक्तं तु नो सत्यमित्युक्तेऽसत्यतामपि ॥४२॥ न स्वप्नेऽपि द्वयं मिथ्या तत्रैकं सत्यमेव हि। भावाभावावुभौ तत्र कथं मिथ्या भविष्यतः ॥४३॥ भावस्य हि निषेधे तु नाभावस्य निषेधनम्। स्ववाचोऽसत्यता चेत् स्यात् तस्माद् भेदस्य सत्यता ॥४४॥ तस्माज्जीवेशयोर्भेद उक्तन्यायेन गम्यते। एतस्मादात्मशब्दोऽयं परमात्माभिधा भवेत् ॥४५॥ प्रतीकविषयत्वेन विष्णुदृष्टिर्न तद् भवेत्। प्रतीके विष्णुरित्येव तस्मात् कार्या ह्युपासना ॥४६॥ नच विष्णुः प्रतीकं यत् तस्मान्नात्मेत्युपासना। इति पक्षो यदा ब्रह्मदृष्टिश्चात्र विरुद्ध्यते। स नेति युक्तिस्तत्रापि समेत्युक्तविरुद्धता ॥४७॥ यद्यप्युत्कर्षमात्रेण ह्यतद्भावेऽप्युपासना। उत्कर्ष आत्मनोऽपि स्याच्चेतनत्वादचेतनात्। तस्मादतत्त्वं नोपास्यमिति वेदविदो[4] मतम् ॥४८॥ उत्कर्षाद् ब्रह्मताध्याने यदि स्यात् फलमञ्जसा। ब्रह्मणो नीचताध्यानादनर्थः[5] किं न जायते॥४९॥ अचेतनस्य ब्रह्मत्वध्याने तुष्टिर्नहि क्वचित्। नीचस्य स्वात्मताध्याने[6] कुप्यति ब्रह्म लोकवत्[7] ॥५०॥ चण्डालो नृप इत्युक्ते नृपश्चण्डाल इत्यपि। को विशेषः परिज्ञाते नृपेण स्यात् कथञ्चन॥५१॥ पुरतो नरदेवस्य चण्डालो यदि पूज्यते। राजवत् किं न कोपः स्याद् राज्ञो लोके हि पश्यति ॥५२॥ राज्ञस्तु पुरतः प्रोक्ते चण्डालं[8] नृप इत्यपि। आत्मानं स इति प्रोक्तमितिवद्धयेव कुप्यति ॥५३॥ अभेदे नैतयोर्ध्याने को विशेषो वचस्यपि। अयं राजा त्वमित्युक्ते चण्डालेऽथ नृपेऽपि च। चण्डाल इति तु प्रोक्ते सममेव हि दूषणम् ॥५४॥ ध्याते त्वेकस्य तद्भावे तद्भावोऽन्यस्य किं न तत्। नचैव तदविज्ञातं सर्वज्ञब्रह्मणा क्वचित् ॥५५॥तस्मादपेशलं सर्वमन्यस्य ब्रह्मतावचः।

---

१ "तेषां तथोपासनम्" इति प्र. पाठः। २ "नारायणतन्त्रे" इतीयानेव प्र. पाठः। ३ प्र पाठेऽत्र पञ्चममधिकरणम्। ४ "वेदविदा" इति प्र. पाठः। "—विदाम्" इति च। ५ "—ज्ञानादनर्थः" ६ "स्वात्मताज्ञानात्" ७ "लोकेऽभिपश्यति" ८ "चण्डालो नृप इत्यपि" इति प्र. पाठः।

भाष्यम्

|| ध्यानाच्च ||८||

"स्मरणोपासनं चैव ध्यानात्मकमिति द्विधा। स्मरणं सर्वदा योग्यं ध्यानोपासनमासने। नैरन्तर्यं मनोवृत्तेर्ध्यानमित्युच्यते बुधैः। आसीनस्य भवेत् तत्तु न शयानस्य निद्रया। स्थितस्य गच्छतो वाऽपि विक्षेपस्यैव सम्भवात् स्मरणात् परमं ज्ञेयं ध्यानं नास्त्यत्र संशयः" इति च नारायणतन्त्रे[1]।

अतो ध्यानत्वाच्च ॥*॥

|| अचलत्वं चापेक्ष्य ||९||

"अचलं चेच्छरीरं स्यान्मनसश्चाप्यचालनम्। चलने तु शरीरस्य चञ्चलं तु[2] मनो भवेत्" इति च ब्रह्माण्डे[3] ॥*॥

|| स्मरन्ति च ||१०||

"समं कायशिरोग्रीवं धारयन्नचलः स्थिरः[4]। सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानव-लोकयन्" इत्यादि ॥*॥

|| यत्रैकाग्रता तत्राविशेषात् ||११||

देशकालावस्थादिषु यत्रैकाग्रता भवति तत्रैव स्थातव्यम्।

"तमेव देशं सेवेत तं कालं तामवस्थितिम्। तानेव भोगान् सेवेत[5] मनो यत्र प्रसीदति। नहि देशादिभिः कश्चिद् विशेषः समुदीरितः। मनःप्रसादनार्थं हि देशकालादिचिन्तना" इति हि वाराहे[6] ॥*॥

||*|| इति तृतीयमधिकरणम्[7] ||*||

|| आ प्रयाणात्[8] तत्रापि हि दृष्टम् ||१२||

यावन्मोक्षस्तावदुपासनादि कार्यम्।

"स यो ह वै तद् भगवन् मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत" इति हि श्रुतिः।

"सर्वदैनमुपासीत यावद् विमुक्तिर्मुक्ता अपि ह्येनमुपासते" इति च सौपर्णश्रुतिः[9]।

"शृणुयाद् यावदज्ञानं मतिर्यावदयुक्तता। ध्यानं च यावदीक्षा स्यान्नेक्षा क्वचन बाध्यते। दृष्टतत्त्वस्य च ध्यानं यदा दृष्टिर्न विद्यते। भक्तिश्चानन्तकालीना परमे ब्रह्मणि स्फुटा। आ विमुक्तेर्विधिर्नित्यं स्वत एव ततः परम्" इति च ब्रह्माण्डे[10] ॥*॥

॥*॥ इति चतुर्थमधिकरणम्[11] ॥*॥

---

१ "इति नारायणतन्त्रे" इति प्र. पाठः। २ "चञ्चलं च" इति क्वचित्। ३ "इति ब्रह्माण्डे" इति प्र.पाठः। ४ "अचलं स्थिरः" इति प्र· पाठः। प्राचीनकोशे "अचल स्थिरः" इति पठ्यते। "खर्परे शरि–" इति विसर्गलोपः। "सर्वगत स्थाणुः" इति यथा। "अचलस्थितः" इति च कोशान्तरे। ५ "भुञ्जीत" ६ "इति वाराहे" इति प्र. पाठौ। ७ प्र· पाठेऽत्र षष्ठमधिकरणम्। ८ "आ प्रायणात्" इति प्र. सूत्रपाठः। ९ "इति सौपर्णश्रुतिः" १० "इति ब्रह्माण्डे" इति प्र. पाठौ। ११ प्र.पाठेऽत्र सप्तममधिकरणम्।

भाष्यम्

॥ तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥१३॥

ब्रह्मदर्शन उत्तराघस्याश्लेषः पूर्वस्य विनाशश्च ।

"तद् यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते", "तद् यथैषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हैवास्य सर्वे पाप्मानः प्रदूयन्ते" इति तद्व्यपदेशात् ॥*॥

॥*॥ इति पञ्चममधिकरणम्[1] ॥*॥

॥ इतरस्याप्येवमसंश्लेषः पाते तु ॥१४॥

पुण्यस्याप्येवमसंश्लेषः पाते । तुशब्दोऽनुत्थानवाची ।

"यथाऽश्लेषो विनाशश्च मुक्तस्य तु विकर्मणः । एवं सुकर्मणश्चापि पततस्तमसि ध्रुवं[2]" इति चाऽऽग्नेये ॥*॥

॥*॥ इति षष्ठमधिकरणम्[3] ॥*॥

॥ अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥१५॥

अनारब्धकार्ये एव पूर्वे पुण्यपापे विनश्यतः ।

"तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्यते" इति तदवधेः ।

तुशब्दः स्मृतिद्योतकः—

"यदनारब्धपापं स्यात् तद् विनश्यति निश्चयात् । पश्यतो ब्रह्म निर्द्वन्द्वं हीनं च ब्रह्म पश्यतः । द्विषतो वा भवेत् पुण्यनाशो नास्त्यत्र संशयः । तस्याप्यारब्धकार्यस्य न विनाशोऽस्ति कुत्रचित् । आरब्धयोश्च नाशः स्याद्ल्पयोः पुण्यपापयोः" इति च नारायणतन्त्रे[4] ।

॥*॥ इति सप्तममधिकरणम्[5] ॥*॥

॥ अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥१६॥

अग्निहोत्राद्यपि मोक्षेऽनुभवायैव[6] । तुशब्दाद् ब्रह्मदर्शनवतः ।

"स एनमविदितो न भुनक्ति यथा वेदो वाऽननूक्तोऽन्यद् वा कर्माकृतं यदि ह वा अप्यनेवंविन्महत् पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एवाऽऽत्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयतेऽस्माद्ध्येवाऽऽत्मनो यद्यत्

अनुव्याख्यानम्

तस्माद् यथोक्तमार्गेण ब्रह्मोपास्यं मुमुक्षुभिः ॥५६॥*॥ तथोपास्याञ्जसा दृष्टं ब्रह्म पापं च भस्मसात् । करोति निखिलं पूर्वं पाश्चात्त्यस्याप्यसङ्गताम् । करोति ॥*॥ तद्द्विषश्चैवं[7]

१ प्र. पाठे नात्राधिकरणपूर्तिः । २ "ध्रुवम्" इति प्र. पाठः । ३ प्र.पाठे नात्राधिकरणपूर्तिः । ४ "इति नारायणतन्त्रे" इति प्र. पाठः । ५ प्र. पाठेऽत्र नाधिकरणपूर्तिः । ६ "मोक्षानुभावायैव" इति प्र. पाठः । ७ "द्विषतश्चैव" इति क्वचित् ।

भाष्यम्

कामयते तत्तत् सृजते " इति तद्दर्शनात् ॥*॥

॥*॥ इत्यष्टममधिकरणम्[1] ॥*॥

## ॥ अतोऽन्यदपीत्येकेषामुभयोः ॥१७॥

मुक्तावनुभवकारणाद् यदन्यत् तत् पुण्यमपि विनश्यति। अप्रारब्धमनभीष्टं च। तथाह्येकेषां पाठ उभयोस्त्यागेन—

"तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्" इति। "अनभीष्टमनारब्धं पुण्यमप्यस्य नश्यति। किमु पापं परब्रह्मज्ञानिनो नास्ति[2] संशयः" इति पाद्मे ॥*॥

॥*॥ इति नवममधिकरणम्[3] ॥*॥

## ॥ यदेव विद्ययेति हि ॥१८॥

ब्रह्मदर्शिकृतमल्पमपि पुण्यं महत्तममनन्तं च भवति।

"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इति श्रुतेः। "न ह्यस्य कर्म क्षीयते" इति च। "अल्पमात्रः कृतो[4] धर्मो भवेज्ज्ञानवतो महान्। महानपि कृतो धर्मो ह्यज्ञानान्निष्फलो[5] भवेत्" इति च भारते ॥*॥

॥*॥ इति दशममधिकरणम्[6] ॥*॥

## ॥ भोगेन त्वितरे क्षपयित्वाऽथ सम्पत्स्यते ॥१९॥

आरब्धपुण्यपापे भोगेन क्षपयित्वा ब्रह्म सम्पत्स्यते। अथेति नियमसूचकः।

"आरब्धपुण्यपापस्य भोगेन क्षपणादनु। प्राप्नोत्येव तमो घोरं ब्रह्म वा नात्र संशयः। ब्रह्मणां शतकालात्तु पूर्वमारब्धसङ्क्षयः। नियमेन भवेन्नात्र कार्या काचिद् विचारणा" इति च नारायणतन्त्रे ॥*॥

॥*॥ इत्येकादशमधिकरणम्[7] ॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते

श्रीमद्ब्रह्मसूत्रभाष्ये

— चतुर्थाध्यायस्य प्रथमः पादः —

---

अनुव्याख्यानम्

पुण्यनाशोऽप्यसङ्गता॥५७॥*॥यदेव विद्ययेत्यत्र पूर्वोक्ताद्धि विशिष्यते। पूर्वं स्वर्गादिलब्ध्यर्थं वीर्यवत्त्वेन चोदितम्। कर्म विद्यायुतं पश्चान्मोक्षे वीर्यप्रदं त्विति ॥५८॥*॥ ततो भोगेन पुण्यं

---

१ प्र. पाठेऽत्र नाधिकरणपूर्तिः। २ "नात्र" इति प्र. पाठः। ३ प्र. पाठे नात्राधिकरणपूर्तिः। ४ "अल्पमात्रकृतः" इति प्र. पाठः। ५ अत्र अज्ञानामिति अज्ञानादिति वा च्छेदः। अत एव द्वेधाऽपि कोशकृतः पठन्ति हि। ६ प्र. पाठे नात्राधिकरणपूर्तिः। ७ प्र. पाठेऽत्र अष्टमाधिकरणपूर्तिः।

भाष्यम्

ॐ ॥ देवानां मोक्ष उत्क्रान्तिश्चास्मिन् पाद उच्यते ।

अनुव्याख्यानम्

च क्षपयित्वेतरत् तथा । ब्रह्मद्विड् ब्रह्मदर्शी च तमोमोक्षाववाप्नुतः[1]॥५९॥ ब्रह्मणां शतकालात्तु पूर्वमारब्धसङ्क्षयः । ब्रह्मणस्त्वेव तावत्त्वं पञ्चाशद् ब्रह्मणस्तथा । रुद्रस्य विंशदेव स्यादिन्द्रस्यार्कादिके दश ॥६०॥ अन्येषां ब्रह्ममात्रस्य त्वन्त आरब्धसङ्क्षयः । ब्रह्मणैव सहातश्च परं नारायणं व्रजेत् । इति सत्तत्त्ववचनं स्वयं भगवतोदितम् ॥६१॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीमद्ब्रह्मसूत्रानुव्याख्याने
—- चतुर्थाध्यायस्य प्रथमः पादः—

---

ॐ ॥ देवानां च मनुष्याणामेतावत् सममेव हि । उत्क्रान्तिमार्गौ देवानां न प्रायेण भविष्यतः ॥१॥ कर्मक्षयस्तथोत्क्रान्तिर्मार्गो भोगश्चतुष्टयम् । फलं मोक्ष इति प्रोक्तः[2] क्रमात् पादेषु चोदितः[3] ॥२॥ स्रष्टृष्वेव तु[4] सृज्यानां प्रवेशो ब्रह्मणो लये । देवानां मार्ग उद्दिष्टो नार्चिरादिर्नचोत्क्रमः ॥३॥ स्रष्टुस्तु ग्रासभूतस्य देहस्तत्र लयं व्रजेत् । यतः सृज्यस्य देवस्य नैवोत्क्रान्तिस्ततो भवेत् ॥४॥ लयाच्चैवार्चिरादीनां लोकानामपि सर्वशः । कथं मार्गो भवेत् तेषां विशतामुत्तमं[5] स्वतः ॥५॥ जातानां मानुषे लोके देवानां च[6] कदाचन । उत्क्रान्तिमार्गौ भवतो न तदा मुक्तिरिष्यते ॥६॥ अन्येषामपि साक्षात्तु मुक्तिः प्राप्यापि तं हरिम् । सहैव ब्रह्मणा भूयादिति शास्त्रस्य निर्णयः ॥७॥ क्ष्माम्भोनलानिलवियन्मनइन्द्रियार्थभूतादिभिः परिवृतः प्रतिसञ्जिघृक्षुः । अव्याकृतं विशति यर्हि गुणत्रयात्मा कालं परं[7] स्वमनुभूय परः स्वयम्भूः ॥८॥ एवं परेत्य भगवन्तमनुप्रविष्टा ये योगिनो जितमरुन्मनसो विरागाः । तेनैव साकममृतं पुरुषं पुराणं ब्रह्म प्रधानमुपयान्त्यगताभिमानाः ॥९॥ भगवन्तमनुप्राप्ता अपि तु ब्रह्मणा सह । परमं मोक्षमायान्ति लिङ्गभङ्गेन योगिनः ॥१०॥ प्राप्ता अपि परं देवं सहैव ब्रह्मणा पुनः । आनन्दव्यक्तिमायान्ति पूर्णां लिङ्गस्य भङ्गतः ॥११॥ इति श्रुतिपुराणोक्तिबलाद् विज्ञायते च तत् । भोगस्तु सर्वदेवानां नरादीनां च विद्यते ॥ १२ ॥ तत्र प्रवेशो देवानामुत्तरोत्तरतः क्रमात् । उच्यते देहगानां च वृत्तीनामेवमेव तु ॥ १३ ॥ तत्र मोक्षस्वरूपं तु वादिनः प्रतिभाश्रयात् । नाना वदन्ति पुंसां हि मतयो गुणभेदतः । पृथक् पृथक् प्रजायन्ते तमसैवान्यथामतिः ॥१४॥ रजसा मिश्रबुद्धित्वं सत्त्वेनैव यथा मतिः । गुणातीता विमुक्तानां मतिः[8] शुद्धचितिर्यतः॥१५॥सम्यगेवाथ नित्या च तत्तन्माहात्म्ययोगतः। बहळा[9] चातिविशदा स्पष्टा चैव श्रियो मतिः॥१६॥महाशुद्धचितित्वेन ततोऽप्यतिमहाचितिः।

---

१ "अवाप्नुताम्" इति क्वचित् । २ "प्रोक्तम्" ३ "चोदितम्" ४ "च" ५"विशतामुत्तरम्"६ "तु" इति प्र. पाठाः। ७ "पराख्यमनुभूय" इति क्वचित्। ८ " अतिशुद्धचितिर्यतः " इति क्वचित्। ९ "बहुला" इति प्र.पाठः ।

अनुव्याख्यानम्

अशेषोरुविशेषाणामतिस्पष्टतया दृशिः । नित्यमेकप्रकारा च नारायणमतिः परा ॥१७॥ सूर्यप्रभावदखिलं भासयन्ति निरन्तरा । निर्लेपा वीतदोषा च नित्यमेवाविकारिणी ॥ ॥ १८ ॥ विशेषांस्तद्गतांस्त्यक्त्वा प्रायस्तल्लक्षणा श्रियः । तथैव स्पष्टताभावात् तत्तन्त्रत्वा[1]च्च केवलम् । न तादृशी ब्रह्मणस्तु प्राय एवं[2] श्रियो यथा ॥ १९ ॥ मुक्तानां तु तदन्येषां समुद्रतरळोपमा[3]। अग्निज्वालावदेव स्यात् स्मृतिगानां दृशो भवः ॥ २० ॥ एवंविधेषु ज्ञानेषु तमसा मुष्टदृष्टयः। खद्योतसदृशात्यल्पज्ञानत्वाद-न्यथादृशः। वदन्ति वादिनो मोक्षं नानामतसमाश्रयात् ॥ २१ ॥ आश्रित्य प्रतिभामाह जिनस्तत्रातितामसीम्। ज्ञानात् कर्मक्षयान्मोक्षो भवेद् देहाख्यपञ्जरात् ॥२२॥ पञ्जरोन्मुक्त-खगवदलोकाकाशगोचरः। नित्यमूर्ध्वं व्रजत्येव पुद्गलो हस्तपादवान् ॥२३॥ इति तत् केन मानेन मोक्षरूपं प्रदर्श्यते[4]। गतिरूर्ध्वा च दुःखेता गतित्वाल्लौकिकी यथा। इत्युक्ते चानुमानै-कशरणस्य किमुत्तरम् ॥२४॥ अनूर्ध्वगतिता तत्र यद्युपाधिः खगस्य च। दूरोर्ध्वगमने दुःख-मिति साध्यानुगो न सः ॥२५॥ प्रतिसाधनरूपस्य नानुमानस्य दूषणम्। उपाधिः प्रतिरूपं हि साधनं तन्नचापरम् ॥२६॥ अथापि सशरीरत्वं चात्रोपाधिर्न वै भवेत्। गतित्वं यत्र देहित्वमिति यत् साधनानुगम् ॥२७॥ आगमाननुसारित्वे प्रसङ्गोऽयं यतस्ततः। नापसि-द्धान्तता दोषः प्रसङ्गे यदि सा भवेत्। तदैवातिप्रसङ्गः स्यान्न प्रसङ्गः कचिद् भवेत् ॥२८॥ लोकाकाशगतित्वं चेदुपाधिः साधनानुगः। सोऽपीत्युक्ते वदेत् किं स तस्माद् वेदोदितो भवेत् ॥ २९ ॥ मोक्ष एवं स्वयं विष्णुर्यद्यपीशो ह्यशेषवित् । चकार सौगतमतं मोहायैव चकार यत् ॥३०॥ असुराणामयोग्यानां वेदमार्गे प्रवर्तताम्। अतोऽसुराधिकारत्वान्न ग्राह्यं तन्मतं कचित् ॥३१॥ चतुष्प्रकारं तच्चोक्तं शून्यं विज्ञानमेकलम्। अनुमेयबहिस्तत्त्वं तथा प्रत्यक्षबाह्यगम् ॥ ३२ ॥ इति तत्र तु ये शून्यं वदन्त्यज्ञानमोहिताः । ते मोक्षं तादृशं ब्रूयुर्निश्शङ्कं मायिनो यथा ॥३३॥ न किञ्चिन्मुक्त्यवस्थायामात्मात्मीयमथापि वा। एकस्मिन् संसृतेर्मुक्ते न किञ्चिदवशिष्यते ॥३४॥ तत्संवृत्यैव भेदोऽयं चेतनाचेतनात्मकः। दृश्यते संवृतेर्ध्वंसे निर्विशेषैव शून्यता ॥३५॥ न सत्त्वं नैव चासत्त्वं शून्यतत्त्वस्य विद्यते। न सुखत्वं न दुःखत्वं न विशेषोऽपि कश्चन ॥३६॥ निर्विशेषं स्वयम्भातं निर्लेपमजरामरम्। शून्यं तत्त्वमसम्बाधं नानासंवृतिवर्जितम् ॥३७॥ अशेषदोषरहितं मनोवाचामगोचरम्। मोक्ष इत्युच्यतेऽसद्भिर्नानासंवृतिदूषितम् ॥ ३८ ॥ संसृत्यवस्थं विज्ञेयं[5] संवृत्यैव विशेष्यते[6]। स्थितया ध्वस्तया चैव संसृतिर्मोक्ष इत्यपि ॥३९॥ केचित् तेष्वन्यथा प्राहुः संवृत्यैव त्वनेकधा। अवच्छिन्नं महाशून्यं नानापुद्गलशब्दितम् ॥४०॥ यस्य शून्यैकरसता ज्ञानात् सा त्वपगच्छति। स पुद्गलत्वनिर्मुक्तो महाशून्यत्वमेष्यति ॥४१॥ संवृत्याऽन्यस्त्ववच्छिन्नो[7] दुःखान्यनुभवत्यलम् । इत्येवं मायिनश्चाऽऽहुरेकजीवत्ववादिनः ॥४२॥ बहुजीवमताश्चेति

१ "तत्तन्त्रत्वात्तु" २ "प्रायेणैवम्" इति प्र. पाठौ। ३ "—तरलोपमा" इति प्र. पाठः। तरळस्तरङ्गः। ४"प्रदर्श्यते" ५"संसृत्यवस्था विज्ञेया" ६"विशिष्यते" ७"संवृत्या यस्त्ववच्छिन्नः" इति प्र. पाठाः।

अनुव्याख्यानम्

माया तेषां तु संवृतिः। निर्विशेषत्ववाचैव शून्यं ब्रह्मैव[1] नो भिदा ॥४३॥ सच्चित्सुखादिकं चैव किं कुतोऽखण्डवादिनः। व्यावर्त्यमात्रभेदस्तु विद्यते शून्यवादिनः ॥४४॥ अनृतादेरपोहं तु स्वयमेव हि मन्यते। निर्विशेषत्वतो नैव विशेषो ब्रह्मशून्ययोः॥४५॥ प्रामाण्यादि च वेदस्य फलतः सममेव हि। अतत्त्वावेदकं यस्मात् प्रमाणं तेन कथ्यते। अतत्त्वावेदकत्वं यदप्रामाण्यं[2] सतां मतम् ॥४६॥ दीर्घभ्रान्तिकरी चेत् स्यादतत्त्वावेदकप्रमा। रज्जुसर्पादिविज्ञानादप्याधिक्यादमानता। स्यादागमस्यानिवर्त्यमहामोहप्रदत्वतः ॥४७॥ तलनैल्यादिविज्ञानमाकाशे मानतां व्रजेत्। छत्राकारत्वविज्ञानं[3] चन्द्रप्रादेशतामतिः ॥४८॥ निर्भेदत्वं तु शून्यस्य तेनाप्यङ्गीकृतं सदा। सत्त्वासत्त्वादिधर्माणामभाव उभयोर्मतः ॥४९॥ नहि सत्प्रतियोगित्वं शून्यत्वं तेन चेष्यते। नच दुःखविरोधित्वादन्या ह्यानन्दतेष्यते ॥५०॥ मायिना शून्यपक्षेऽपि ज्ञानं जाड्यविरोधि च। धर्मास्तेऽपि[4] न सन्त्येव को विशेषस्ततस्तयोः ॥५१॥ एतादृशानां पक्षाणां दूषणं प्रभुणा कृतम्। स्वपक्षसाधनेनैव नाभाव इति चोक्तितः ॥५२॥ आत्माभावे पुमर्थः क इष्टस्याऽत्माऽवधिर्यतः। यदि नाऽत्मावधिर्मोक्षो मोक्षः स्याद् घटशून्यता। कल्पितत्वाद् विशेषाणां मायिनोऽपि समं हि तत् ॥५३॥ दृश्यमाने विशेषेऽपि यदि चेदविशेषता। घटाभावोऽविशेषः स्यात् पाश्चात्यश्चेदनागतः ॥५४॥ न मोक्षो विमतो यस्मादेहो घटशून्यता। यथेत्युक्ते वदेत् किं स योऽनुमामात्रमानकः ॥५५॥ नच मायी वदेत् तत्र[5] पूर्वोक्तेनैव वर्त्मना। अमानत्वाच्छ्रुतेस्तस्य नचादेहत्ववादिनी ॥५६॥ श्रुतिः काचिददेहत्वमप्राकृतशरीरता। मोक्षे भोगं यतो ब्रूते जक्षन् क्रीडन्निति श्रुतिः ॥५७॥ निर्दुःखत्वान्न तन्मोक्षः प्रतिपन्नं यथेति च। अनुमादूषणं किं स्याद् वादिनोः शून्यमायिनोः॥ ॥५८॥ दुःखं दुःखादभिन्नत्वान्मोक्षोऽपि स्यादसंशयम्। भेदे सद्वैततैव स्यादित्याद्यमितदोषतः। हेयं मायामतेनैव सह शून्यमतं बुधैः ॥५९॥ एवं विज्ञानवादोऽपि ज्ञानमात्रविशेषतः। तस्यापि भङ्गुरत्वादिविशेषमपहाय हि। अद्वैततामतं साक्षादुक्तदोषस्ततो भवेत् ॥ ॥६०॥ कालो न केवलज्ञानी कालत्वात् प्रतिपन्नवत्। एतयाऽनुमया रोधान्न तादृङ्मोक्षरूपता ॥६१॥ यदि कालोऽपि नेत्याह कदेति प्रश्न उत्तरम्। किं वक्ष्यति यदाऽवस्थां वदेत् सा पक्षतां व्रजेत् ॥६२॥ अवस्थात्वादिति ह्येव हेतुः साऽपि कदेति च। पृष्टे कालश्च वक्तव्यो नाकालत्वं ततो भवेत् ॥६३॥ न काल इति सामान्यनिषेधे कालगप्रमा। निरुणद्धि समश्चायं त्रयाणामुक्तवादिनाम् ॥६४॥ एकजीवत्वपक्षे तु[6] कालाभावादियं प्रमा। कुपिता कालमादाय द्वैतमेवोपपादयेत् ॥६५॥ विमतः प्रपञ्चवान् कालः कालत्वात् प्रतिपन्नवत्। इति चान्याऽनुमैकत्वं जीवस्य विनिवारयेत् ॥ ६६ ॥ कालशब्देश्वरैकत्वमतान्यप्येवमेव हि। निराकृतानि तेषां च समत्वात् पक्षदोषयोः ॥ ६७ ॥ ज्ञानं स्वरसभङ्गयेव

---

१ "ब्रह्मेति" इति प्र. पाठः। २ "अतत्त्वावेदकं यत् तदप्रमाणम्" इति क्वचित्। "अतत्त्वावेदकत्वं यत् तदप्रामाण्यम्" इति च। ३ "छत्रताकारविज्ञानम्" इति क्वचित्। ४ "धर्माः केऽपि" ५ "वदेदत्र" इति प्र. पाठौ। ६ "पक्षेऽपि" इति पाठान्तरम्।

अनुव्याख्यानम्

नित्यसन्तानमिष्यते । बौद्धाभ्यामपराभ्यां तु तत्राप्युक्ताऽनुमा रिपुः ॥ ६८ ॥ मोक्षो न शुद्धविज्ञानसन्तानी कालगत्वतः । प्रतिपन्नो यथेत्येतदनुमानं तदुत्तरम् ॥ ६९ ॥ अनुमानानि सर्वाणि प्रतिसाधनयोगतः । निषिद्धान्युक्तभङ्गयैव श्रुतयश्चासदुक्तिगाः ॥ ॥७०॥*॥ साङ्ख्यनैयायिकाद्याश्च प्राहुर्मोक्षं तु निस्सुखम् । इच्छाद्वेषप्रयत्नादेरपि सर्वात्मना लयम् ॥७१॥ तत्राऽहुर्नैतदप्यत्र शोभनं श्रुतयो यतः । महानन्दं च भोगं च नियमेन वदन्ति हि ॥७२॥ प्राकृतप्रियहानिस्तु प्रियास्पृष्टिरितीर्यते । अप्रियं प्रतिकूलं तदविशेषेण शब्दितम् ॥ ॥७३॥ नास्ति ह्यप्राकृतं दुःखं सतो जीवस्य कुत्रचित् । प्रियं स्वरूपमेवास्य बलानन्दादिवाक्यतः ॥७४॥ हेयत्वादप्रियस्यैव प्रियहानेरनिष्टतः । न समस्तप्रियाभावो मोक्षे प्रोक्ते तु युज्यते ॥७५॥ अप्रियस्य स्वरूपत्वमसुरेष्वेव हि श्रुतम् । असुरा नैवमेवं च नैवं चाखिलमानुषाः । इत्यात्मप्रियहानाय को यतेत च बुद्धिमान् ॥७६॥ सञ्ज्ञा नास्तीत्यपि ह्यस्य नामुक्तज्ञेयतेति हि । धर्मानुच्छित्तिमेवास्य यतो वक्त्युत्तरश्रुतिः ॥७७॥ आशङ्क्यास्य ज्ञानहानिं मैत्रेय्या मोहमाह माम् । भवानित्युक्तवत्या हि नाहं मोहं वदामि ते । इत्युक्त्वा याज्ञवल्क्यो हि स्वरूपानाशमूचिवान् ॥७८॥ ज्ञानरूपस्य विज्ञाननाशस्तन्नाश एव यत् । इति शून्यमतोच्छित्त्यै पुनरानन्दपूर्वकान् । धर्मानाहाप्यनुच्छिन्नांस्तार्किकैर्विनिवारितान् । मात्रासंसर्गमप्याह तथा माध्यन्दिनश्रुतिः ॥७९॥ आचिक्षेप मतं तच्च यस्मिन् न विषयादनम् । घ्राणादिभोगाभावस्य त्वनिष्टत्वहृदा श्रुतिः ॥८०॥ येनेदमखिलं वेद विज्ञातारं स्वमेव च[1] । केन तं च विजानीयादित्यनिष्टं हि[2] सर्वथा ॥८१॥ नाखिलज्ञापको विष्णुरज्ञेयो नियमेन हि । तज्ज्ञानार्थं हि वेदानामखिलानां प्रवर्तनम् ॥८२॥ प्रत्यक्षमात्मविज्ञानाविरोधानुभवादपि । न स्वविज्ञानितायां च विरोधः कश्चनेयते ॥८३॥ कर्तृकर्मविरोधश्च नित्यानुभवरोधतः । कथमेव पदं गच्छेद् विरोधो दृष्टबाधनम् ॥८४॥ सोऽश्नुते सर्वकामांश्च कामान्नी कामरूप्यथ । इत्यादिश्रुतयश्चोक्तमर्थमेव वदन्ति हि ॥ ८५ ॥ अस्वातन्त्र्यादिवेत्युक्तं न द्वैताभावतः क्वचित् । आत्मैवाभूदिति ह्यसादविशेषप्रसङ्गतः ॥८६॥ अस्वातन्त्र्योपमाभेदभेदेष्विव उदीरितः[3] । शब्दतत्त्व इति प्रोक्तं मैत्रेय्युक्तोत्तरं च किम् ॥८७॥ सुखादिधर्महानौ तु मुक्तेः किञ्च प्रयोजनम् । यद्यर्थो दुःखहानिः स्यादनर्थः सुखनाशनम् ॥८८॥ तयोश्च दुःखहानाद्धि सुखनाशोऽधिको भवेत् । प्राप्यापि दुःखं सुमहत् सुखलेशाप्तये जनः । यतते सुखहानौ हि को मोक्षाय यतेत् पुमान् ॥८९॥ अल्पाच्च सुखनाशाद्धि बिभेत्यतितरां जनः । महच्च दुःखमाप्नोति सुखनाशनिवृत्तये ॥९०॥ नच रागनिमित्तं तद् वीतरागा अपि स्फुटम् । नारदाद्याः सुखार्थाय सहन्ते दुःखमञ्जसा । युद्धादिदर्शनं यस्मात् सुदुःखेनापि कुर्वते ॥९१॥ यदेन्द्रवैरोचनयोर्ब्रह्मास्त्राभ्यां सुतापिताः[4] । अपि नैवाऽजहुर्युद्धरसात् ते नारदादयः । इति स्कान्दवचस्तस्मात् सुखाभावाय को यतेत् ॥९२॥ विमतो दुःखयुग् यस्माच्चेतनः सन् सुखोज्झितः । प्रतिपन्नो यथेत्येव चानुमा केन वार्यते ॥९३॥ सर्वश्रुतिपुराणेषु सुखभावोक्तितस्तथा । मुक्तौ न ग्राह्य-

---

१ "च" २ "च" इति प्र. पाठौ । ३ "उदाहृतः" इति क्वचित् । ४ "प्रतापिताः" इति क्वचित् ।

अनुव्याख्यानम्

मेवैतत् सुखाभावमतं बुधैः ॥९४॥ सोऽनानन्दाद् विमुक्तः सन्नानन्दी भवति स्फुटम् । निर्गुणे ब्रह्मणि मयि धारयन् विशदं मनः । परमानन्दमाप्नोति यत्र कामोऽवसीयते ॥९५॥ न विष्णुसदृशं दैवं न मोक्षसदृशं सुखम् । न वेदसदृशं वाक्यं न वर्णोऽकारसम्मितः ॥९६॥ यत्राऽनन्दाश्च मोदाश्च मुदः प्रमुद आसते । कामस्य यत्राऽप्ताः कामास्तत्र माममृतं कृधि ॥ ॥९७॥ इति श्रुतिपुराणानि तत्रतत्र वदन्ति हि । अतो मोक्षे सुखाभाव इति यत्किञ्चिदेव हि ॥ ॥९८॥*॥ शिरःकराद्यभावश्च न मुक्तस्य भवेत् क्वचित् । श्रुतयश्च पुराणानि मानमत्र बहूनि च ॥९९॥ न वर्तते यत्र रजस्तमस्तयोः सत्त्वं च मिश्रं नच कालविक्रमः । न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः ॥१००॥ श्यामावदाताः शतपत्रलोचनाः पिशङ्ग-वस्त्राः सुरुचः सुपेशसः । सर्वे चतुर्बाहव उन्मिषन्मणिप्रवेकनिष्काभरणाः सुवर्चसः ॥१०१॥ प्रवाळवैडूर्यमृणाळवर्चसां परिस्फुरत्कुण्डलमौलिमालिनाम् । भ्राजिष्णुभिर्यः परितो विराजते लसद्विमानावलिभिर्महात्मनाम् ॥१०२॥ विद्योतमानप्रमदोत्तमाभिः सविद्युदभ्राव-लिभिर्यथा नभः । श्रीर्यत्र रूपिण्युरुगायपादयोः करोति मानं बहुधा विभू-तिभिः ॥ १०३ ॥ ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्वरीषु । ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उ त्वः ॥१०४॥ कामान्नरूपी चरतीति-पूर्वश्रुत्या पुराणोक्तिभिरप्यदोषः । देहः स्वरूपात्मक एव तेषां मुक्तिं गतानामपि चेयते हि ॥ ॥१०५॥ शिरःकराद्यैरपि मुक्तिभाजो युक्ता यतस्ते पुरुषा इदानीम् । यथेतिपूर्वा अनुमाश्च जीवस्वरूपमङ्गादियुगापयन्ति[3] ॥१०६॥ न ब्रह्मरूपत्वममुष्य देहिनो मुक्तावपि स्यात् प्रमयां कथञ्चित् । स ब्रह्मणा सहितोऽशेषभोगान् भुङ्क्ते तथोपेत्य सुखार्णवं तम् ॥१०७॥ यत्तत् परं ज्योतिरुपेत्य जीवो निजस्वरूपत्वमवाप्य कामान् । भुङ्क्ते स दैवं[4] पुरुषोत्तमोऽज आत्मेति चोक्तो गुणपूर्तिहेतोः ॥१०८॥ सेतुः स देवोऽखिलमुक्तिभाजामुतामृतस्येष्ट इहेशिता यत् । इत्यादिवाक्यैर्भगवद्वशः सन् भुङ्क्तेऽखिलान् मुक्तिगतोऽपि भोगान् ॥१०९॥ कालोऽप्यसौ नैक्ययुतः परेण जीवस्य कालो यत एष यद्वत् । इत्यादिका अप्यनुमाः प्रमाणं मुक्तौ च जीवस्य परत्वरोधे ॥११०॥ कथं च यः पूर्वमसौ न पश्चाद् भवेत् स एवेत्यपि युक्तिमेति । यतो न दृष्टं यदभून्न पूर्वं पश्चात् तदासेति कुतश्च किञ्चित् ॥१११॥ नचैव मुक्तौ तु[5] हरेः पृथक्त्वमैक्यं तथा स्यादिति युक्तिमेति । यतो न कुत्रापि भिदाऽभिदा च दृष्टा चितश्चेत-नया कुतश्चित् ॥११२॥ इत्थं मतानि भ्रमजानि यस्मान्मोक्षं समुद्देश्यमपि भ्रमेण । विदुर्न सम्यग् यदपीह लौकिकाः सुखं मम स्याच्च[6] सदेति जानते ॥११३॥*॥ औदार्यमुच्चावचशक्ति-

न्यायविवरणम्

ॐ॥ नच ज्ञानिन औदार्यान्मोक्षादन्यफलेच्छायाा एवासम्भवात्[7] तदुक्तिः प्रशंसामात्रमिति

१ "न वर्णोङ्कारसम्मितः" २ "प्रवालवैदूर्यमृणालवर्चसाम्" ३ "अङ्गादिकमावयन्ति" इति प्र.पाठाः। ४ "स देवः" इति प्र.पाठः। प्राचीनपाठे सः दैवम् इति सदा एवम् इति वा च्छेदः। ५ "मुक्तेन" ६ "स्याद्धि" इति प्र. पाठौ। ७ "फलेच्छाया असम्भवात्" इति क्वचित् पठ्यते।

अनुव्याख्यानम्

रात्मस्वरूपदाढर्य्ये च निजस्वभावः। स्वातन्त्र्यमापूर्णविशेषयोग्यता विरोधहानिश्च चतुर्थपादे॥ ॥११४॥ व्यवस्थितिस्त्वविशेषः स्थितिश्च निषेधसामान्यविधिक्रियाणाम्। विभक्तता चात्वरयैव सिद्धिर्विपक्षसम्प्राप्तिविरुद्धहेतवः[1]। ॥११५॥*॥

न्यायविवरणम्

वाच्यम्। प्रायशो न सम्भवत्येव। कस्यचित् सौभरिवद्[2] भवति[3] चेज्ज्ञानेनैवाशेषमभीप्सितं[4] भवतीति व्यवस्थोपपत्तेः ॥१॥

नचाधिकारे समेऽपि तेषामेवोच्चावचशक्तियोगात् फलभेदोपपत्तेरधिकारिविशेषकल्पनं[5] व्यर्थम्। उपसंहारस्य[6] भक्त्याद्यधिकारानुसारेण शास्त्रात् फलप्राप्तेः सर्वेषामविशेषात्। दृश्यमानत्वाच्च भक्त्याद्यधिकारतारतम्यस्य[7]। उच्चावचशक्तेरपि तन्निबन्धनत्वात् ॥२॥

नच ज्ञानिनामात्मस्वरूपदार्ढ्यात् सत्प्रवृत्तिविपरीतप्रवृत्त्योरविशेषः। "एतावतोऽधिका नास्ति प्राप्तिरित्यन्ततः स्थिता। या स्थितिस्तां समाप्नोति यथाशक्ति प्रयत्नतः। विपरीतप्रवृत्तेस्तु तस्या[8] ह्रासोऽधिकं भवेत्" इति वचनात् स्थितिविशेषोपपत्तेः ॥३॥

नच सर्वजीवानामेकप्रकार एव निजस्वभावश्चैतन्यमिति फलेऽप्यविशेषः। निषेधसामान्यविधि-क्रियाणां विभक्तत्वात्। "नादेवो देवपदमन्विच्छेदन्विच्छन् यात्यधरं तमः। न देवः स्वीयं पदमन्विच्छन् विदुष्यति तदेव ह्यस्य स्वम्[9]" इति निषेधविभागः। "स्थिरं ज्ञानं स्थिरो हराव-भिषङ्गः स्थिरमोजो बलं विराग एतद्धि सामान्यं देवानामथान्येषामस्थिराण्येव तानि[10] सर्वाण्य-थापि यथायोगं विनेयानि" इति सामान्यविभागः। "ज्ञानदानमेव देवानां विहितं तप एवं[11] ऋषीणामाचार एव मानुषाणां[12] तदविरोधेनान्यानि करणीयानि" इति विधिविभागः। "चरन्ति देवा विहितं समस्तमर्द्धमेव मुनयो दशांशतो मनुष्याः" इति क्रियाविभागः ॥४॥५॥

नच स्वातन्त्र्याद् देवानामेव ज्ञानादिफलम्, न किञ्चिदन्येषामिति वाच्यम्। "त्वरयैव मनुष्याणां सिद्धिरत्वरयैव तु। देवानां तत्प्रसादेन मुक्त्या एवं[13] सतां नृणाम्" इति मानुषमुक्त्यर्थमेव देवानामत्वरया सिद्धिश्रुतेः[14] ॥६॥

नच गृहस्थानामशेषकर्मविशेषयोग्यत्वादाधिक्यं मुक्तौ।"त्वरयैव गृहिणः साधयन्ति मुक्तिमत्वर-यैव यतयस्तेभ्यश्चात्वरया[15] देवास्तेषु च ब्रह्मा। तदेष श्लोकः शतं परानभिपश्यैव देवं ब्रह्माऽचरद्

---

१ —"विरोधहेतवः" २ "सौभर्यादिवत्" इति प्र. पाठौ। ३ "सम्भवति" इति क्वचित्। ४ "ज्ञाने-नैवाभीप्सितम्" इति "ज्ञानेनैवाशेषमीप्सितम्" इति च क्वचित् पाठभेदः। ५ "अधिकारविशेष—" इति प्र. पाठः। ६ प्र. पाठे "उपसंहारस्य" इति न पठ्यते। ७ "दृश्यमानत्वाच्चाधिकारतारतम्यस्य" इति क्वचित्। ८ "तस्य" इति प्र. पा.। "तस्याम्" इति क्वचित् कोशान्तरे। ९ "स्वीयम्" इति क्वचित्। १०"देवानाम्। अन्येषामस्थिराण्येतानि" इति प्र. पाठः। ११ "तप एवर्षीणाम्" इति प्र. पाठः। "तप ऋषीणाम्" इति क्वचित्। १२"मनुष्याणाम्" १३"मुक्तिरेव" इति प्र. पाठौ। १४ अत्र तत्त्वदीपिका— "यत्तु न्यायविवरणेऽन्यथावचनं तदात्रेयमतमुखेन मन्दाशङ्कानुवादपरमिति न तत्प्रत्यनीकत्वं सिद्धान्तवादस्य" इति। १५ "अत्वरयैव देवाः" इति क्वचित् कोशेषु।

अनुव्याख्यानम्

सुशक्यता शश्वदतिप्रसिद्धिर्विवेकविन्यासविचारसञ्ज्ञाः। नानाप्रवृत्तिः कृतकृत्यता च विपक्षतर्काः समतीतपादे ॥ ११६ ॥ महाफलत्वं प्रविविक्तता च सन्धिग्रहः साधनमात्तकृत्यम्। विशेषकार्यं कृतिसंस्थितिश्च सुयुक्तयो निर्णयगाः स्वपक्षे ॥

न्यायविवरणम्

दुश्चरं यत् तपोऽध्यम्। विहाय रागं मनसश्चापि विष्ठां ततोऽभवत् परमेष्ठी स मुक्ताविति। यो हि त्वरया साधयेत् स मन्दं सुखमाप्नुयात्। यो ह्यत्वरया स महत्" इति श्रुतेर्गृहिभ्यो यतीनां तेभ्यो देवानामत्वरया सिद्धेः। बहुकालसाधनाद् बहुकर्माधिकारमात्रस्य दुर्बलत्वात् ॥७॥
नचाऽविष्कारेण कथनादशेषतोऽपि योग्या ज्ञानिनो भवन्तीत्यास्थानचत्वरादिषु स्थित्वैव प्रकथनीयम्। नह्येवं त्वरमाणे सिद्धिर्भवति। अयोग्यानामपि श्रवणप्रसङ्गात्। तस्माद् विचार्य योग्यानामेवात्वरयैव कथित्वा सिद्धिर्भवति। "त्यक्त्वा त्वरां ब्रह्मविद्यां वदेत जनाय योग्याय सदैव विद्वान्" इति श्रुतेः। "मा नः स्तेनेभ्यः" इत्यादेश्च ॥८॥
नच विरोधाभावात् साधनानुष्ठानजन्मन्येवापरोक्षज्ञानं मुक्तिश्चेति नियमः। प्रतिबन्धे सति तन्निरासेनात्वरयैव सिद्ध्युपपत्तेः। "यद्यारब्धं कर्म निबन्धकं स्यात् प्रेत्यैव पश्येद् योगमेवान्ववेक्ष्य" इत्यादिश्रुतेः। "अनेकजन्मसंसिद्धस्ततो याति परां गतिम्" इति च भगवद्वचनम् ॥ ॥ ९ ॥ १० ॥ * ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे
तृतीयोऽध्यायः

---

ॐ॥ नच श्रवणाद्यनावृत्त्याऽपरोक्षज्ञानोदये सर्वेषां सुशक्यत्वमिति गुणः। महाफलत्वात् सर्वेषामशक्यताया एवोपपन्नत्वात्। अन्यथा सर्वसुशकस्यैव साधनतया सर्वेषां मोक्षापत्तेः ॥१॥
नच शश्वदतिप्रसिद्धत्वादात्मशब्दोदितं स्वामित्वं न नित्यश उपास्यम्। अन्येभ्योऽधिकफलत्वेन सविशेषत्वादात्मत्वस्य ॥२॥
तर्हि विशेषवत्त्वादेव प्रतीकमपीश्वर इत्युपास्यमिति च नास्ति। यत्र सन्धिरुपपत्तिर्विद्यते तस्यैव ग्राह्यत्वात्। अन्यस्येशत्वग्रहणस्य मिथ्याज्ञानत्वादेवानुपपत्तेः ॥३॥
नच प्रतिदिनं विविधगुणन्यासेन भगवत्प्रीत्युपपत्तेर्न ब्रह्मताद्दष्टिनियम इति वाच्यम्। अशेषगुणान्तर्भावेन तस्यैवाधिकसाधनत्वात् ॥४॥

---

१ "–प्रसिद्धिर्विवेक–" इति प्र.पाठः। २"कृतसंस्थितिश्च"इति क्वचित्। कृतित्वेन कृतकृत्यत्वेन संस्थितिः कृतिसंस्थितिः। ३ "मनसश्चोपरिष्ठम्" इति प्र. पाठः। "मनसश्चापि विष्ठाः" इति क्वचित्। ४ "सुखमवाप्नुयात्" इति क्वचित्। ५ "ग्रहणप्रसङ्गात्" इति कोशान्तरम्। ६ "कथयित्वा" इति प्र. पाठः। ७ "ज्ञानमेव" इति कोशान्तरे। "योगमेव" इति भाष्यसंवादी पाठः। ८"इति भगवद्वचनम्" ९"सर्वैसुशक्यस्यैव" १० "इति न" इति प्र.पाठाः। ११ "अन्येशत्वग्रहणस्य" इति "अनस्येशत्वग्रहस्य" इति च कोशान्तरयोः। १२ "तस्यैव साधनत्वात्" इति क्वचित्।

अनुव्याख्यानम्

॥ ११७ ॥ * ॥ व्यामिश्रता कार्यकरत्वमर्थक्लृप्तिः सुदार्ढ्यं परतन्त्रता च। समानधर्मः कृतशेषता च लोकोपमा पूर्वमतानुसारः ॥११८॥ विशेषसाम्यश्रुतिराढ्यता च समानलोपो महिमा विशेषः। कृतार्थता शश्वदनुप्रवृत्तिः सिद्धान्तनिर्णीतिविशिष्टहेतवः ॥११९॥*॥

न्यायविवरणम्

नच विविधस्थानेष्वादित्यादीनां चरणाद् विष्णवङ्गेष्वादित्यादिमतिनियमो नास्तीति वाच्यम्। तत्कृतावेव कृत्यस्याऽसत्वादादित्यादीनाम् ॥५॥

नच ज्ञानस्य सम्यक् तद्विषयत्वमात्रेण पूर्तेरासनादिना न कार्यमिति वाच्यम्। आसनादिना[1] निश्चलत्वादिविशेषकार्योपपत्तेः ॥६॥

नचान्यस्यापि साधनस्य कर्तुं शक्यत्वान्न यावन्मुक्ति ध्यानं कार्यमिति वाच्यम्। ध्यानं विनाऽपरोक्षज्ञानाख्यविशेषकार्यानुपपत्तेः ॥७॥

नच ज्ञानोदयेऽशेषकर्मक्षये कृतकृत्यत्वात् तदैव मुक्तिः, न चेत्, कर्माक्षय इति वाच्यम्। प्रारब्धस्यैव कृतस्य यावद्भोगं संस्थितेः[2]। "कर्माणि क्षपयेद् विष्णुरप्रारब्धानि विद्यया। प्रारब्धानि तु भोगेन क्षपयन् स्वपदं[3] नयेत्" इति वचनाच्च ॥८॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे
चतुर्थाध्यायस्य प्रथमः पादः

---

ॐ ॥ नच "वाक् पूर्वरूपं मन उत्तररूपम्", "मनः पूर्वरूपं वागुत्तररूपम्" इत्युक्तेर्व्यामिश्रत्वादनिर्णीतिरेव। "वाक् पूर्वरूपं मन उत्तररूपम्" इति वाचः पूर्ववर्णदेवतात्वनिर्देशमात्रेण "मनः पूर्वरूपम्" इत्यनेन साम्यम्। "मनसा वा अग्रे सङ्कल्पयत्यथ वाचा व्याहरति" इति युक्तितो विशेषो मनःपूर्वकत्वस्यैव श्रुत इति प्राधान्यं मनस एवेति हि ज्ञायते[4]। "सृष्टौ च विलये चैव सदा पूर्वप्रवर्तने। नियन्तृत्वे च वचसो मनोऽधीशः[5] शिवो हि तत्" इति श्रुतेश्च ॥१॥

नच मनःपूर्वकत्वनियमादशेषदृष्टादृष्टव्यापाराणां तस्य प्राणादनूनता। "इन्द्रियस्थैः स्वरूपैस्तु ज्ञानानि जनयत्यसौ। मनस्थेन विशेषेण कामैः कर्मकृदेव च। पृथक् स्थितेन रूपेण जीवं धारयति प्रभुः। जीवस्थितेन रूपेण वेदयत्यहमित्यपि। प्राण एको वशी नित्यं बाह्यान्तःकरणेश्वरः। तान्येतान्यवशान्येव तथाऽपि कृपयैव सः। पृथक्छक्तोऽपि तद्वैस्तु स्वरूपैस्तद्वकार्यकृत्। तस्येशो भगवान् विष्णुरेवमेष यथाऽन्यगः" इत्यादिश्रुतेः प्राणस्यैवाऽढ्यतावगमात् ॥२॥

---

१ "आसीनत्वादिना" इति क्वचित्। २ "यावद्भोगसंस्थितेः" इति "यावद्भोगं स्थितेः" इति च कोशान्तरयोः। ३ "स्वं पदम्" इति प्र. पाठः। ४ "एवेति ज्ञायते" इति प्र. पाठः। "एव ज्ञायते" इति "एव हि ज्ञायते" इति च कोशान्तरयोः। ५ "मनोऽधीशम्" इति प्र. पाठः। क्वचित् कोशान्तरेषु च।

भाष्यम्

॥ वाङ्मनसि दर्शनाच्छब्दाच्च ॥१॥

वागभिमानिन्युमा मनोभिमानिनि रुद्रे विलीयते। वाचो मनोवशत्वदर्शनात्। "तस्य यावन्न वाङ् मनसि सम्पद्यते" इति शब्दाच्च।

"उमा वै वाक् समुद्दिष्टा मनो रुद्र उदाहृतः। तदेतन्मिथुनं ज्ञात्वा न दाम्पत्याद् विहीयते" इति हि स्कान्दे[1] ॥*॥

॥*॥ इति प्रथममधिकरणम्[2] ॥*॥

॥ अत एव च सर्वाण्यनु ॥२॥

अत एव शब्दात् सर्वाणि दैवानि[3] यथानुकूलं विलीयन्ते।

"अग्नौ सर्वे देवा विलीयन्तेऽग्निरिन्द्र इन्द्र उमायामुमा रुद्रे विलीयत एवमन्यानि दैवानि यथानुकूलम्" इति हि गौपवनश्रुतिः॥*॥

॥*॥ इति द्वितीयमधिकरणम्[4] ॥*॥

॥ तन्मनः प्राण उत्तरात् ॥३॥

"मनः प्राणे" इत्युत्तराद् वचनान्मनोभिमानी रुद्रः प्राणे वायौ विलीयते।

न्यायविवरणम्

"सोऽध्यक्षे" इत्यस्याप्येवमेवाऽऽशङ्का परिहारश्च। श्रुतिबाहुल्यमेवाऽऽशङ्कायां[5] परिहारे च विशेषहेतुः[6] ॥३॥

नच भूतानामुत्पत्तिक्रमवैपरीत्येन लयोक्तेर्मुक्तिलययोर्विशेषभावाँ[7]च्चैकस्मिन्नेव भूते सर्वेषां लयोऽर्थतः क्लृप्त इति वाच्यम्। तत्तद्भूतोद्भवत्वात् तत्तद्देवानां तत्समानां[8] च विशेषवचनाभावे स्वसमानलयस्थान एव लयोपपत्तेः। विशेषश्रुतेश्च॥४॥५॥

नच प्रकृतेरसंसारादिनेशेना[9]प्यन्यथाकर्तुमशक्यत्वेन सुदृढत्वात् सर्वसाम्यमेवेश्वरेण, न चेत् संसारित्वमिति युक्तम्। ईश्वरस्य महामहिमत्वात्। नित्यासंसारित्वस्यँ[10] नित्यतदनुग्रहेणैवोपपत्तेः। "सदाऽनित्यतयाऽनित्यं नित्यं नित्यात्मना यतः। नित्ययैव स्वशक्त्येशो नियामयति नित्यदा","द्रव्यं कर्म च कालश्च स्वभावश्चेतना धृतिः। प्रकृतिः पुरुषश्चैव न सन्ति यदुपेक्षया" इत्यादिश्रुतेश्च ॥६॥

---

१ "इति स्कान्दे" इति प्र. पाठः। २ प्र. पाठेऽत्र नाधिकरणपूर्तिः। ३ "अत एव च शब्दात् सर्वाणि दैवतानि" इति प्र. पाठः। ४ प्र. पाठेऽत्र प्रथममधिकरणम्। ५ "शङ्कायाम्" इति प्र. पाठः। ६ इतः परं "भूतेषु तच्छ्रुतेः" इति "नैकस्मिन् दर्शयतो हि" इति च सूत्रद्वयं भाष्यरीत्याऽधिकरणद्वयमिति कृत्वा तत्र प्रथममधिकरणं न विवृतमिति सम्प्रदायव्याख्यानम्। द्वे सूत्रे एकमधिकरणमित्यनुव्याख्यानन्यायविवरणयोः पक्षः। भाष्यरीत्याऽधिकरणद्वयमेव। तथाहि "प्रधानवायुस्त्विह" इत्यनुव्याख्याने नयचन्द्रिका—"इह भूतेषु तच्छ्रुतेः, नैकस्मिन् दर्शयतो हि इत्येतस्मिन्नधिकरणे" इति। ७ "विशेषाभावाच्च" ८ "तत्समानानाम्" ९ "संसाराभावादिना" १० "नित्यमसंसारित्वस्य नित्यं तदनुग्रहेणैव" इति प्र.पाठाः।

भाष्यम्

"वायोर्वाव रुद्र उदेति वायौ विलीयते तस्मादाहुर्वायुर्देवानां श्रेष्ठ इति" इति च[1] कौण्डिन्यश्रुतिः॥ * ॥

॥*॥ इति तृतीयमधिकरणम्[2] ॥*॥

## ॥ सोऽध्यक्षे तदुपगमादिभ्यः ॥४॥

स प्राणः परमात्मनि विलीयते ।

"सर्वे प्राणमुपगच्छन्ति प्राणः परममुपगच्छति[3] प्राणं देवा अनु प्राणन्ति प्राणः परमनु प्राणिति तस्मादाहुः प्राणस्य प्राण इति", "प्राणः परस्यां देवतायाम्", "मुक्ताः सन्तोऽग्निमाविश्य देवाः सर्वेऽपि भुञ्जते । अग्निरिन्द्रं तथेन्द्रश्च वायुमाविश्य सोऽपि तु । आविश्य परमात्मानं भुङ्क्ते भोगांस्तु बाह्यकान् । नह्यानन्दो निजस्तेषां परैर्लभ्यः कथञ्चन । किमु विष्णोः परानन्दो न ते विष्णविति श्रुतेः । प्राणस्य तेजसि लयो मार्गमात्रमुदाहृतम् । सर्वेशितुश्च सर्वादेस्तस्यान्यत्र लयः कथम्" इत्यादिश्रुतिस्मृतिभ्यः॥*॥

॥*॥ इति चतुर्थमधिकरणम्[4] ॥*॥

## ॥ भूतेषु तच्छ्रुतेः ॥५॥

भूतेष्वन्येषां देवानां लयः ।

"भूतेषु देवा विलीयन्ते भूतानि परे न पर उदेति नास्तमेत्येकल एव मध्ये स्थाता" इति बृहच्छ्रुतेः ॥*॥

॥*॥ इति पञ्चममधिकरणम्[5] ॥*॥

अनुव्याख्यानम्

प्रधानवायुस्त्विह वायुनामा भूतेष्वितिप्रोक्तगतोऽपि युक्त्या । यस्माच्छ्रुतौ पवते चेति भूरि प्रोक्तो यतो भूतमानी च सोऽपि । महामानी त्वल्पमानी च यस्मात् तच्छब्देनाप्युच्यते

न्यायविवरणम्

नचान्यदेवादीनां प्राणाधीनत्वात् तत्प्राप्तिनियमात् परप्राप्तिर्नास्त्येव । "प्राणं प्राप्य परं देवास्तदन्ये चैव तद्गताः । प्राप्नुवन्ति परं देवं वसन्ति च यथासुखम्" इति विशेषश्रुतेः ॥७॥

नच सत्यसङ्कल्पत्वादेरीश्वरसङ्कल्पाद्यनुसारित्वनियमे संसारसमानधर्मत्वं मुक्तेरिति वाच्यम् । कृतार्थत्वेनैव विशेषोपपत्तेः। "अपूर्णतादिभावो वा दुःखं वा नास्ति किञ्चन । मुक्तस्य पारतन्त्र्येऽपि तारतम्येऽप्यतः सुखी" इति च श्रुतिः ॥८॥

नच प्रारब्धकर्मशेषत्वादुत्क्रान्तावविशेषो[6] ज्ञानिनः । ज्ञानोदयानन्तरं सर्वदा ज्ञानफलस्यानुप्रवृत्तेः[7] ।

---

१ प्र. पाठे श्रुतिघटकमितिपदं न पठ्यते। "श्रेष्ठ इति च कौण्डिन्यश्रुतिः" इतीयदेव। २ प्र. पाठेऽत्र द्वितीयमधिकरणम्। ३ "परमुपगच्छति" इति प्र. पाठः। ४ प्र. पाठेऽत्र तृतीयमधिकरणम्। ५ प्र. पाठेऽत्र चतुर्थमधिकरणम्। ६ "शेषवत्त्वात्" ७ "अनुवृत्तेः" इति प्र. पाठौ।

भाष्यम्

## ॥ नैकस्मिन् दर्शयतो हि ॥६॥

नैकस्मिन् भूते सर्वेषां देवानां लयः ।

"पृथिव्यामृभवो[1] विलीयन्ते वरुणेऽश्विनावग्नावग्नयो वायाविन्द्रः सोम आदित्यो बृहस्पतिरित्याकाश एव साध्या विलीयन्ते", "मृत्यवः पृथिव्यां वरुण आपोऽग्नयस्तेजसि मरुतो मारुत आकाशे विनायका विलीयन्ते" इति महोपनिषच्चतुर्वेदशिखा[2] च दर्शयतः। अतोऽग्नौ देवा विलीयन्त इति तत्र[3] निर्दिष्टानामेव ॥*॥

॥*॥ इति षष्ठमधिकरणम्[4] ॥*॥

## ॥ समानां चामृत्युपक्रमादमृतत्वं चानुपोष्य ॥७॥

देशतः कालतश्च व्याप्त्या समो ना परमपुरुषो यस्याः सा समना। संसारानुपक्रमात् स्वत एवामृतत्वं तस्याः। बृहच्छ्रुतिश्च—

अनुव्याख्यानम्

तेन सोऽपि॥१२०॥तस्मिन् लयं यान्ति भूतान्यशेषक्रमाविरोधेन स एव विष्णौ। इन्द्रादीनां तत्र लयः क्रमं तु प्रोक्तं विशेषादनुसृत्य नान्यत् ॥१२१॥ तस्मादशेषा गिरिजां प्रविश्य

न्यायविवरणम्

"प्रारब्धकर्मशेषस्तु विरजातरणावधिः। स्वोदयात् फलदं ज्ञानमादेहंकर्म वाऽऽरवेः[5]। तथाऽपि प्रकृतेर्बन्धो ब्रह्मणा सह भिद्यते" इति हि श्रुतिः[6]। "शरीरे पाप्मनो हित्वा सर्वान् कामान् समश्नुते" "स तेजसि सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यत एवं हैव स पाप्मना[7] विनिर्मुक्तः", "स प्राप्नोति[8] विरजां नदीं तत् सुकृतदुष्कृते विधूनुते", "ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे" इति च। "अन्यथाभावनियमोऽनृतता कार्यकारणे" इति च ॥९॥

नच कृष्यादिलौकिकसाधनस्य फलस्मरणानपेक्षत्वात् स्वर्गमोक्षयोरपि तथात्वमिति वाच्यम्। "क्रियानुवृत्तिर्लौकिके साधने तु मनोऽनुवृत्तिर्वैदिके साधने स्यात्। भवेत् फलं मे सर्वथेत्येवं[9] तस्मात् स्मरेत् सदा निश्चितत्वेन विद्वान्" इति श्रुतेस्तत्तदनुसार्यनुवृत्तेर्लौकिकवैदिकयोः[10] साम्यात् अतोऽत्र फलानुस्मरणं लवनादिकृष्यनुवृत्तिवद् द्रष्टव्यम्। वचनप्रामाण्यात् ॥१०॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे
चतुर्थाध्यायस्य द्वितीयः पादः

---

१ "ऋभवः" २ "–शिखे च" ३ "इत्यत्र" इति प्र. पाठाः। ४ प्र. पाठेऽत्र पञ्चममधिकरणम्। ५ "चाऽरवेः" इति क्वचित्। ६ "इति श्रुतिः" इति प्र. पाठः। ७ "एवं हैव पाप्मना" इति प्र. पाठः। "एवा हैव स पाप्मना" इति क्वचित्। ८ "सम्प्राप्नोति" इति क्वचित्। ९ "फलं भवेत् सर्वथेत्येव" इति प्र. पाठः। "भवेत् फलं सर्वथेत्येव" इति क्वचित्। १० प्र. पाठे प्राचीनकोशेषु च क्वचित् "श्रुतेस्तदनुसारि–" इत्येव पाठः।

भाष्यम्

"द्वौ वाव सृत्यनुपक्रमौ प्रकृतिश्च परमश्च द्वावेतौ नित्यमुक्तौ नित्यौ च सर्वगतौ चैतौ ज्ञात्वा विमुच्यते" इति ॥*॥

॥*॥ इति सप्तममधिकरणम्[1] ॥*॥

नैतावता साम्यम्—

॥ तदापीतेः[2] संसारव्यपदेशात् ॥८॥

"समावेतौ प्रकृतिश्च परमश्च नित्यौ सर्वगतौ नित्यमुक्तावसमावेतौ प्रकृतिश्च परमश्च विलीनो हि प्रकृतौ संसारमेति विलीनः परमे ह्यमृतमेति[3]" इति सौपर्णश्रुतेः ॥*॥

॥ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥९॥

सूक्ष्मत्वं चाधिकं ब्रह्मणः प्रकृतेः । ज्ञानानन्दैश्वर्यादिप्रमाणाधिक्यं च ।

"सर्वतः प्रकृतिः सूक्ष्मा प्रकृतेः परमेश्वरः । ज्ञानानन्दौ तथैश्वर्यं गुणाश्चान्येऽधिकाः प्रभोः" इति हि[4] तुरश्रुतिः ॥*॥

॥ नोपमर्देनातः ॥१०॥

अतस्तस्य ये विशेषगुणास्तेषामनुपर्देनैव साम्यम् ।

"देशतः कालतश्चैव समा प्रकृतिरीश्वरे । उभयोरप्यबद्धत्वं तद्बन्धः परात्मनः । स्वत एव परेशस्य सा चोपास्ते सदा हरिम् । प्रकृतेः प्राकृतस्यापि ये गुणास्ते तु विष्णुना । नियता नैव केनापि नियता हि हरेर्गुणाः" इति हि भविष्यत्पर्वणि[5] ॥*॥

॥ अस्यैव चोपपत्तेरूष्मा ॥११॥

"द्विधा हीदमवद्दश्यत ऊष्मावदनूष्मावच्च । तत्रोष्मावत् परं ब्रह्म यन्न जिघ्रन्ति न पश्यन्ति न शृण्वन्ति न विजानन्त्यथानूष्मावत् प्रकृतिश्च प्राकृतं च यन्न जिघ्रन्ति जिघ्रन्ति च यन्न पश्यन्ति पश्यन्ति च यन्न शृण्वन्ति शृण्वन्ति च यन्न जानन्ति विजानन्ति च[6]" इति सौपर्णश्रुतिश्च[7] किञ्चित्साम्योपपत्तेः ॥*॥

॥ प्रतिषेधादिति चेन्न शारीरात् ॥१२॥

"असमो वा एष परो नहि कश्चिदेवं दृश्यते सर्वे ह्येतेऽणवो जायन्ते च म्रियन्ते च

अनुव्याख्यानम्

तयैव रुद्रं सह तेन वाणीम् । तया पतिं प्राप्य सहैव तेन लयं हरौ यान्ति समस्तजीवाः[8] ॥ ॥१२२॥ सोमस्तु वारीशयुतोऽनिरुद्धं विशत्यसौ काममसौ च वारुणीम् । सा शेषदेवं स

---

१ प्र. पाठेऽत्र नाधिकरणपूर्तिः । २ "तदपीतेः" इति प्र. सूत्रपाठः । "आ समन्तादपीतेरित्यविज्ञातत्वात् प्रवेशस्योक्तम्" इति तत्त्वदीपिका । "अविज्ञातं प्रविष्टं यदापीतमिति कीर्तितम्" इति हि वदन्ति। ३ "ह्यमृतत्वमेति" इति प्र. पाठः । कोशान्तरेषु च तथा । हृषीकेशतीर्थीये तु 'त्व' इति निक्षिप्य निरासि । ४ "च" ५ "इति भविष्यत्पर्वणि" ६ "न जानन्ति जानन्ति च" ७ "सौपर्णश्रुतेः" इति प्र.पाठाः । ८ "समस्तजीवैः" इति क्वचित् प्राचीनकोशेषु पाठः । तत्त्वदीपिकासम्मतोऽपि पाठः स एवेति भाति ।

भाष्यम्

च्छिद्रा ह्येते भवन्त्यथ परो न जायते न म्रियते पूर्णश्चैष भवति" इति चतुर्वेद-शिखायां साम्यप्रतिषेधान्नेति चेत्, न।

शारीराद्धि साम्यं प्रतिषिद्ध्यते ॥*॥

कुतः?—

॥ स्पष्टो ह्येकेषाम् ॥१३॥

"अथातः समाश्चासमाश्चाभिधीयन्ते समासमाश्चाथ समानि ब्रह्मणो रूपाणि यैरुत्पत्तिः स्थितिर्लयो नियतिरायतिश्च। एकं ह्येवैतद् भवत्यथासमा ब्रह्मेन्द्रो रुद्रः प्रजापतिर्बृहस्पतिर्येकेच देवा गन्धर्वा मनुष्याः पितरोऽसुरा यत्किञ्चेदं चरमचरं चाथ समासमा प्रकृतिर्वाव समासमा। एषा हि नित्याऽजरा तद्वशा च" इति स्पष्टो हि माध्यन्दिनायनानां समादिवादः ॥*॥

॥ स्मर्यते च ॥१४॥

"मत्स्यकूर्मवराहाद्याः समा विष्णोरभेदतः। ब्रह्माद्यास्त्वसमाः प्रोक्ताः प्रकृतिश्च समासमा" इति च वाराहे ॥*॥

॥*॥ इत्यष्टममधिकरणम् ॥*॥

॥ तानि परे तथा ह्याह ॥१५॥

प्राणद्वारेण सर्वाणि दैवानि परमात्मनि लीयन्ते।

"सर्वे देवाः प्राणमाविश्य देवे मुक्ता लयं परमे यान्त्यचिन्त्ये" इति हि कौषारव-श्रुतिः ॥ * ॥

॥*॥ इति नवममधिकरणम् ॥*॥

॥ अविभागो वचनात् ॥१६॥

"एते देवा एतमात्मानमनुविश्य सत्याः सत्यकामाः सत्यसङ्कल्पा यथानिकाममन्तर्बहिः परिचरन्ति" इति गौपवनश्रुतिः।

अनुव्याख्यानम्

गिरं च सैव वायुं विशत्यञ्ज इतीह निर्णयः॥१२३॥उमागिरीशार्वपि भारतीराविति स्म वाग् वेद-गता ब्रवीति। अहीन्द्रपत्नीमहिषं विरिञ्चपत्नीं विरिञ्चं च विमुक्तिकाले॥१२४॥ त एव यत् तत्पदमाप्नुवन्ति तत्काल एतान् समुपास्य जीवाः। ब्रह्मत्वकाले प्रविशन्ति चैतानिति स्म वाक् तादृशतामुपैति॥१२५॥ सूर्योऽग्नियुक्तो गुरुमाप्य तेन शक्रं सहैनेनं सुपर्णपत्नीम्। तया सुपर्णं सह तेन वार्णी ब्रह्माणमेतद्गत एव याति॥१२६॥ इन्द्रप्रवेशस्तु यदोच्यतेऽत्र

---

१ "सैषा" २ "इति वाराहे" इति प्र.पाठौ। ३ प्र. पाठेऽत्र षष्ठमधिकरणम्। ४ "सर्वाणि दैवतानि" ५ "विलीयन्ते" ६ "इति कौषारवश्रुतिः" ७ प्र. पाठेऽत्र सप्तममधिकरणम्। ८ "उमागिरीशाविति" ९ "सहैतेन" इति प्र. पाठौ।

भाष्यम्

तत् परमेश्वरकामाद्यविभागेनैव तेषां सत्यकामत्वम् ।

"कामेन मे काम आगाद्धृदयाद्धृदयं मृत्योः" इति वचनात् । "मुक्तानां सत्यकामत्वं सामर्थ्यं च परस्य तु । कामानुकूलकामत्वं नान्यत् तेषां विधीयते" इति हि ब्राह्मे[1] ॥*॥

॥*॥ इति दशममधिकरणम्[2] ॥*॥

॥ तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥१७॥

उत्क्रान्तिकाले हृदयाग्रज्वलनं[3] भवति । "तस्य हैतस्य हृदयस्याग्रं प्रद्योतते" इति श्रुतेः । तत्प्रकाशितद्वारो निष्क्रामति । विद्यासामर्थ्यात् ।

"यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कळेबरम्[4] तं तमेवैति कौन्तेय सदा तद्भाव-भावितः" इति स्मृतेर्विद्याशेषगत्यनुस्मरणयोगाच्च[5] । "आचार्यस्तु ते गतिं वक्ता" इति हि लिङ्गम् । "हृदिस्थेनैव हरिणा तस्यैवानुग्रहेण तु । उत्क्रान्तिर्ब्रह्मरन्ध्रेण तमेवोपासतो[6] भवेत्" इति चाध्यात्मे । "शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभि निस्सृतैका[7] । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति" इति च ॥*॥

॥ रश्म्यनुसारी ॥१८॥

निष्क्रामति ।

"सहस्रं वा आदित्यस्य रश्मय आसु नाडीष्वातातास्तत्र श्वेतः सुषुम्नो ब्रह्मयानः सुषुम्नायामाततस्तत्प्रकाशेनैष निर्गच्छति" इति हि पौत्रायणश्रुतिः[8] ॥*॥

॥ निशि नेति चेन्न सम्बन्धात् ॥१९॥

रश्म्यभावान्निशि ज्ञानिन उत्क्रमणं न युक्तमिति चेत्, न । सर्वदा सम्बन्धाद् रश्मीनाम् ॥*॥

अनुव्याख्यानम्

तदा ह्युमेत्येव सुपर्णपत्नी । उक्ता सुपर्णश्च गिरीशनाम्ना ततो विरोधश्च न कश्चनात्र ॥१२७॥ भृग्वादयो दक्षमवाप्य तेन प्राप्येन्द्रमेतेन सुपर्णपत्नीम् । विशन्ति ये मनवो राजमुख्या मनुं प्रविश्यात्र गता महेन्द्रम् ॥१२८॥ आकाश उर्वी च गुरुं प्रविश्य तेनैव यातः पुरुहूतदेवम् । सनादयो यतयः काममेव विशन्ति शिष्टा अपि हव्यवाहम् ॥१२९॥ वर्णाश्रमाचाररता मनुष्या धर्मं मनुं सोऽपि समेति काले । तमेव सर्वे पितरः सुरानुगाः सर्वे कुबेरं स च सोममेव ॥ ॥१३०॥ विमुक्तिकाले प्रविशन्त्यभीक्ष्णं भोगांश्च तद्देहगताः प्रभुञ्जते । आनन्दसुव्यक्तिरमुत्र तेषां भवत्यतश्चेष्टत एव निर्गताः । क्रीडन्ति भूयश्च समाविशन्ति तानेव सायुज्यमिदं

---

१ "इति ब्राह्मे" इति प्र. पाठः । २ प्र.पाठेऽष्टममधिकरणम् । ३ "हृदयस्याग्रज्वलनम्" ४ "कलेवरम्" इति प्र. पाठौ । ५ "गत्यनुस्मृतियोगाच्च" इति क्वचित् । ६ "उपासताम्" इति प्र.पाठः । ७ "अति निस्सृतैका" इति क्वचित् । ८ "इति पौत्रायणश्रुतिः" इति प्र. पाठः ।

भाष्यम्

कियत्कालम् ?—

॥ यावद्देहभावित्वाद् दर्शयति च ॥२०॥

यावद् देहो विद्यते तावद् रश्मिसम्बन्धोऽस्त्येव ।

"संसृष्टा वा एते रश्मयश्च नाड्यश्च नैषां वियोगो यावदिदं शरीरमत एतैः पश्यत्येतैरुत्क्रामत्येतैः प्रवर्तते" इति हि माध्यन्दिनायनश्रुतिः[1] ॥*॥

॥ अतश्चायनेऽपि दक्षिणे[2] ॥२१॥

"दक्षिणे मरणाद् याति स्वर्गं ब्रह्मोत्तरायणे" इत्युक्तेऽपि ज्ञानिनो दक्षिणायनोत्क्रान्तिर्युज्यते । "शतं पञ्चैव सूर्यस्य दक्षिणायनरश्मयः। तावन्त एव निर्दिष्टा उत्तरायणरश्मयः। ते सर्वे देहसम्बद्धाः सर्वदा सर्वदेहिनाम् । महर्लोकादिगन्तार उत्तरायणरश्मिभिः । निर्गच्छन्तीतरैश्चापि यैरेष्टव्येतरा गतिः । उत्तरं दक्षिणमिति ते एवं तु निगद्यते । नतु कालविशेषोऽस्ति ज्ञानिनां नियमात् फलम् । ददाति कालेऽनुगुणे फलं किञ्चिद् विशिष्यते । अत्युत्तमानां केषाञ्चिन्न विशेषोऽस्ति कालतः" इति हि नारायणाध्यात्मे[4] ॥*॥[5]

॥ योगिनः प्रति स्मर्येते[6] स्मार्ते चैते ॥२२॥

न केवलं कालादिकृते ब्रह्मचन्द्रगती स्मर्येते । किन्तु ? ज्ञानयोगिनः कर्मयोगिनश्च ।

"अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः। धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् । तत्र चान्द्रमसं ज्योतिर्योगी

अनुव्याख्यानम्

वदन्ति॥१३१॥ सायुज्यहीनाश्च[7] लये तु सर्वे प्रोक्तेन मार्गेण विशन्ति सृष्टौ । बहिश्च निर्यान्ति ततोऽन्यदाऽपि सायुज्यभाजां भवति प्रवेशः ॥ १३२ ॥ उक्तं समस्तं परमश्रुतौ हि प्रोक्तं तु[8] सर्गक्रमतो विपर्ययः। मुक्तौ लये यद्वदथो लयश्च विपर्ययेणेत्यवदद् गिरां पतिः[9] ॥ १३३ ॥ लयो यतो मुक्तिरियं सुराणां भोगो विशेषेण च यं वदिष्यति। उक्तश्च बिम्बप्रतिबिम्बभावः पिङ्गश्रुतावुक्तलयानुसारतः[10] ॥१३४॥ बिम्बे लयो यन्नियतश्च मुक्तौ चिदात्मनां तद्वशता च सर्वदा। तेजोऽभिधा तु श्रियमाप्य विष्णुमग्रे ततः पुत्रतयैव वायुः। आप्तः प्रसूतः पुनरेव विष्णुं प्रविश्य मुक्तः प्रळये[11]ऽत्र तिष्ठति ॥ १३५॥

---

१"इति माध्यन्दिनायनश्रुतिः" इति प्र. पाठः । २ "अतश्चायनेऽपि हि दक्षिणे" इति प्र. सूत्रपाठः। ३ "त एव" ४ "इति नारायणाध्यात्मे" इति प्र.पाठौ। ५ प्र. पाठेऽत्र नवमाधिकरणपूर्तिः। ६ यद्यपि प्राचीनकोशेषु "योगिनः प्रति स्मर्यैते" इत्येव सूत्रपाठः। नतु "स्मर्यैते" इति । शङ्कररामानुजभास्करादिभिः पूर्वतनैः वल्लभादिभिर्नूतनैश्च स्मर्यत इत्येव पठित इति संवादोऽपि भवति । तथाऽपि "गती स्मर्येते" इति भाष्यस्वारस्यात् तथैव सूत्रपाठ आहृतः। कथं तर्हि प्रतनकोश: ? शृङ्गच्युतिः सम्भाव्यते । यदि स एव पाठः स्यात् तदा--न केवलं कालादिकृते एते गती। किन्तु योगिनः प्रत्येव। यतः- "अग्निर्ज्योतिः" इत्यादि स्मर्यते गीतायाम् इत्यादि व्याख्येयम्। ७ "–हीनास्तु" ८"च" ९"गिरां प्रभुः" १०"पैङ्गिश्रुतौ" ११"प्रलये" इति प्र.पा.।

भाष्यम्

प्राप्य निवर्तते" इत्यत्र योगीति विशेषणात्। स्मरणनिमित्ते चैते गती "गत्यनुस्मरणाद् ब्रह्म चन्द्रं वा गच्छति ध्रुवम्। अननुस्मरतः काले स्मरणं प्राप्य वै गतिः" इति ह्यध्यात्मे[1] ॥*॥

॥*॥ इत्येकादशमधिकरणम्[2] ॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते

श्रीमद्ब्रह्मसूत्रभाष्ये

— चतुर्थाध्यायस्य द्वितीयः पादः —

ॐ ॥ मार्गो गम्यं चास्मिन् पाद उच्यते।

॥ अर्चिरादिना तत्प्रथितेः ॥१॥

"तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहः[3]" इत्यर्चिषः प्राथम्यं श्रूयते। "यदा [ह्] वै पुरुषोऽस्माल्लोकात् प्रैति स वायुमागच्छति" इति वायोः। तत्रार्चिःप्राप्तिरेव[5] प्रथमा।

"द्वावेव मार्गौ प्रथितावर्चिरादिर्विपश्चिताम्। धूमादिः कर्मिणां चैव सर्ववेदविनिर्णयात्", "अग्निर्ज्योतिरिति द्वेधैवार्चिषः सम्प्रतिष्ठितिः। अग्निं गत्वा ज्योतिरेति प्रथमं ब्रह्म संव्रजन्[6]। एकस्मिंस्तु पुरे संस्थो द्विरूपोऽग्नेः सुतो महान्" इति च[7] ब्रह्मतर्के ॥*॥

॥*॥ इति प्रथममधिकरणम् ॥*॥

॥ वायुशब्दादविशेषविशेषाभ्याम् ॥२॥

अर्चिषो वायुं गच्छति। "स वायुमागच्छति" इति सामान्यवचनात्।

अनुव्याख्यानम्

सर्वेऽपि ते मुक्तगणा अमन्दसान्द्रं निजानन्दमशेषतोऽपि। भुञ्जन्त एवाऽऽसत ईशदेहे लयेऽथ सर्गे बहिरेव यान्ति ॥१३६॥ प्रयाति धर्मं निरृतिस्तु शक्रं मरुद्गणाः पार्षदास्तथैव[8]। सर्वेऽनिरुद्धं पृतनाधिपाद्यास्तुरश्रुतिर्हीत्थमियं विमुक्तिः ॥१३७॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते

श्रीमद्ब्रह्मसूत्रानुव्याख्याने

— चतुर्थाध्यायस्य द्वितीयः पादः —

ॐ ॥ उत्क्रान्तमार्गश्च विमुक्तगम्यं पादोदितम् ॥*॥ सुक्रमविक्रमौ च। सान्तानिकं प्राप्ति-

---

१ "इत्यध्यात्मे" इति प्र. पाठः। २ प्र. पाठेऽत्र दशममधिकरणम्। ३ इतः परं प्र.पाठे "अह्न आपूर्यमाणपक्षम्" इत्यधिकम्। ४ प्राचीनकोशेषु "यदा वै" इत्येव पठ्यते। ५"अर्चिषः प्राप्तिरेव" ६"संव्रजन्निति" ७ "इति ब्रह्मतर्के" इति प्र. पाठः। ८ "पारिषदाः" इति प्र. पाठः। प्राचीनपाठे पारुषदा इति शिथिलितसंयुक्तमुच्चारणम्।

भाष्यम्

"स इतो गतो द्वितीयां गतिं वायुमागच्छति वायोरहरह्न आपूर्यमाणपक्षम्" इति विशेषवचनाच्च ॥*॥

॥*॥ इति द्वितीयमधिकरणम् ॥*॥

॥ तटितोऽधि वरुणः सम्बन्धात् ॥३॥

"मासेभ्यः संवत्सरं संवत्सराद् वरुणलोकं वरुणलोकात् प्रजापतिलोकम्" इति कौण्डिन्यश्रुतिः। "संवत्सरात् तटितमागच्छति तटितः प्रजापतिलोकम्" इति च गौपवनश्रुतिः।

तत्र तटितो वरुणं गच्छति।

"तटिता ह्यूह्यते वरुणलोकस्तटिदुपरि मुक्तामयो राजते तत्रासौ वरुणो राजा सत्यानृते विविञ्चति" इत्युपरिसम्बद्धत्वश्रुतेः[1] ॥*॥

॥*॥ इति तृतीयमधिकरणम् ॥*॥

॥ आतिवाहिकस्तल्लिङ्गात् ॥४॥

पूर्वत्रोक्तस्त्वातिवाहिको वायुः। पूर्वगमनलिङ्गात् ॥*॥

कुतः?—

॥ उभयव्यामोहात् तत्सिद्धेः ॥५॥

"स वायुमागच्छति" इति प्रथममुच्यते। "उत्क्रान्तो विद्वान् परमभिगच्छन् विद्युतमेवान्तत उपगच्छति द्यौर्वाव विद्युत् तत्पतिं वायुमुपगम्य तेनैव ब्रह्म गच्छति" इत्यन्तेऽपि वायुगमनश्रुतेः पूर्वोक्त[2] आतिवाहिकः परो वेति व्यामोहे, उत्तरे दिवस्पति-रिति विशेषणात् पूर्वत्राऽतिवाहिकस्यैव सिद्धेः।

ब्रह्मतर्के च—

"उत्क्रान्तस्तु शरीरात् स्वाद् गच्छत्यर्चिषमेव तु। ततो हि वायोः पुत्रं च योऽसौ नाम्नाऽऽतिवाहिकः। ततोऽहः पूर्वपक्षं चाप्युदक् संवत्सरं तथा। तटितं वरुणं चैव प्रजापं सूर्यमेव च। सोमं वैश्वानरं चेन्द्रं ध्रुवं देवीं दिवं तथा। ततो वायुं परं प्राप्य तेनैति पुरुषोत्तमम्" इति।

॥*॥ इति चतुर्थमधिकरणम् ॥*॥

॥ वैद्युतेनैव ततस्तच्छ्रुतेः ॥६॥

प्रकारान्तरेण तत्रतत्रोच्यमानत्वाद् वायोरपि परतो ब्रह्मणोऽर्वाग् गन्तव्योऽस्मीति नाऽशङ्कनीयम्।

अनुव्याख्यानम्

रभीष्टता च सौकर्यमित्यन्यमतस्य तर्काः॥१॥ विशेषसम्प्राप्तिरुरुत्वमाप्तिः क्रमानुरागः कथितानुवृत्तिः। सिद्धान्तनिर्णीतिकराः ॥*॥ प्रतीकं देहादिकं तद्गतमेव ये नराः ॥२॥ उपासते ते

---

१ "सम्बन्धश्रुतेः" इति प्र. पाठः। क्वचित् "सम्बन्धत्वश्रुतेः" इति कोशेषु पठ्यते। "सम्बद्धत्वश्रुतेः" इति तु तत्त्वप्रदीपिका। २ "पूर्वोक्तः" इति प्र.पाठः।

भाष्यम्

विद्युत्पतिना वायुनैव "स एनान् ब्रह्म गमयति" इति ब्रह्मगमनश्रुतेः ।

"विद्युत्पतिर्वायुरेव नयेद् ब्रह्म नचापरः। कुतोऽन्यस्य भवेच्छक्तिस्तमृते प्राणनायकम्" इति च बृहत्तन्त्रे[1] ॥*॥

॥*॥ इति पञ्चममधिकरणम् ॥*॥

॥ कार्यं बादरिरस्य गत्युपपत्तेः ॥८॥

"स एनान् ब्रह्म गमयति" इति कार्यं ब्रह्म गमयतीति बादरिर्मन्यते ।

"ऋते देवान् परं ब्रह्म कः पुमान् प्राप्नुयात् क्वचित् । यद्यपि ब्रह्मदृष्टिः स्याद् ब्रह्मलोकमवाप्नुयात्" इत्यध्यात्मवचनात् तस्यैव गत्युपपत्तेः ॥*॥

॥ विशेषितत्वाच्च ॥८॥

"यदि ह वाव परमभिपश्यति प्राप्नोति ब्रह्माणं चतुर्मुखं प्राप्नोति ब्रह्माणं चतुर्मुखम्" इति कौषारवश्रुतौ ॥*॥

॥ सामीप्यात्तु तद्व्यपदेशः ॥९॥

"ब्रह्मविदाप्नोति परम्" इति व्यपदेशस्तु[2] समीप एवं[3] परमपि प्राप्नोतीत्येतदर्थमेवं[4] ॥*॥

कदा ?—

॥ कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥१०॥

"ते ह ब्रह्माणमभिसम्पद्य यदैतद् विलीयतेऽथ सह ब्रह्मणा परमभिगच्छन्ति[5]" इति सौपर्णश्रुतेर्महाप्रळये तदध्यक्षेण ब्रह्मणा सह गच्छति[6] ॥*॥

॥ स्मृतेश्च ॥११॥

"ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे । परस्यान्ते परात्मानः प्रविशन्ति परं पदम्" इति ॥*॥

॥ परं जैमिनिर्मुख्यत्वात् ॥१२॥

ब्रह्मशब्दस्य तत्रैव मुख्यत्वात् परमेव ब्रह्म गमयतीति जैमिनिर्मन्यते ॥*॥

न्यायविवरणम्

ॐ॥ नच तत्रतत्र मार्गस्यान्यथोक्तेरधिकारिभेदेन पृथक्[7] पृथङ् मार्गः सुक्रमोपपत्तेरिति वाच्यम् । "सर्वे वा एत उत्क्रामन्ति तेऽर्चिषमेवाभियन्ति[8] ततो वायुमतोऽहः पूर्वपक्षमित्येष एवं[9] ब्रह्मपथः। द्वे सृती[10] अशृणवं पितॄणामहं देवानामुत मर्त्यानाम् । ताभ्यामिदं विश्वमेजत् समेति यदन्तरा पितरं

---

१ "इति बृहत्तन्त्रे" २ "तद्व्यपदेशस्तु" इति प्र. पाठौ । ३ "समीपत एव" इति प्र. पाठः । कोशान्तरेषु च तथा । ४ "एतदर्थं एव" इति प्र॰पाठः। ५ यद्यपि प्राचीनकोशे "परमभिगच्छति" इति पठ्यते। तथाऽप्यन्वयौचित्यात् कोशान्तरसंवादाच्च "गच्छन्ति" इत्येव साध्विति निश्चीयते । ६ "गच्छन्ति" ७ "अधिकारिभेदेन पृथङ् मार्गसुक्रमोपपत्तिः" ८ "अभिसंयन्ति ततो वायुं ततोऽहः" ९ "एष उ एव" इति प्र. पाठाः। १० "द्वे स्रुती" इति प्र. पाठः । क्वचित् कोशान्तरेषु च ।

भाष्यम्

॥ दर्शनाच्च ॥१३॥

दृष्टत्वाच्च परब्रह्मणः ॥*॥

॥ नच कार्ये प्रतिपत्त्यभिसन्धिः ॥१४॥

नहि कार्ये प्रतिपत्तिः प्राप्नवानीत्यभिसन्धिश्च ।

"यदुपास्ते पुमान् जीवन् यत्प्राप्तुमभिवाञ्छति । यच्च पश्यति तृतः संस्तत् प्राप्नोति मृतेरनु" इति हि पाद्मे ॥*॥

॥ अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात् तत्क्रतुश्च ॥१५॥

"प्रतीकं देह उद्दिष्टो येषां तत्रैव दर्शनम् । नतु व्याप्ततया क्वापि प्रतीकालम्बनास्तु ते । अप्रतीका देवतास्तु ऋषीणां शतमेव च । राज्ञां च शतमुद्दिष्टं गन्धर्वादिशतं तथा । एतेऽधिकारिणो व्याप्तिदर्शनेऽन्ये नतु क्वचित् । अयोग्यदर्शने यत्नाद् भ्रंशः पूर्वस्य चापि तु । अप्रतीकाश्रया ये हि ते यान्ति परमेव तु । स्वदेहे ब्रह्मदृष्ट्यैव गच्छेद् ब्रह्मसलोकताम् । ब्रह्मणा सह सम्प्राप्ते संहारे परमं पदम्" इति गारुड-वचनात्, उभयत्रोक्तदोषाच्चाप्रतीकालम्बनान् परं नयति । "स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत् कर्म कुरुते यत् कर्म कुरुते तदभिसम्पद्यते" इति श्रुतेश्च। अत्र कर्मोपासनमेव । अन्यान् कार्यं नयतीति भगवन्मतम् ॥*॥

अनुव्याख्यानम्

पुरतः समाप्नुयुर्ब्रह्माणमस्मान्मतिमाप्य विष्णुम् । प्राप्स्यन्त्यतोऽन्येऽपि तमाप्य तस्माद्धरिं गत्वा मुक्तिभाजः परान्ते ॥३॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते

श्रीमद्ब्रह्मसूत्रानुव्याख्याने

— चतुर्थाध्यायस्य तृतीयः पादः—

---

न्यायविवरणम्

मातरं च" इति विशेषश्रुतितो ज्ञानिनामेकमार्गस्यैव प्रोक्तेः । "एष एव ब्रह्मपथः" इत्यवधारण-विरोधादन्यथा। एजदिति वैदिकानुष्ठानवत उक्तेर्नाधोगतिविरोधः। "पुनरावर्तिनो ये तु तेषां धूमपथो ध्रुवः । अन्येषामर्चिरादिश्च तद्भेदो मध्यसंस्थितिः । धूमार्चिरादिदेवेभ्यः प्राप्यानुज्ञां तु मध्यगाः। विहृत्य स्वेष्टदेशेषु तदूर्ध्वं यान्ति चाधरम् । अत्यल्पानामविज्ञाताऽप्यनुज्ञावर्तिनां भवेत् । पुंद्वारेण स्वदृष्ट्या वा यथायोग्यं विमुच्यताम् । अतो न मार्गभेदोऽस्ति नहि मार्गोऽत्र सम्भवः ।

---

१ "इति पाद्मे" २ "गन्धर्वाणां शतम्" ३"व्याप्तदर्शिनः" इति प्र. पाठाः । ४"परं गताः" इति क्वचित् कोशेषु पठ्यते । ५ "प्राप्तत्वात्" इति क्वचित् । ६ "यान्ति वाऽधरम्" इति कोशान्तरे ।

भाष्यम्

## ॥ विशेषं च दर्शयति ॥१६॥

"अन्तःप्रकाशा बहिःप्रकाशाः सर्वप्रकाशा देवा वाव सर्वप्रकाशा ऋषयोऽन्तःप्रकाशा मानुषा[1] एव बहिःप्रकाशाः" इति चतुर्वेदशिखायाम् ॥*॥

॥*॥ इति षष्ठमधिकरणम् ॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीमद्ब्रह्मसूत्रभाष्ये
— चतुर्थाध्यायस्य तृतीयः पादः—

---

न्यायविवरणम्

प्रेतत्वं वा[2]ऽधरो मार्गः पापजत्वाद् द्वयो[3]ः पृथक्" इति स्मृतेश्च ॥१-४॥

नच "सोमादग्निमग्नेरिन्द्रम्" इति सोमादग्नेरवरस्या[4]पि प्राप्तेः प्रधानवायोरप्यवरोऽन्यः प्राप्योऽस्त्विति वाच्यम्। उत्तमत्वात् तस्यैव ब्रह्मप्रापयितृत्वशक्तेः। "वायुरेव ब्रह्म गमयति तस्य हैषा[5] शक्तिः। नह्यन्यो ब्रह्म गमयति प्रियो ह्येनद् गमयति नह्यन्यः प्रियो ब्रह्मणः" इति श्रुतेः। मार्गे त्ववरस्यापि यथामार्गं पश्चात् प्राप्तिर्भवति लोकवत्। नहि राजानं यःकश्चित् प्रापयति क्लृप्तमतिप्रियं चातिहा[6]य ॥५॥

नच चतुर्मुखस्य मुक्ति[7]पर्यन्तं सन्ततत्वनियमाद् बन्धस्य तावद् भगवत्प्राप्तिर्नास्तीति नियमः। "यान्ति देवं परं केचित् पूर्वं केचिल्लये विभुम्। योग्यतातारतम्येन विशेषोऽयमपीष्यते" इति श्रुतेस्तथा प्राप्तत्वात् ॥*॥ नच परब्रह्मण एव ब्रह्मशब्दमुख्यार्थत्वेन प्रथमप्राप्तत्वादपोह्यायुक्तेस्तस्यैव प्राप्तिनियमः। "यान्ति देवं परं केचित्" इति प्रमाणप्राप्तत्वादेव ॥*॥ नच परप्राप्तिर्यस्याभीष्टा तस्य तत्प्राप्तिरिति नियमः। "क्रमानुरागी भगवान् क्रमात् पुम्भिरवाप्यते। अतः क्रमात् समृद्धे तु ज्ञाने ब्रह्मलये नरैः। प्राप्यते नियमेनैव कैश्चिदेवाऽप्यते मृतौ" इति भगवतः क्रमानुरागित्वश्रुतेः ॥*॥ नच बहुधा श्रुतेर्यथासौकर्यं चतुर्मुखस्य परस्य वा प्राप्तिरिति वाच्यम्। श्रुत्युक्तानुवृत्तेरेव न्याय्यत्वात्। "सप्रतीकाश्चतुर्मुखमप्रतीकाः परममु हैते गच्छन्त्यागच्छन्ति च चतुर्मुखात् परमं परमाच्चतुर्मुखं[8] यावद्विलयमथ सह चतुर्मुखेन विमुच्यन्त आनन्दीभवन्ति[9]" इति हि श्रुतिः। अन्तर्भेदाधिकरणत्वात् समुदायोक्तिः ॥६॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे
चतुर्थाध्यायस्य तृतीयः पादः

---

१ "मनुष्या एव" २ "चाधरः" ३ "तयोः" इति प्र. पाठाः। ४ "अवमस्यापि" इति क्वचित् पठ्यते। ५ "ह्येषा" ६ "चापहाय" ७ "चतुर्मुखमुक्तिपर्यन्तम्" ८ "पराच्चतुर्मुखम्" इति प्र.पाठाः। ९ "आनन्दिनो भवन्ति" इति प्र. पाठः। प्राचीनपाठे च्विः।

भाष्यम्

ॐ॥ भोगमाहास्मिन् पादे ।

॥ सम्पद्याविहाय स्वेन शब्दात् ॥१॥

"स य एवंविदेवं मन्वान एवं पश्यन्नात्मानमभिसम्पद्यैतेनाऽत्मना यथाकामं सर्वान् कामाननुभवति" इति सौपर्णश्रुतिः । "परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति च । "एतं सेतुं तीर्त्वाऽन्धः सन्ननन्धो भवति" इति च ।

तत्र तरणं नाम तत्प्राप्तयेऽन्यतरणमेव ।

"इमां घोरामशिवां नदीं तीर्त्वैतं सेतुमाप्यैतेनैव सेतुना मोदते प्रमोदत आनन्दीभवति" इति मौद्गल्यश्रुतेः[1] ॥*॥

॥ मुक्तः प्रतिज्ञानात् ॥२॥

मुक्त एवचात्रोच्यते[2] ।

"अहरहरेनमनुप्रविशत्युपसङ्क्रमे[3] च न तत्र मोदते न प्रमोदते न कामाननुभवति बद्धो ह्येष तदा भवत्यथ यदैनं मुक्तोऽनुप्रविशति मोदते च प्रमोदते च कामांश्चैवानुभवति

अनुव्याख्यानम्

ॐ॥ अतिक्रमोक्तिः कृतिरर्थलाभः परा गतिः पारगतिस्तदोकः । समस्तकार्ये वशिता च विश्वसम्भावना युक्तयस्त्वन्यपक्षे ॥१॥ सामान्यरूपं प्रतिभानमुक्तिराश्चर्यताऽकृत्रिमताऽस्तदोषः । विशेषक्लृप्तिः कृतनिःश्रमश्च माहात्म्यमित्येव सुनिर्णयार्थाः ॥२॥*॥

न्यायविवरणम्

ॐ॥ नच "एतं सेतुं तीर्त्वा" इत्यत्रातिक्रमोक्तेर्मुक्तो ब्रह्म तीर्त्वा गच्छति । तरतीति सामान्यरूपप्रतीतेः[4] । ब्रह्म तीर्त्वेदं गच्छतीति विशेषानुक्तेः । "इमां घोरामशिवां नदीं तीर्त्वा ब्रह्म सम्पद्यते" इति विशेषोक्तेश्चैतं सेतुं प्रत्यन्यं[5] तीर्त्वैत्यर्थोपपत्तेः[6] ॥१॥

नच कृतिमत्त्वादमुक्त एवोच्यते "स तत्र पर्येति" इत्यादौ । "स्वेन रूपेणाभिनिष्पद्यते" इति मुक्तस्य स्पष्टं प्रतिभातत्वाच्छ्रुतौ । "स तत्र पर्येति" इति श्रुत्यैक्यप्रतीतेश्च । एवम्भूतस्यापि प्रकरणत्वं परिकल्प्य[7] श्रुतिबाधाङ्गीकारे सा श्रुतिरप्येवं विभज्य किं न योजयितुं शक्येति[8] श्रुतेरेवाभावप्रसङ्गः । "सत्यं ज्ञानम्" इत्यादावपि सत्यमित्यस्याऽन्नमित्यनेनान्वय इत्यादिप्रसङ्गात् ॥२॥

नच परञ्ज्योतिःशब्देनाऽदित्यज्योतिरङ्गीकारे "स तेजसि सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यत एवं हैव स पाप्मना विनिर्मुक्तः" इत्यादिनैकार्थतेति प्रयोजनम् । "अथ किमुच्यते परञ्ज्योतिरित्यात्मैव परञ्ज्योतिः स हि परमो द्योतते जीवाच्चाजीवाच्च तस्मादाहुः परञ्ज्योतिरिति तमेष[9] जीवोऽभिसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति तस्यैव परञ्ज्योतिष्ट्वोक्तेः । सावकाशश्रुते[10]र्निरवकाशश्रुतेरेवातिबलवत्त्वात्[11] ॥३॥

---

१ प्र॰ पाठेऽत्र प्रथमाधिकरणपूर्तिः । २ "मुक्त एवात्रोच्यते" ३ "उपसङ्क्रमते" ४ "सामान्यप्रतीतेः" इति प्र. पाठाः । ५ "अन्यत् तीर्त्वा" इति प्र॰ पाठः । प्राचीनपाठे–अन्यं संसारम् । ६ "अन्यथोपपत्तेः" ७ "प्रकल्प्य" ८ "किं योजयितुं न शक्यत इति" ९ "तमेवैषः" इति प्र. पाठाः । १० "सावकाशलिङ्गात्" इति च पाठान्तरम् । ११ "श्रुतेरेव बलवत्त्वात्" इति प्र. पाठः ।

भाष्यम्

कामांश्चैवानुभवति" इति बृहच्छ्रुतौ प्रतिज्ञानात् ॥*॥

॥ आत्मा प्रकरणात् ॥३॥

परञ्ज्योतिःशब्देन परमात्मैवोच्यते । तत्प्रकरणत्वात् ।

"परञ्ज्योतिः परम्ब्रह्मपरमात्मादिका गिरः । सर्वत्र हरिमेवैकं ब्रूयुर्नान्यं कथञ्चन" इति च ब्रह्माण्डे ॥*॥

॥*॥ इति प्रथममधिकरणम् ॥*॥

॥ अविभागेन दृष्टत्वात् ॥४॥

ये भोगाः परमात्मना भुज्यन्ते त एव मुक्तैर्भुज्यन्ते ।

"यानेवाहं शृणोमि यान् पश्यामि यान् जिघ्रामि तानेवैत इदं शरीरं विमुच्यानुभवन्ति" इति दृष्टत्वाच्चतुर्वेदशिखायाम् ।

भविष्यत्पुराणे च—

"मुक्ताः प्राप्य परं विष्णुं तद्भोगान् लेशतः क्वचित् । बहिष्ठान् भुञ्जते नित्यं नाऽनन्दादीन् कथञ्चन" इति ॥*॥

॥*॥ इति द्वितीयमधिकरणम् ॥*॥

॥ ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥५॥

सर्वदेहपरित्यागेन मुक्ताः सन्तो ब्राह्मेणैव देहेन भोगान् भुञ्जत इति जैमिनिर्मन्यते ।

"स वा एष ब्रह्मनिष्ठ इदं शरीरं मर्त्यमतिसृज्य ब्रह्माभिसम्पद्य ब्रह्मणा पश्यति ब्रह्मणा शृणोति ब्रह्मणैवेदं सर्वमनुभवति" इति माध्यन्दिनायनश्रुतावुपन्यासात् । "आदत्ते हरिहस्तेन हरिदृष्ट्यैव पश्यति । गच्छेच्च हरिपादेन मुक्तस्यैषा स्थितिर्भवेत्" इति स्मृतेः । "गच्छामि विष्णुपादाभ्यां विष्णुदृष्ट्या च दर्शनम् । इत्यादिपूर्वस्मरणान्मुक्तस्यैतद् भविष्यति" इति बृहत्तन्त्रोक्तयुक्तेश्च ॥*॥

न्यायविवरणम्

नच परमगतित्वादीश्वराभुक्ता अपि भोगा मुक्तौ भवन्ति, ईश्वरस्य स्वत एव पूर्णानन्दत्वादभोगस्यापि सम्भवादिति वाच्यम् । "पूर्णानन्दः पूर्णभुक् पूर्णकर्ता पूर्णज्ञानः पूर्णभाः पूर्णशक्तिः । आश्चर्यत्वाद् भगवान् वासुदेवो विरुद्धशक्तिर्नच दोषस्पृगीशः" इत्याश्चर्यतयैव ब्रह्मण उभयोक्तेः सावकाशोपपत्तिमात्रान्निरवकाशश्रुतियुक्तोपपत्तेरेव बलवत्त्वात् ॥४॥

नच पारगतत्वान्मुक्तस्य चिन्मात्रदेहोऽपि नास्तीति वाच्यम् । अकृत्रिमत्वात् तस्य देहस्यानपगमनात् ।

---

१ ३ प्र. पाठे "कामांश्चैवानुभवति" इति सकृदेव पठ्यते । २ प्र. पाठेऽत्र द्वितीयाधिकरणपूर्तिः । ३ "इति ब्रह्माण्डे । इति प्र.पाठः । ४ प्र· पाठेऽत्र तृतीयमधिकरणम् । ५ प्र. पाठेऽत्र चतुर्थमधिकरणम् । ६ "अतिसंसृज्य" इति क्वचित् । ७ "हरिपादाभ्याम्" ८ "व्याससमृतेः" ९ "पूर्णैश्वर्यात्" १०"पारङ्गतत्वात्" ११"अनपगमात्" इति प्र. पाठाः ।

भाष्यम्

॥ चितिमात्रेण तदात्मकत्वादित्यौडुलोमिः ॥६॥

चितिमात्रो देहो मुक्तानां पृथग् विद्यते । तेन भुञ्जते ।

"सर्वं वा एतदचित् परित्यज्य चिन्मात्र एवैष भवति चिन्मात्र एवावतिष्ठते तामेतां मुक्तिरित्याचक्षते" इत्युद्दालकश्रुतेश्चिदात्मकत्वादित्यौडुलोमिर्मन्यते ॥*॥

॥ एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ॥७॥

"स वा एष एतस्मान्मर्त्याद् विमुक्तश्चिन्मात्रीभवत्यथ तेनैव रूपेणाभिपश्यत्यभिशृणोत्यभिमनुतेऽभिविजानाति तामाहुर्मुक्तिं॰" इति सौपर्णश्रुतौ चिन्मात्रेणाप्युपन्यासाज्जैमिन्युक्तस्य (च॰) भावादुभयत्राप्यविरोधं बादरायणो मन्यते ।

नारायणाध्यात्मे च —

"मर्त्यं देहं परित्यज्य चितिमात्रात्मदेहिनः । चितिमात्रेन्द्रियाश्चैव प्रविष्टा विष्णुमव्ययम् । तदङ्गानुगृहीतैश्च स्वाङ्गैरेव प्रवर्तनम् । कुर्वन्ति भुञ्जते भोगांस्तदन्तर्बहिरेव वा । यथेष्टं परिवर्तन्ते तस्यैवानुग्रहेरिताः" इति ॥*॥

॥*॥ इति तृतीयमधिकरणम्[३] ॥*॥

न्यायविवरणम्

"अथ विमुक्तस्य चिन्मात्र एव देहो भवति चिन्मात्राणि करणानि तैरीशानुगृहीतैर्भोगान् भुङ्क्ते" इति श्रुतेः ॥५॥

नच भगवदोकस्थितत्वान्मुक्तस्य[४] तस्याप्योकस्त्वसाम्येन तत्तदुपायसाध्यभोगसाधनत्वं वाच्यम् । निर्दोषत्वात् तदोकसो मुक्तस्य च "सङ्कल्पादेव" इतिश्रुत्युक्तानुसारेणोपपत्तेः[५] ॥६॥

नच परगृहगतत्वादस्य राजगृहगतस्येव स्वाधमा अपि कदाचिदीशते। निर्दोषत्वादेव मुक्तस्येश्वरस्य तत्रस्थानां च मुक्तान्तराणां[६] राजदोषवद् दोषासम्भवाद् यथायोग्यमेव स्वीकारोपपत्तेः । "मुक्तानां पतयो देवा देवानां च प्रजापतिः । तस्य विष्णुर्नचैवेदं पारावर्यं विनश्यति" इति च श्रुतिः[७] ॥७॥

नच देहभावे तत्कार्यदुःखादिस्तदभावे भोगासम्भव इति दोषः। "देहाभावाच्च भावाच्च निर्भोगत्वं[८] च दुःखिताम् । यान्त्यमुक्ता नोभयं च मुक्तानां वशिता यतः" इति श्रुत्यैव विशेषक्लृप्तेः ॥८॥

नच सङ्कल्पादेव समस्तसम्भवात् सृष्ट्यादिसमस्तकार्यसम्भवः। "व्यापारो जगतो विष्णोर्मुक्तानां तु स्वभोगगः। नहि स्वर्णं शुद्धमपि वह्निकार्यकरं भवेत् । अयोग्याशक्तितश्चैव[९] नाधिकानन्दसम्भवः। नहि कश्चित् सुशक्तोऽपि चकाराचेतनं चितिम्। नच कामस्तथा भूयात् ततः स्यात् सत्यकामता[१०]" इति श्रुत्या विशेषक्लृप्तेरेव । "मुक्तानां न जगद्यत्नस्तथाऽपि विबुधाः सदा । मुक्तानां तु नियन्तारस्तेषां ब्रह्माऽस्य वै हरिः" इति च विशेषक्लृप्तिः ॥९॥

---

१ यद्यप्यत्र श्रुतिघटकमेकमितिपदमपेक्षितम् । परन्तु बहुषु कोशेषु सकृदेवेतिः पठ्यते। एकस्मिंस्तु कोशे "मुक्तिरितीति सौपर्णश्रुतौ" इति । २ प्राचीनकोशेषु "च" न पठ्यते । ३ प्र. पाठेऽत्र पञ्चममधिकरणम् । ४ "भगवदोकसि स्थितत्वात्" ५ "श्रुत्यनुसारेण" ६ "तत्रस्थानां मुक्तान्तराणां च" ७ "इति श्रुतिः" ८ "निर्भोगित्वम्" इति प्र. पाठः । ९ "अयोग्याशक्तितस्त्वेव" इति च पाठान्तरम् । १० "सत्यकामिता" इति प्र. पाठः ।

भाष्यम्

॥ सङ्कल्पादेव च तच्छ्रुतेः ॥८॥

न[1] तेषां भोगादिषु प्रयत्नापेक्षा ।

" स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति " इत्यादिश्रुतेः ॥*॥

॥*॥ इति चतुर्थमधिकरणम्[2] ॥*॥

न्यायविवरणम्

नच वशित्वान्मुक्तस्यापि वृद्धिः। कृतकृत्यत्वेन निःश्रमत्वादुपासनादावभ्यासपाटवान्निर्दोषत्वात् स्नेहाधिक्याच्च तस्यैव परमसुखरूपत्वेन फलरूपत्वात् । "अभ्यासपाटवात् स्नेहादश्रमत्वादुपासना । भक्तिश्च सुखरूपैव मुक्तानां नतु साधनम् " इति च श्रुतिः[3] ॥१०॥

नचानन्तत्वात् कालस्य त्रयोदशीपञ्चदशीवत् (कदाचित्[4]) समस्तस्यापि सम्भवान्मुक्तस्यापि पुनरावृत्त्याशङ्केति वाच्यम् । सत्यकामत्वादिमाहात्म्यात् । "अशेषकामसत्यत्वान्मुक्तानामपुनर्भवः[5]। यस्मात् स कामयेदेव नित्यमात्मापुनर्भवम् " इति च श्रुतिः ॥११॥*॥

इत्यनन्तमहान्यायमीमांसापारवारिधेः । उत्तारणात्यशक्त्यैव व्याकुलीभूतचेतसाम्[6] ॥
मन्दानामुपकाराय महतां चोच्छ्रितात्मनाम् । तद्विशेषपरिज्ञानप्रदीप्तार्काभचेतसाम् ॥
विशेषगाढे मनसि नितरां चोपकारकः[7] । न्यायप्लवो मयाऽकारि सङ्क्षेपात् प्रमिताक्षरैः ।
विस्तरोऽप्ययमेव[8] स्यात् तद्विशेषातिवेदिनाम् ॥ व्याख्यानुव्याख्ययोरेव विस्तरो[9] यदुदीरितः ।
अनल्पचेतसां पुंसामलं विज्ञानसिद्धये ॥ तन्न्यायोद्धरणेऽशंक्ता[10] अपि ह्येतेन सुस्थिरम् ।
न्यायानुगं मनः कुर्युरतिसङ्ग्रहलालसाः[11] । को नामाशेषविद्योरुसागरोन्मथनोद्धृतम् ॥
साक्षाद् विद्याधिराजेन न्यायामृतमनुत्तमम् । अशेषतोऽधिगच्छेत वन्द्यो वृन्दारकोऽपि सन् ॥
एवं सुदुर्लभेऽप्यद्धा महान्यायपरामृते । केचनाधिक्रियन्ते[12] च तत्प्रसादानुरञ्जिताः ।
ब्रह्माद्या अमृते यद्वत् सागरोन्मथनोद्धृते । अहं तु तत्प्रसादैकमहास्पदबलोद्धतः ॥
न्यायामृतार्णवमिममवगाह्य विभज्य च । सङ्क्षेपविस्तराभ्यां च चकर[13] व्याकृतिं कृतिम् ॥
तत्प्रसादमृते कस्य शक्तिः संसारसागरे । मग्नस्य चेतनस्य स्यात् तत्कृतानुकृतौ क्वचित् ॥
नित्यानन्दामृतस्यन्दितत्कटाक्षैर्धितस्य[14] तु । का नु शक्तिर्भवेन्नैव ततः कोऽत्रातिविस्मयः ॥
विद्याविद्ये सुखं दुःखमशक्तिः शक्तिरेवच । उत्पत्तिस्थितिनाशाश्च विशेषाश्चापरेऽखिलाः[15] ॥
चेतनाचेतनस्यास्य समस्तस्य यदिच्छया । स मम स्वकृतेनैव प्रीयतां पुरुषोत्तमः ॥*॥

---

१ "नच तेषाम्" इति क्वचित् । २ प्र. पाठेऽत्र षष्ठमधिकरणम् । ३ "इति श्रुतिः" इति प्र. पाठः । ४ "कदाचिद्" इति प्राचीनकोशे न पठ्यते । "कदाचित् समस्तस्यापि भावात्" इति कोशान्तरम् । ५ "मुक्तानां न पुनर्भवः" इति प्र. पाठः । ६ " व्याकुलीकृतचेतसाम्" इति प्र.पाठः। कोशान्तरेषु च तथा। ७ "नितरामुपकारकः" इति प्र.पाठः । कोशान्तरे च । ८ "विस्तारः" इति प्र. पाठः । कोशान्तरे च । ९ "विस्तारः" इति प्र. पाठः। १० अत्र शक्ता अशक्ता इति द्वेधाऽपि च्छेदः । ११ " इति सङ्ग्रहलालसाः" इति च पाठान्तरम् । १२ "अधिक्रियन्तेऽत्र" १३ "चकार" इति प्र. पाठौ । १४ " -कटाक्षेधितस्य" इति क्वचित् । १५ "विशेषाश्च परेऽखिलाः" इति पाठान्तरम् ।

भाष्यम्

## ॥ अत एव चानन्याधिपतिः ॥९॥

सत्यसङ्कल्पत्वादेव ।

"परमोऽधिपतिस्तेषां विष्णुरेव न संशयः । ब्रह्मादिमानुषान्तानां सर्वेषामविशेषतः । ततः प्राणादिनामान्ताः सर्वेऽपि पतयः क्रमात् । आचार्यश्चैव सर्वेऽपि यैर्ज्ञानं सुप्रतिष्ठितम् । एतेभ्योऽन्यः पतिर्नैव मुक्तानां नात्र संशयः" इति हि वाराहे[1] ॥*॥

॥*॥ इति पञ्चममधिकरणम्[2] ॥*॥

## ॥ अभावं बादरिराह ह्येवम् ॥१०॥

चिन्मात्रं विनाऽन्यो देहस्तेषां न विद्यत इति बादरिः ।

"अशरीरो वाव तदा भवत्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतो याभ्यां ह्येष उन्मथ्यते" इत्येवं कौण्ठरव्यश्रुतावाह हि ॥*॥

अनुव्याख्यानम्

अनन्यभृत्यत्वमिहोदितेभ्यस्त्वन्यस्य भृत्यत्वनिवारणाय। पतिं यदेषामपि विष्णुमाह ह्युतामृतत्वस्य पतित्ववाग्घरेः ॥३॥ एतेऽपिचान्याधिपतित्वयुक्ता विष्ण्वन्यचित्त्वेन यथा पुमांसः । प्रसिद्धिभाजस्त्विति चानुमैव ह्यभीष्टसिद्ध्यै भवतीह निश्चयात् ॥४॥ मुक्तस्वकीयावरयन्तृताऽस्ति मुक्तावपि ब्रह्मपुरस्सराणाम् । अनेन देवेन तथाऽमुना च हीष्टे परार्वाक्तनलोकिनामिति ॥५॥ फलं श्रुतिर्ज्ञानत आह मुक्तावेतच्च सर्वाशुभनाशलिङ्गात् । लोकाधिपत्यं च विधातुरेव सर्वात्मनेत्याह तुरश्रुतिश्च । सर्वे बलिं देवगणा वहन्तीत्येतच्च नान्यस्य हि[3] युक्तिमेति ॥६॥ लोका इतीहापि तु लोकिनां वचो लोका इति ह्येव रवः प्रजासु । प्रयुज्यते सर्वजनैः सदैव तन्मानिनो लोकपदेन चोक्ताः । तद्वास्तु मुक्ता इह लोकशब्दा अन्योन्यनाथा इति पैङ्गिनां श्रुतिः ॥७॥ अलोकशब्देन विमुक्तिभाजो वाच्याः पदं तादृगपीह युक्तम् ।

न्यायविवरणम्

यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं
बट् तद् दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपुर्मध्वो
यत्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ॥*॥
नमोऽब्जभवभूर्यक्षपुरस्सरसुराश्रय[4] ।
नारायणारणं मह्यं मापते प्रेयसां प्रिय ॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे
चतुर्थोऽध्यायः

॥ इति न्यायविवरणम् ॥

---

१ "इति वाराहे" इति प्र. पाठः। २ प्र॰ पाठेऽत्र सप्तममधिकरणम्। ३ "तु" इति प्र.पाठः। ४"नमोऽजभव" इत्यादि प्र. पाठः। प्राचीनपाठे—अब्जभवो ब्रह्मा। भूर्यक्षो रुद्र इन्द्रश्च। त्र्यक्षत्वात् सहस्राक्षत्वाच्च।

भाष्यम्

॥ भावं जैमिनिर्विकल्पाम्नानात् ॥११॥

"स वा एष एवंवित् परमभिपश्यत्यभिशृणोति ज्योतिषैव रूपेण चिता वाऽचिता वा नित्येन वाऽनित्येन वाऽथाऽनन्दी ह्येवैष भवति नानानन्दं[1] कश्चिदुपस्पृशति " इत्यौद्दालकायनश्रुतौ[2] विकल्पाम्नानादन्यदेहस्यापि भावं जैमिनिर्मन्यते ॥*॥

॥ द्वादशाहवदुभयविधं बादरायणोऽतः ॥१२॥

यथा द्वादशाहः क्रत्वात्मकः सत्रात्मकश्च भवति, एवं मुक्तभोगो बाह्यशरीरकृतश्चिन्मात्रकृतश्च भवतीति बादरायणो मन्यते ॥*॥

उपपत्तिश्च—

॥ तन्वभावे सन्ध्यवदुपपत्तेः ॥१३॥

सन्ध्यं स्वप्नः । " सन्ध्यं तृतीयं स्वप्नस्थानम्" इति श्रुतेः ॥*॥

॥ भावे जाग्रद्वत् ॥१४॥

ब्रह्मवैवर्ते च —

" स्वप्नस्थानां यथा भोगो विना देहेन युज्यते । एवं मुक्तावपि भवेद् विना देहेन भोजनम् । स्वेच्छया वा शरीराणि तेजोरूपाणि कानिचित् । स्वीकृत्य जागरितवद् भुक्त्वा त्यागः कदाचन " इति ॥*॥

॥ प्रदीपवदावेशस्तथा हि दर्शयति ॥१५॥

शरीरमनुविश्यापि[3] तत् प्रकाशयन्तः पुण्यानेव भोगाननुभवन्ति । नतु दुःखादीन् । यथा प्रदीपो दीपिकादिषु प्रविष्टस्तत्स्थं तैलाद्येव भुङ्क्ते नतु तत्कार्ष्ण्यादि[4] । " तीर्णो हि तदा सर्वाञ्छोकान् हृदयस्य भवति " इति हि दर्शयति ॥*॥

नच " स्वर्गे लोके न भयं किञ्चनास्ति " इत्यादिना स्वर्गादिस्थस्यैतदिति वाच्यम् । यतः —

॥ स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥१६॥

सुप्तौ मोक्षे वा तदुच्यते ।

अनुव्याख्यानम्

लोकाभिधाश्चापि यतो हि मुक्ताः[5] प्रकाशरूपाः सततं च सर्वे । ब्रह्मैव लोकाधिपतिर्विमुक्तो भवेदिति प्राह तुरश्रुतिश्च॥८॥नचेह विज्ञानफलं समुक्तं लोकाधिपत्यं रविबिम्बगे हरौ। उक्तं पृथक् तच्च पुरैव यस्माद् भेदोऽमुनेत्यादि च सम्यगुक्तः ॥९॥ त्वप्रत्ययं चाप्यतिहाय नैव

१ प्राचीनकोशे "नानन्दम्" इति पठ्यते । स्खलनं स्यात् । यदि स एव पाठः; लोपः समान इति लोपो वा, अनन्दमिति च्छेदो वा । २ " इत्यौद्दालकश्रुतौ " इति प्र.पाठः । ३ " अनुप्रविश्यापि " इति क्वचित् । ४ "नतु कार्ष्ण्यादि" इति प्र. पाठः । ५ "विमुक्ताः" इति पाठान्तरम् ।

भाष्यम्

"अत्र पिताऽपिता भवति", "अनन्वागतं पुण्येनानन्वागतं पापेन" इत्याद्यावि-ष्कृतत्वात् ।

ब्रह्मवैवर्ते च—

"ज्योतिर्मयेषु देहेषु स्वेच्छया विश्वमोक्षिणः । भुञ्जते सुसुखान्येव न दुःखादीन् कदाचन । तीर्णा हि सर्वशोकांस्ते पुण्यपापादिवर्जिताः । ( निवृत्तसर्वदोषास्ते पुण्य-पापविवर्जिताः।)[1] सर्वदोषनिवृत्तास्ते गुणमात्रस्वरूपिणः" इति ॥*॥

॥*॥ इति षष्ठमधिकरणम्[2] ॥*॥

## ॥ जगद्व्यापारवर्जम् ॥१७॥

"सर्वान् कामानाप्त्वाऽमृतः समभवत्" इत्युच्यते । तत्र सृष्ट्यादिभ्योऽन्यानाप्नोति[3] ॥*॥ कुतः ?—

## ॥ प्रकरणादसन्निहितत्वाच्च ॥१८॥

जीवप्रकरणत्वाज्जीवानां तादृक्सामर्थ्यविदूरत्वाच्च । वाराहे च—

"स्वाधिकानन्दसम्प्राप्तौ सृष्ट्यादिव्यापृतिष्वपि । मुक्तानां नैव कामः स्यादन्यान् कामांस्तु भुञ्जते । तद्योग्यता नैव तेषां कदाचित् क्वापि विद्यते । नचायोग्यं विमुक्तोऽपि प्राप्नुयान्नच कामयेत्" इति ॥*॥

## ॥ प्रत्यक्षोपदेशादिति चेन्नाऽधिकारिकमण्डलस्थोक्तेः ॥१९॥

"ता यो वेद । स वेद ब्रह्म । सर्वेऽस्मै देवा बलिमा वहन्ति" इति प्रत्यक्षोपदेशाज्जगदैश्वर्यमप्य-स्तीति चेत्, न । आधिकारिकमण्डलाधिपतिर्ब्रह्मा हि तत्रोच्यते । गारुडे च—

"आत्मेत्येव परं देवमुपास्य हरिमव्ययम् । केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचन । अत्रैव च स्थितिस्तेषामन्तरिक्षे तु केचन । केचित् स्वर्गे महर्लोके जने तपसि चापरे । केचित् सत्ये महाज्ञाना गच्छन्ति क्षीरसागरम् । तत्रापि क्रमयोगेन ज्ञानाधिक्यात्

अनुव्याख्यानम्

रूपेण तेनेति भवेदिहार्थः । भवत्यसावित्यणुशब्दमत्र विहाय वाक्यानि बहूनि दोषः ॥१०॥
अतो जगद्व्यापृतिमन्त एव ब्रह्मादयः पूर्णगुणाः क्रमेण । अमन्दमानन्दमजस्रमेव भुञ्जन्त आत्मीयमजात् समासते ॥११॥*॥

---

१ इदमर्धं हृषीकेशतीर्थीये हंसपादाङ्केन परस्तात् प्रवेशितम् । न तावदयं पूर्वं प्रच्युत इति पश्चान्निवेशित इति वक्तुं शक्यते । पूर्वार्धस्य चोत्तरपूर्वार्धेन तथोत्तरार्धस्य पूर्वोत्तरार्धेन गतार्थत्वात् । तथाऽपि पुराणे स्थलभेदेनोभय-विधोऽपि पाठः स्यात् । तत्प्रदर्शनाय चैवमत्र लिखितं भवेत् । २ प्र० पाठेऽत्राष्टममधिकरणम् । ३ "अन्यान्व्या-पारानाप्नोति" इति प्र. पाठः ।

भाष्यम्

**समीपगाः । सालोक्यं च सरूपत्वं सामीप्यं योगमेवं[1] च । इमामारभ्य सर्वत्र यावत्सु-क्षीरसागरे[2] । पुरुषोऽनन्तशयनः श्रीमान्नारायणाभिधः । मानुषा वर्णभेदेन तथैवा·ऽश्रमभेदतः । क्षितिपा मनुष्यगन्धर्वा देवाश्चै[3] पितरश्चिराः । आजानजाः कर्मजाश्च तात्त्विकाश्च शचीपतिः । रुद्रो ब्रह्मेति क्रमशस्तेषु चैवोत्तमोत्तमाः[4] । नित्यानन्दे च भोगे च ज्ञानैश्वर्यगुणेषु च । सर्वे शतगुणोद्रिक्ताः पूर्वस्मादुत्तरोत्तरम् । पूज्यन्ते चावरैस्ते तु सर्वपूज्यश्चतुर्मुखः। स्वजगद्व्यापृतिस्तेषां पूर्ववत् समुदीरिता । सयुजः परमात्मानं प्रविश्य च बहिर्गताः । तद्रूपान्[5] प्राकृतांश्चापि विना भोगांस्तु कांश्चन । भुञ्जते मुक्तिरेवं ते विस्पष्टं समुदाहृता " इति ॥*॥**

अनुव्याख्यानम्

**नमो नमोऽशेषविशेषपूर्णगुणैकधाम्ने पुरुषोत्तमाय ।**
**भक्तानुकम्पादतिशुद्धसंविद्दात्रेऽनुपाधिप्रियसद्गुणात्मने ॥*॥**

**यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं**
**बट् तद् दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।**
**वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपु-**
**र्मध्वो यत्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ॥*॥**

**निश्शेषदोषरहित कल्याणाखिलसद्गुण[6] ।**
**भूतिस्वयम्भुशर्वादिवन्द्यं त्वां नौमि मे प्रियम् ॥*॥**

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीमद्ब्रह्मसूत्रानुव्याख्याने
चतुर्थोऽध्यायः

---

**॥ इत्यनुव्याख्यानं सम्पूर्णम् ॥**

---

१ **"योग एव च"** इति प्र. पाठः । प्राचीनपाठे योगं सायुज्यमेव च गच्छन्ति । २ इमां पृथिवीमारभ्य सुक्षीर-सागरे यावत् । स्विति क्षीरसागरेऽपि श्वेतद्वीपाख्यं सुखात्मकं मुक्तस्थानमाह । यावत्सु नारायणोऽस्ति सालोक्या-दिदस्तावत्सु स्थानेष्विति च व्याचक्षते । ३ अत्र **"दैवाश्च"** इति पाठः स्यादिति भाति । यद्यप्यत्र प्राचीन-कोशेष्वपि सर्वत्र देवा इत्येव पठ्यते । न दैवा इति । हृषीकेशतीर्थीयं तु गलितमिति न निर्णायकम् । तथाऽपि अर्थस्वारस्यात् , ग्रन्थान्तरसंवादाच्च देवसम्बन्धिनो दैवा गन्धर्वा इत्यर्थस्वारस्यम् । "भूपा मानुषगन्धर्वा दैवाः पितर एव च " इति गीतातात्पर्यसंवादश्च दैवा इति वक्तव्ये देवा इति शृङ्गस्खलनपि सम्भाव्यते । ४ **"उत्तरो-त्तराः"** ५ **"चिद्रूपान्"** इति प्र. पाठौ । ६ **"कल्याणाशेषसद्गुण"** इति **"कल्याणाखिलसद्गुणम्"** इति च क्वचित् ।

भाष्यम्

## ॥ विकारावर्ति च तथा हि दर्शयति ॥२०॥

विकारवर्ती[1] व्यापारो मुक्तानां न विद्यते। "इमं मानवमावर्तं नाऽवर्तन्ते" इति हि श्रुतिः[2]। वाराहे च—

"स्वाधिकारेण वर्तन्ते देवा मुक्तावपि स्फुटम्। बलिं हरन्ति मुक्ताय विरिञ्चाय च पूर्ववत्। सब्रह्मकास्तु ते देवा विष्णवे च विशेषतः। न विकाराधिकारस्तु मुक्तानामन्य एव तु। विकाराधिकृता ज्ञेया ये नियुक्तास्तु विष्णुना" इति ॥*॥

॥*॥ इति सप्तममधिकरणम्[3] ॥*॥

## ॥ स्थितिमाह दर्शयतश्चैवं प्रत्यक्षानुमाने ॥२१॥

"एतत् साम गायन्नास्ते" इत्युच्यते। तत्राऽनन्दादीनां वृद्धिर्ह्रासश्च न विद्यते। एकप्रकारेणैव[4] सर्वदा स्थितिः।

"स एष एतस्मिन् ब्रह्मणि सम्पन्नो न जायते न म्रियते न हीयते न वर्धते स्थित एव सदा भवति दर्शन्नेव ब्रह्म दर्शन्नेवाऽत्मानं तस्यैवं दर्शतो नाऽपत्तिर्न विपत्तिः" इति ह्याह[5] जाबालश्रुतौ। "यत्र गत्वा न म्रियते यत्र गत्वा न जायते। न हीयते यत्र गत्वा यत्र गत्वा न वर्धते" इति मोक्षधर्मे।

विद्वत्प्रत्यक्षात् कारणाभावलिङ्गाच्च। ब्रह्मवैवर्ते च—

"न ह्रासो नच वृद्धिर्वा मुक्तानां विद्यते क्वचित्। विद्वत्प्रत्यक्षसिद्धत्वात् कारणाभावतोऽनुमा। हरेरुपासना चात्र सदैव सुखरूपिणी। नतु साधनभूता सा सिद्धिरेवात्र सा यतः" इति ॥*॥

## ॥ भोगमात्रसाम्यलिङ्गाच्च ॥२२॥

नच भोगविशेषादिविरोधः।

"एतमानन्दमयमात्मानमनुविश्य न जायते न म्रियते न ह्रसते न वर्धते यथाकामं चरति यथाकामं पिबति यथाकामं रमते यथाकाममुपरमते" इति भोगमात्रसाम्यलिङ्गात्। "अवृद्धिह्रासरूपत्वं मुक्तानां प्रायिकं भवेत्। कादाचित्कविशेषस्तु नैव तेषां निषिद्ध्यते" इति च कौर्मे[6]। "प्रवाहतस्तु वृद्धिर्वा ह्रासो वा नैव कुत्रचित्। नाप्रियं किञ्चिदपि तु मुक्तानां विद्यते क्वचित्। कुत एव तु दुःखं स्यात् सुखमेव सदोदितम्। भोगानां तु विशेषेषु[7] वैचित्र्यं लभ्यते क्वचित्" इति च नारायणतन्त्रे[8]॥*॥

॥*॥ इत्यष्टममधिकरणम्[9] ॥*॥

---

१ "विकारावर्तिव्यापारः" इति प्र. पाठः। "विकारावर्ती" इति च क्वचित्। २ "इति श्रुतिः" इति प्र. पाठः। ३ प्र. पाठेऽत्र नवममधिकरणम्। ४ "किन्त्वेकप्रकारेणैव" ५ "इत्याह" ६ इति कौर्मे" ७ "विशेषे तु" ८ "इति नारायणतन्त्रे" इति प्र. पाठाः। ९ प्र. पाठेऽत्र दशममधिकरणम्।

भाष्यम्

॥ अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥२३॥

"नच पुनरावर्तते नच पुनरावर्तते", "सर्वान् कामानाप्त्वाऽमृतः समभवत्[1]" इत्यादिश्रुतिभ्यः ॥*॥

॥*॥ इति नवमम[2]धिकरणम् ॥*॥

यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं
षट् तद् दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपु-
र्मध्वो[3] यत्तु तृतीयमेतदमुना भाष्यं कृतं केशवे ॥*॥

[4]ज्ञानानन्दादिभिः सर्वैर्गुणैः पूर्णाय विष्णवे ।
नमोऽस्तु गुरवे नित्यं सर्वथाऽतिप्रियाय मे ॥*॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीकृष्णद्वैपायनकृतब्रह्मसूत्रभाष्ये
चतुर्थोऽध्यायः[5]

---

( एतदध्याये सूत्राणि—८० । अधि[6]करणानि-३७ । आदित आहत्य[7] सूत्राणि—५६२ । अधि[8]करणानि—२०३ )

॥ इति ब्रह्मसूत्रभाष्यम् ॥

*

---

१ "अमृतः समभवत् समभवत्" इति प्र.पाठः । २ प्र. पाठेऽत्रैकादशमधिकरणम् । ३ "मध्वो यत्तु तृतीयकं कृतमिदं भाष्यं हरौ तेन हि" इति प्र. पाठः । ४ प्र. पाठेऽयं श्लोकः "यस्य त्रीणि" इति श्लोकात् पूर्वं पठ्यते । "भाष्यं हरौ तेन हि" इत्यतः परं चायमेकः प्र. पाठेऽधिकः श्लोकपाठः—"नित्यानन्दो हरिः पूर्णो नित्यदा प्रीयतां मम । नमस्तस्मै नमस्तस्मै नमस्तस्मै च विष्णवे" इति । ५ अत्र ग्रन्थान्ते हृषीकेशतीर्थीयकोश एतानि सङ्ग्रहवाक्यानि पठ्यन्ते– "श्रुतिर्नाम समुद्दिष्टं लिङ्गं तल्लक्षणं स्मृतम् । पदानि निरपेक्षाणि वाक्यं प्रकरणं तथा । एकस्य प्रतिपत्त्यङ्गवचनं स्थानमुच्यते । अन्यत्र तत्समोक्तिस्तु समाख्या स्थानमेव च । अध्यायादिप्रबन्धस्तु प्रभेदा आगमस्य च । " "येषां नैतन्नापरं किञ्चिदेकं ब्रह्मणस्पते देहि तेभ्यः कदाचित् । अथो शमेनोपरता मनुष्या ये धर्मिणो ब्रूहि तेभ्यः सदा नः । " "अमौनमपरोक्षज्ञानम् । मौनं निदिध्यासनम् । मौनयुक्तो मुनिः।" इति । ६ प्र. पाठेऽधिकरणानि ३५ । ७ प्र. पाठे ब्रह्मसूत्राण्याहत्य ५६४ भवन्ति । ८ प्र. पाठेऽधिकरणानि २२३ ।

# सर्वशास्त्रार्थसङ्ग्रहः

ॐ ॥ विष्णुरेव विजिज्ञास्यः सर्वकर्ताऽऽगमोदितः ।
समन्वयादीक्षतेश्च पूर्णानन्दोऽन्तरः खवत् ॥१॥

प्रणेता ज्योतिरित्याद्यैः प्रसिद्धैरन्यवस्तुषु ।
उच्यते विष्णुरेवैकः सर्वैः सर्वगुणत्वतः ॥२॥

सर्वगोऽत्ता नियन्ता च दृश्यत्वाद्युज्झितः सदा ।
विश्वजीवान्तरत्वाद्यैर्लिङ्गैः सर्वैर्युतः स हि ॥३॥

सर्वाश्रयः पूर्णगुणः सोऽक्षरः सन् हृदब्जगः ।
सूर्यादिभासकः प्राणप्रेरको दैवतैरपि ।
ज्ञेयो न वेदैः शूद्राद्यैः कम्पकोऽन्यश्च जीवतः ॥४॥

पतित्वादिगुणैर्युक्तस्तदन्यत्र च वाचकैः ।
मुख्यतः सर्वशब्दैश्च वाच्य एको जनार्दनः ॥५॥

अव्यक्तः [2]कर्मवाच्यैश्च वाच्य एकोऽमितात्मकः ।
अवान्तरं कारणं च प्रकृतिः शून्यमेव च ॥६॥

इत्याद्यन्यत्र नियतैरपि मुख्यतयोदितः ।
शब्दैरतोऽनन्तगुणो यच्छब्दा योगवृत्तयः ॥७॥

॥*॥ प्रथमोऽध्यायः ॥*॥

श्रौतस्मृतिविरुद्धत्वात् स्मृतयो न गुणान् हरेः ।
निषेद्धुं शक्नुयुर्वेदा नित्यत्वान्मानमुत्तमम् ॥८॥

---

१ प्र. पाठेऽत्राऽदौ भाष्यस्थमाद्यपद्यं पठ्यते— **"नारायणं गुणैः सर्वैरुदीर्णं दोषवर्जितम् । ज्ञेयं गम्यं गुरूंश्चापि नत्वा सूत्रार्थ उच्यते"** इति । ततः परं **"विष्णुरेव"** इत्यादि । अत्र विष्णुरेवेत्येव मङ्गलवाक्यं प्राचीनपाठे । तथाह्यानन्दमालायाम्—"मध्वदेवोऽनेनैव भाष्यवाक्येन स्वात्मनोऽभीष्टदेवतां प्रणम्य प्रसादयन्नभिष्टुवन् ध्यायति." इति । २ **"कर्मवाक्यैश्च"** इति कोशान्तरे पाठः । "कर्म वाच्यं येषां तैः" इति तत्त्वमञ्जरी । "वसन्तादिभिरन्यैश्च वाक्यैः" इति चाऽनन्दमाला ।

देवतावचनान्नाऽपो वदन्तीत्यादिना वचः ।
नायुक्तवाद्यसन्नैव कारणं दृश्यते क्वचित् ॥९॥
असज्जीवप्रधानादिशब्दा ब्रह्मैव नापरम् ।
वदन्ति कारणत्वेत क्वापि पूर्णगुणो हरिः।
स्वातन्त्र्यात् सर्वकर्तृत्वान्नायुक्तं तद् वदेच्छ्रुतिः ॥१०॥
भ्रान्तिमूलतया सर्वसमयानामयुक्तितः ।
न तद्विरोधाद् वचनं वैदिकं शङ्क्यतां व्रजेत् ॥११॥
आकाशादि समस्तं च तज्जं तेनैव लीयते ।
सोऽनुत्पत्तिलयः कर्ता जीवस्तद्वशगः सदा ।
तदाभासो हरिः सर्वरूपेष्वपि समः सदा ॥१२॥
मुख्यप्राणश्चेन्द्रियाणि देहश्चैव तदुद्भवाः ।
मुख्यप्राणवशे सर्वं स विष्णोर्वशगः सदा ॥१३॥
सर्वदोषोज्झितस्तस्माद् भगवान् पुरुषोत्तमः ।
उक्ता गुणाश्चाविरुद्धास्तस्य वेदेन सर्वथा ॥१४॥

॥*॥ द्वितीयोऽध्यायः ॥*॥

शुभेन कर्मणा स्वर्गं निरयं च विकर्मणा ।
मिथ्याज्ञानेन च तमो ज्ञानेनैव परं पदम् ।
याति तस्माद् विरक्तः सन् ज्ञानमेव समाश्रयेत् ॥१५॥
सर्वावस्थाप्रेरकश्च सर्वरूपेष्वभेदवान् ।
सर्वदेशेषु कालेषु स एकः परमेश्वरः ।
तद्भक्तितारतम्येन तारतम्यं विमुक्तिगम् ॥१६॥
सच्चिदानन्द आत्मेति मानुषैस्तु सुरेश्वरैः ।
यथाक्रमं बहुगुणैर्ब्रह्मणा त्वखिलैर्गुणैः ॥१७॥
उपास्यः सर्ववेदैश्च सर्वैरपि यथाबलम् ।
ज्ञेयो विष्णुर्विशेषस्तु ज्ञाने स्यादुत्तरोत्तरम् ॥१८॥

---

१ "देवतावचनादापो वदन्तीत्यादिकं वचः" इति प्र. पाठः । प्राचीनपाठस्य त्वयमर्थः—अचेतनत्वादापो न वदन्तीत्यादिना हेतुना वेदवचो नायुक्तवादि भवति । देवतावचनाद्धेत्वसिद्धेरिति । तथाचाऽनन्दमाला—"देवतावक्तृकं हि तद् वचनम् । देवतानामेव वक्तृत्वमिति हि विद्वद्वचनम् । देवताविषयं ह्यबादिशब्दैर्मुख्यतो वचनम् । इत्यादिना विषयविभागन्यायेन निरूप्यमाणे सति वेदवचो नायुक्तार्थं वक्ति" इत्यादि । २ "तदुद्भवः" ३ "सर्वेशः" इति प्र. पाठौ । ४ "मानुषैश्च" इति प्र. पाठः । "तुशब्दात् पूर्णत्वं नाम वैलक्षण्यं गुणानां स्मर्तव्यम्" इत्यानन्दमाला ।

सर्वेऽपि पुरुषार्थाः स्युर्ज्ञानादेव न संशयः ।
न लिप्यते ज्ञानवांश्च सर्वदोषैरपि क्वचित् ॥१९॥
गुणदोषैः सुखस्यापि वृद्धिह्रासौ विमुक्तिगौ ।
नृणां सुराणां मुक्तौ तु सुखं क्लृप्तं यथाक्रमम् ॥२०॥
॥*॥ तृतीयोऽध्यायः ॥*॥

विष्णुर्ब्रह्म तथाऽऽदातेत्येवं नित्यमुपासनम् ।
कार्यमापद्यपि ब्रह्म तेन यात्यपरोक्षताम् ॥२१॥
प्रारब्धकर्मणोऽन्यस्य ज्ञानेन स्यात् परिक्षयः ।
अनिष्टस्योभयस्यापि सर्वस्यान्यस्य भोगतः ॥२२॥
उत्तरेषूत्तरेष्वेवं यावद् वायुं विमुक्तिगाः ।
प्रविश्य भुञ्जते भोगांस्तदन्तर्बहिरेव वा ॥२३॥
वायुर्विष्णुं प्रविश्यैव भोगश्चैवोत्तरोत्तरम् ।
उत्क्रम्य मानुषा मुक्तिं यान्ति देहक्षयात् सुराः ॥२४॥
अर्चिरादिपथा वायुं प्राप्य तेन जनार्दनम् ।
यान्त्युत्तमा नरोच्चाद्या ब्रह्मलोकात् सहामुना ॥२५॥
यथासङ्कल्पभोगाश्च चिदानन्दशरीरिणः ।
जगत्सृष्ट्यादिविषयं महासामर्थ्यमश्नुते ॥२६॥
यथेष्टशक्तिमन्तश्च विना स्वाभाविकोत्तमान् ।
अनन्यवशगाश्चैव वृद्धिह्रासविवर्जिताः ।
दुःखादिरहिता नित्यं मोदन्तेऽविरतं सुखम् ॥२७॥
॥*॥ चतुर्थोऽध्यायः ॥*॥

पूर्णप्रज्ञेन मुनिना सर्वशास्त्रार्थसङ्ग्रहः ।
कृतोऽयं प्रीयतां तेन परमात्मा रमापतिः ॥२८॥
नमो नमोऽशेषदोषदूर पूर्णगुणात्मने ।
विरिञ्चशर्वपूर्वेड्य वन्द्याय श्रीवराय ते ॥२९॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचितः
सर्वशास्त्रार्थसङ्ग्रहः[3]
समाप्तः

---

॥ इति सूत्रप्रस्थानम् ॥

---

१"ज्ञानादेव परिक्षयः" २"एवम्" इति प्र. पाठौ । ३ अयमेव च ग्रन्थान्तरेषु 'अणुभाष्यम्', 'अणुवेदान्तः' 'सङ्ग्रहभाष्यम्', 'भाष्यसङ्ग्रहः' इति च व्यपदिश्यते ।

---

*प्रचलितपाठे 'युक्तेश्च' इति सूत्रमधिकम् । २. ३. १९

---

*अतः परं प्रचलितपाठे "स्मरणाच्च" इत्यधिकम्। ३. १. २३